ऽव्याहृतयः । नवेमे पुरुषे प्राणास्तदेनन्द्वितीयञ्जनय-
त्याश्रावणम्प्रत्याश्रावणः सा प्रतिष्ठाथ यद्देवादः
सृष्टौ जन्मोच्यते तदेनन्तृतीयञ्जनयति पत्नीसंयाजा
ऽएव तत्र प्रतिष्ठा ॥ ३ ॥ त्रिर्हि वै पुरुषो जायते ।
एवमेवैनमेतद्यज्ञात्त्रिर्जनयति तासामेकादशानान्त्रिः प्रथमा-
मन्वाह त्रिरुत्तमाम् ॥ ४ ॥ ताः पञ्चदश सामिधेन्यः ।
द्वावाघारौ[1] पञ्च प्रयाजा[2] ऽइडा त्रयोऽनुयाजाः सूक्त-
वाकश्च शम्योर्वाकश्च तास्त्रयोदशाहुतयोऽथ यद्देवादः
पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥ ५ ॥ ताः
पञ्चदशाहुतयः । तासाम्पञ्चदशानामाहुतीनामेता ऽअनु-
वाक्या ऽएताः पञ्चदश सामिधेन्य ऽएतासामनुवाक्या-
नामेता याज्या[3] य ऽएवात्र मन्त्रो यो निगदस्तद्याज्यारूप-
मेतेनो हास्यैता ऽआहुतयोऽनुवाक्यवत्यो भवन्त्येताभिः
सामिधेनीभिरेताभिराहुतिभिरेता ऽअनुवाक्या[4] याज्यवत्य-
श्चाहुतिमत्यश्च[5] भवन्ति ॥ ६ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) वह्नेः कश्चिद्देशमारभ्य देशान्तरपर्यन्तं समन्त्रकमाज्यधारया आहरणमाघारः ।

(२) प्रकर्षेण इज्यन्ते देवता एभिस्ते प्रयाजाः "समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहा यजति" ( तै० सं० २।६।१ ) इति प्रयाजाः ।

(३) इज्यते अनयेति व्युत्पत्त्या 'ये यजामहे' इति पूर्विका वषट्कारान्ता हविःप्रदानार्था ऋक् याज्याशब्देनोच्यते ।

(४) पुरः यागात्पूर्वं देवतामनुकलयितुं या ऋक् अनूच्यते सा पुरोऽनुवाक्या अनुवाक्या इति चोच्यते ।

(५) 'वत्त्य०' इति 'ज' पुस्तके ।

[ याज्यानुवाक्ययोश्छन्दोविशेषत्वविधानपूर्वकं स्तवनम् ]

गायत्रीमनुवाक्यामन्वाह । त्रिपदा वै गायत्री त्रय ऽइमे लोका ऽइमानेवैतल्लोकान्देवाः प्प्रत्यष्ठापयन् ॥ १ ॥ अथ त्रिष्टुभा यजति । चतुष्पदा वै त्रिष्टुप्चतुष्पादाः पशवस्तत्पशूनेवैतदेषु लोकेषु प्प्रतिष्ठितेषु देवाः प्प्रत्यष्ठापयन् ॥ २ ॥ द्व्यक्षरो वषट्कारः । द्विपाद्वै पुरुषस्तत्पुरुषमेवैतद्द्विपादमेषु पशुषु प्प्रतिष्ठितेषु देवाः प्प्रत्यष्ठापयन् ॥३॥ सोऽयन्द्विपात्पुरुषः । पशुषु प्प्रतिष्ठित ऽएवमेवैष ऽएतल्लोकान्प्रतिष्ठापयति लोकेषु प्प्रतिष्ठितेषु पशून्प्रतिष्ठापयति पशुषु प्प्रतिष्ठितेष्वात्मानम्प्रतिष्ठापयत्येवमेष पुरुषः पशुषु प्प्रतिष्ठितो य ऽएवं विद्वान्न्यजते ॥ ४ ॥ अथ यद्वषट्कृते जुहोति । एष वै वषट्कारो य ऽएष तपति स ऽएष मृत्युस्तदेनमुपरिष्टान्न्मृत्योः संस्करोति तदेनमतो जनयति स ऽएतम्मृत्युमतिमुच्यते यज्ञो वा ऽअस्यात्मा भवति तद्यज्ञ ऽएव भूत्वैतन्न्मृत्युमतिमुच्यत ऽएतेनो हास्य सर्वे यज्ञक्रतव ऽएतम्मृत्युमतिमुक्ताः ॥ ५ ॥ * अथ यामेतामाहुतिञ्जुहोति । एषा ह वा ऽअस्याहुतिरमुष्मिँल्लोक ऽआत्मा भवति स यदैवंविदस्माल्लोकात्प्रैत्यथैनमेषाहुतिरेतस्य पृष्ठे सत्याह्वयत्येह्यहं वै त ऽइहात्मास्मीति तद्यदाह्वयति तस्मादाहुतिर्न्नाम ॥ ६ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



* शतम् ५६०० ।

[ आघारौ स्तोतुमाख्यायिकया तत्सृष्टिप्रतिपादनम् ]

ब्रह्म वा ऽइदमग्र ऽआसीत् । तद्देवानसृजत तद्देवान्त्सृष्ट्वैषु लोकेषु व्यारोहयदस्मिन्नेव लोकेऽग्निं वायुमन्तरिक्षे दिव्येव सूर्य्यम् ॥ १ ॥ अथ येऽत ऽऊर्द्ध्वा लोकाः । तद्या ऽअत ऽऊर्द्ध्वा देवतास्तेषु ता देवता व्यारोहयत्स यथा हैवेम ऽआविर्ल्लोका ऽइमाश्च देवता ऽएवमु हैव त ऽआविर्ल्लोकास्ताश्च देवता येषु ता देवता व्यारोहयत् ॥ २ ॥ अथ ब्रह्मैव परार्द्धमगच्छत् । तत्परार्द्धङ्गत्वैक्षत कथन्न्विमाँल्लोकान्न्प्रत्यवेयामिति तद्द्वाभ्यामेव प्रत्यवैद्रूपेण चैव नाम्ना च स यस्य कस्य च नामास्ति तन्नाम यस्यो ऽअपि नाम नास्ति यद्वेद रूपेणेदꣳ रूपमिति तद्रूपमेतावद्वा ऽइदं यावद्रूपञ्चैव नाम च ॥ ३ ॥ ते हैते ब्रह्मणो महती ऽअभ्वे । स यो हैते ब्रह्मणो महती ऽअभ्वे वेद महद्धैवाभ्वम्भवति ॥ ४ ॥ ते हैते ब्रह्मणो महती यक्षे । स यो हैते ब्रह्मणो महती यक्षे वेद महद्धैव यक्षम्भवति तयोरन्न्यतरज्ज्यायो रूपमेव यद्ध्यपि नाम रूपमेव तत्स यो हैतयोर्ज्यायो वेद ज्यायान्न्ह तस्माद्भवति यस्माज्ज्यायान्न्बुभूषति ॥ ५ ॥ मर्त्या ह वा ऽअग्रे देवा ऽआसुः । स यदैव ते ब्रह्मणापुरथामृता ऽआसुः स यम्मनस ऽआघारयति मनो वै रूपम्मनसा हि वेदेदꣳ रूपमिति तेन रूपमाप्नोत्यथ यं वाच ऽआघारयति वाग्वै नाम वाचा हि नाम गृह्णाति तेनो नामाप्नोत्येतावद्वा ऽइदꣳ सर्वं यावद्रूपञ्चैव

नाम च तत्सर्वमाप्नोति सर्वं वा ऽअक्षय्यमेतेनो हास्याक्षय्यꣳ सुकृतम्भवत्यक्षय्यो लोकः ॥ ६ ॥ तद्वा ऽअदः ऽआग्नेय्यामिष्ट्वा ऽउच्यते । यथा तदृषिभ्यो यज्ञः प्रारोचत तं व्यथातन्वत तद्यजन्तन्त्वानानृषीन्गन्धर्वा ऽउपनिषेदुस्ते ह स्म सन्निदधतीदं वा ऽअत्यरीरिचन्निदमूनमक्रन्निति स यदेषां यज्ञः सन्तस्थेऽथैनाँस्तद्दर्शयाञ्चक्रुरिदं वा ऽअत्यरीरिचतेदमूनमकर्त्तेति ॥ ७ ॥ स यदतिरेचयाञ्चक्रुः । यथा गिरिरेवन्तदास यदूनञ्चक्रुर्यथा श्वभ्राः प्रदरा एवन्तदास ॥ ८ ॥ स यत्र शंय्वोराह । तदभिमृशति 'यँज्ञ नमश्च त ऽउप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्वे'ति स यदतिरेचयति तन्नमस्कारेण शमयत्यथ यदूनङ्करोत्युप चेति तेन तदुन्न्यूनम्भवति यज्ञस्य शिवे सन्तिष्ठस्वेति यद्वै यज्ञस्यान्न्यूनातिरिक्तन्तच्छिवन्तेन तदुभयꣳ शमयति स्विष्टे मे सन्तिष्ठस्वेति यद्वै यज्ञस्याह्न्यूनातिरिक्तन्तत्स्विष्टन्तेनो तदुभयꣳ शमयत्येवमु हास्यैतेन यज्ञेनान्न्यूनातिरिक्तेनैवेष्टम्भवति य ऽएवं विद्वानेवमभिमृशति तस्मादेवमेवाभिमृशेत्ते ह ते गन्धर्वा ऽआसुः शूर्पं व्यवमान्कृषिरुद्वालवान्धानान्तर्वान् ॥ ९ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



(१) शु० य० सं० अ० २ क० १९ ।

[ दर्शपूर्णमासनामात्मना आघारस्तुतिः, अधिदैवमध्यात्मभेदेन दर्शपूर्णमासप्रतिपादनञ्च ]

एष वै पूर्ण्णमाः । य ऽएष तपत्यहरहर्ह्येवैष पूर्ण्णोऽथैष ऽएव दर्शो यच्चन्द्रमा ददृश ऽइव ह्येषः ॥ १ ॥ अथो ऽइतरथाहुः । एष ऽएव पूर्ण्णमा यच्चन्द्रमा ऽएतस्य ह्यनु पूरणम्पौर्ण्णमासीत्याचक्षतेऽथैष ऽएव दर्शो य एष तपति ददृश ऽइव ह्येषः ॥ २ ॥ इयमेव पूर्ण्णमाः । पूर्ण्णेव हीयमसावेव द्यौर्दर्शो ददृश ऽइव ह्यसौ द्यौः ॥ ३ ॥ रात्रिरेव पूर्ण्णमाः । पूर्ण्णेव हीयꣳ रात्रिरहरेव दर्शो ददृश ऽइव हीदमहरेषा नु देवत्रा दर्शपूर्ण्णमासयोर्म्मीमाꣳसा ॥ ४ ॥ अथाध्यात्मम् । उदान ऽएव पूर्ण्णमा ऽउदानेन ह्ययम्पुरुषः पूर्य्यत ऽइव प्प्राण ऽएव दर्शो ददृश ऽइव ह्ययम्प्राणस्तदेतावन्नादश्चान्नप्प्रदश्च दर्शपूर्ण्णमासौ ॥ ५ ॥ प्राण ऽएवान्नादः । प्राणेन हीदमन्नमद्यत ऽउदान ऽएवान्नप्प्रद ऽउदानेन हीदमन्नम्प्रदीयते स यो हैतावन्नादश्चान्नप्प्रदश्च दर्शपूर्ण्णमासौ वेदान्नादो हैव भवति प्प्र हास्म्मा ऽअन्नाद्यन्दीयते ॥ ६ ॥ मन ऽएव पूर्ण्णमाः । पूर्ण्णमिव हीदम्मनो व्वागेव दर्शो ददृश ऽइव हीयं व्वाक्तदेतावध्यात्मम्प्रत्यक्षन्दर्शपूर्ण्णमासौ स यदुपवसथे व्व्रतोपायनीयमश्नाति तेनैतावध्यात्मम्प्रत्यक्षन्दर्शपूर्ण्णमासौ प्प्रीणाति यज्ञेन प्प्रातर्ह्हैवो ॥७॥ तदाहुः । यन्न पूर्ण्णमासायेति हविर्ग्गृह्यते न दर्शायेति हविर्ग्गृह्यते न पूर्ण्णमासायानुब्ब्रूहि न दर्शायानुब्ब्रूहि न पूर्ण्णमासं यज न दर्श

ऽयजेत्यथ केनास्य दर्शपूर्ण्णमासाविष्टौ भवत ऽइति स यन्मनस ऽआघारयति मनो वै पूर्ण्णमास्तेन पूर्ण्णमासं ऽयजत्यथ यं वाच ऽआघारयति वाग्वै दर्शस्तेनो दर्श ऽयजत्येतेनो हास्य दर्शपूर्ण्णमासाविष्टौ भवतः ॥ ८ ॥ तद्धैके । चरू निर्व्वपन्ति पौर्ण्णमास्याᳶ सरस्वतेऽमावास्यायाᳶ सरस्वत्या ऽएतत्प्रत्यक्षन्दर्शपूर्ण्णमासौ यजामह ऽइति वदन्तस्तदु तथा न कुर्य्यान्मनो वै सरस्वान्वाक्सरस्वती स यदेवैतावाघारावाघारयति तदेवास्य दर्शपूर्ण्णमासाविष्टौ भवतस्तस्मादेतौ चरू न निर्व्वपेत् ॥ ९ ॥ तदाहुः । आगूर्त्ती वा ऽएष भवति यो दर्शपूर्ण्णमासाभ्यां यजते पौर्ण्णमासेन हीष्ट्वा वेदामावास्येन यक्ष्य ऽइत्यामावास्येनेष्ट्वा वेद पुनः पौर्ण्णमासेन यक्ष्य ऽइति स ऽआगूर्त्त्येवामुँल्लोकमेति यदामुँल्लोकमेति कथमनागूर्त्ती भवतीति स यदेवैता ऽउभयत्राघारावाघारयति तदेवास्य दर्शपूर्ण्णमासौ सन्तिष्ठेते स सᳶस्थितयोरेव दर्शपूर्ण्णमासयोरथामुँल्लोकमेति तथानागूर्त्ती भवति ॥ १० ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ ११९ ॥

[ दर्शपूर्णमासयोरश्वमेधात्मना स्तुतिः ]

अपि ह वा ऽएतर्हि । देवेभ्योऽश्वमेधमालभन्ते तदाहुः प्राकृतोऽश्वमेध ऽइतीतर ऽइन्नूनः स तद्वा ऽएष

ऽएवाश्वमेधो यच्चन्द्रमाः ॥ १ ॥ तदाहुः । पदे पदेऽश्वस्य मेध्यस्याहुतिञ्जुह्वतीति स यत्सायम्प्रातरग्निहोत्रञ्जुहोति द्वे सायमाहुती जुहोती द्वे प्रातस्ताश्चतस्रऽआहुतयश्चतुष्पाद्वा ऽअश्वस्तदस्य पदे पद ऽएवाहुतिर्हुता भवति ॥ २ ॥ तदाहुः । विवृत्तेऽश्वस्येष्टिन्निर्वपतीत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैषऽएताꣳ रात्रिन्न पुरस्तान्न पश्चाद्ददृशे तदिमँल्लोकमागच्छति सोऽस्मिमँल्लोके विवर्त्तते ॥ ३ ॥ स यदामावास्येन यजते । विवृत्त ऽएवास्यैतदिष्टिन्निर्वपत्यथ यत्पौर्णमासेन यजतेऽश्वमेधमेवैतदालभते तमालभ्य देवेभ्यः प्रयच्छति सँवत्सरे वा ऽइतरमश्वमेधमालभन्त ऽएष वै मासः परिप्लवमानः सँवत्सरङ्करोति तदस्य सँवत्सरे सँवत्सर ऽएवाश्वमेध ऽआलब्धो भवति ॥ ४ ॥ तं वा ऽएतम् । मासि मास्येवाश्वमेधमालभन्ते स यो हैवं विद्वानग्निहोत्रञ्च जुहोति दर्शपूर्णमासाभ्याञ्च यजते मासि मासि हैवास्याश्वमेधेनेष्टम्भवत्येतदु हास्याग्निहोत्रञ्च दर्शपूर्णमासौ चाश्वमेधमभिसम्पद्येते ॥ ५ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ प्रणीतादीनां यज्ञशरीरावयवत्वेन सम्पत्तिकथनम् ]

शिरो ह वा ऽएतद्यज्ञस्य यत्प्रणीताः । स यत्प्रणीताः प्रणयति शिर ऽएवैतद्यज्ञस्य संस्करोति स

विद्याच्छिर ऽएव म ऽएतत्संस्क्रियत ऽइति ॥ १ ॥ प्राण ऽएवास्येद्ध्मः । प्प्राणेन हीदꣳ सर्वमिद्धं य्यत्प्राणभृन्निमिषद्यदेजति स विद्यादहमेवैष ऽइद्ध्म ऽइति ॥ २ ॥ अनूकमेवास्य सामिधेन्न्यः । तस्म्मात्ता ब्ब्रूयात्सन्तन्न्वन्निव मेऽनुब्ब्रूहीति सन्ततमिव हीदमनूकम्मनश्च्चैवास्य व्वाक्चाघारौ सरस्वाँश्च सरस्वती च स विद्यान्मनश्च्चैव मे व्वाक्चाघारौ सरस्वाँश्च सरस्वती चेति ॥ ३ ॥ पञ्च प्प्रयाजाः । इम ऽएवास्य ते शीर्षण्ण्याः पञ्च प्प्राणा मुखमेवास्य प्प्रथमः प्प्रयाजो दक्षिणा नासिका द्वितीयः सव्व्या नासिका तृतीयो दक्षिणः कर्ण्णश्च्चतुर्थः सव्व्यः कर्ण्णः पञ्चमोऽथ यच्चतुर्त्थे प्प्रयाजे समानयति तस्म्मादिदꣳ श्रोत्रमन्तरतः सन्तृण्णञ्चक्षुषी ऽआज्यभागौ स विद्याच्चक्षुषी ऽएव म ऽएताविति ॥ ४ ॥ अथ य ऽआग्ग्नेयः पुरोडाशः । अयमेवास्य स दक्षिणोऽर्द्धो हृदयमेवास्योपांशुयाजः स यत्तेनोपांशु चरन्ति तस्म्मादिदङ्गुहेव हृदयम् ॥ ५ ॥ अथ योऽग्नीषोमीयः पुरोडाशः । अयमेवास्य स ऽउत्तरोऽर्द्ध ऽऐन्द्रं व्वा सान्नाय्यमन्तराꣳ समेवास्य स्विष्टकृद्विषम्प्राशित्रम् ॥ ६ ॥ स यत्प्राशित्रमवद्यति । यथैव तत्प्रजापतेराविद्धन्निरकृन्तन्नेवमेवैतस्यैतद्यद्वेष्टितं य्यद्ग्रथितं य्यद्दरुण्ण्यन्तन्निष्कृन्तन्ति स विद्याद्यथैव तत्प्रजापतेराविद्धन्निरकृन्तन्नेवमेव म ऽइदं य्यद्वेष्टितं य्यद्ग्रथितं य्यद्दरुण्ण्यन्तन्निष्कृन्तन्तीति ॥ ७ ॥ उदरमेवास्येडा ।

तद्यथैवाद ऽइडायाᳫँ समवद्यन्त्येवमेवेदं विश्श्वरूपमन्न-मुदरे समवधीयते ॥ ८ ॥ त्रयोऽनुयाजाः । इम ऽएवास्य तेऽवाञ्चस्त्रयः प्प्राणा बाहू ऽएवास्य सूक्तवाकश्च शंय्योर्वाकश्च चत्त्वारः पत्नीसंय्याजाश्चतस्रो वै प्प्रतिष्ठा ऽऊरू द्वावष्ठीवन्तौ द्वौ पादावेवास्य समिष्टयजुः ॥ ९ ॥ ता ऽएकविᳫँशतिराहुतयः । द्वावाघारौ पञ्च प्प्रयाजा द्वावाज्यभागावाग्नेयः पुरोडाशस्तद्दशाग्नीषोमीय ऽउपाᳫँशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयोऽनुयाजाः सूक्तवाकश्च शंय्योर्वाकश्चाथ यदेवादः पत्नीसंय्याजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥ १० ॥ ता ऽएकविᳫँशतिराहुतयः । द्वादश वै मासाः सँवत्सरस्य पञ्चर्त्तवस्त्रयो लोकास्तद्विᳫँशतिरेष ऽएवैकविᳫँशो य ऽएष तपति सैषा गतिरेषा प्प्रतिष्ठा तदेताङ्गतिमेताम्प्रतिष्ठाङ्गच्छति ॥ ११ ॥ तद्ध स्मैतदारुणिराह । अर्द्धमासशो वा ऽअहममुनादित्येन स लोको भवामि तामहन्दर्शपूर्ण्णमासयोः सम्पदं वेदेति ॥ ११ ॥ तदाहुः । आत्मयाजी३ श्श्रेयाऽन्देवयाजी३ इत्यात्मयाजीति ह ब्ब्रूयात्स ह वा ऽआत्मयाजी यो वेदेदम्मेऽनेनाङ्गᳫँ संस्क्रियत ऽइदम्मेऽनेनाङ्गमुपधीयत ऽइति स यथाहिस्त्वचो निर्म्मुच्च्येतैवमस्म्मान्मर्त्याच्छरीरात्पाप्मनो निर्म्मुच्च्यते स ऽऋङ्मयो यजुर्म्मयः साममय ऽआहुतिमयः स्वर्ग्गँल्लोकमभिसम्भवति ॥ १३ ॥ अथ ह स देवयाजी यो वेद । देवानेवाहमिदं य्यजे देवान्त्सपर्य्यामीति स यथा श्श्रेयसे

पापीयान्बलिꣳ हरेद्वैश्यो वा राज्ञे बलिꣳ हरेदेवꣳ स स ह न तावन्तँल्लोकञ्जयति यावन्तमितरꣳ ॥ १४ ॥

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



[ दर्शपूर्णमासयागस्य विशिष्टफलसाधनताप्रतिपादनम् ]

सँवत्सरो यज्ञः । स यो ह वै सँवत्सरो यज्ञ ऽइति वेदान्ते हैवास्य सँवत्सरस्येष्टम्भवत्यथो यत्किञ्च सँवत्सरे क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ १ ॥ ऋतव ऽऋत्विजꣳ । स यो ह वा ऽऋतव ऽऋत्विज ऽइति वेदान्ते हैवास्यऽर्त्तूनामिष्टम्भवत्यथो यत्किञ्चऽर्त्तुषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ २ ॥ मासा हवीꣳषि । स यो ह वै मासा हवीꣳषीति वेदान्ते हैवास्य मासानामिष्टम्भवत्यथो यत्किञ्च मासेषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ३ ॥ अर्द्धमासा हविष्पात्राणि । स यो ह वा ऽअर्द्धमासा हविष्पात्राणीति वेदान्ते हैवास्यार्द्धमासानामिष्टम्भवत्यथो यत्किञ्चार्द्धमासेषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ४ ॥ अहोरात्रे परिवेष्ट्री । स यो ह वा ऽअहोरात्रे परिवेष्ट्री ऽइति वेदान्ते हैवास्याहोरात्रयोरिष्टम्भवत्यथो यत्किञ्चाहोरात्रयोꣳ क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ५ ॥ इयमेव प्रथमा सामिधेनी । अग्निर्द्वितीया वायु-

स्तृतीयान्तरिक्षञ्चतुर्त्थीं द्यौष्पञ्चम्म्यादित्यः षष्ठी चन्द्रमाः सप्तमी मनोऽष्टमी वाङ्नवमी तपो दशमी ब्रह्मैकादश्येता हि वा ऽइदᳩं सर्वᳩं समिन्धत ऽएताभिरिदᳩं सर्वᳩं समिद्धन्तस्मात्सामिधेन्यो नाम ॥ ६ ॥ स वै त्रिः प्रथमामन्वाह । स यत्प्रथममन्वाह प्राचीन्तेन दिशञ्जयति यद्द्वितीयन्दक्षिणान्तेन दिशञ्जयति यत्तृतीयमूर्द्ध्वामेव तेन दिशञ्जयति ॥ ७ ॥ त्रिर्वैवोत्तमामन्वाह । स यत्प्रथममन्वाह प्रतीचीन्तेन दिशञ्जयति यद्द्वितीयमुदीचीन्तेन दिशञ्जयति यत्तृतीयमिमामेव तेन प्रतिष्ठाञ्जयत्येवमु हाभिरिमाँल्लोकाञ्जयत्येता दिशः ॥ ८ ॥ ऋतमेव पूर्वं ऽआघारः । सत्यमुत्तरोऽव ह वा ऽऋतसत्ये रुन्द्धेऽथो यत्किञ्चऽर्त्तसत्याभ्याञ्जय्यᳩं सर्वᳩं हैव तज्जयति ॥ ९ ॥ त्विषिरेव प्रथमः प्रयाजः । अपचितिर्द्वितीयो यशस्तृतीयो ब्रह्मवर्चसञ्चतुर्त्थोऽन्नाद्यम्पञ्चमः ॥ १० ॥ स प्रथमम्प्रयाजमनुमन्त्रयेत । त्विषिमान्भूयासमित्यपचितिमान्भूयासमिति द्वितीयं यशस्वी भूयासमिति तृतीयम्ब्रह्मवर्चसी भूयासमिति चतुर्त्थमन्नादो भूयासमिति पञ्चमन्त्विषिमान्ह वा ऽअपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नादो भवति य ऽएवमेतद्वेद ॥ ११ ॥ एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः कᳩं स्विद्देवापरीषु महनागमिवाभिसᳩंसारन्दिदृक्षितारो य ऽएवमेतत्प्रयाजानां यशो वेदितेति ॥ १२ ॥ भूतमेव पूर्वं ऽआज्यभागः । भविष्यदुत्तरोऽव ह वै भूतञ्च भविष्यच्च

रुन्द्धेऽथो यत्किञ्च भूतेन च भविष्यता च जय्यꣳ सर्वꣳ हैव तज्जयति ॥ १३ ॥ ब्रह्माग्नेयः पुरोडाशः । स यो ह वै ब्रह्माग्नेयः पुरोडाश ऽइति वेदाव ह ब्रह्म रुन्द्धेऽथो यत्किञ्च ब्रह्मणा जय्यꣳ सर्वꣳ हैव तज्जयति ॥ १४ ॥ क्षत्रमुपाꣳशुयाजः । स यो ह वै क्षत्रमुपाꣳशुयाज ऽइति वेदाव ह क्षत्रꣳ रुन्द्धेऽथो यत्किञ्च क्षत्रेण जय्यꣳ सर्वꣳ हैव तज्जयति तद्यदुपाꣳशुयाजङ्कुर्वन्त्येके नैके तस्मादुच्चैश्चोपाꣳशु च क्षत्रायाचक्षते ॥ १५ ॥ विडुत्तरः पुरोडाशः । स यो ह वै विडुत्तरः पुरोडाश ऽइति वेदाव ह विशꣳ रुन्द्धेऽथो यत्किञ्च विशा जय्यꣳ सर्वꣳ हैव तज्जयति तद्यदाग्नेयश्च पुरोडाश ऽउपाꣳशुयाजश्च पूर्वौ भवतस्तस्मादुभे ब्रह्म च क्षत्रञ्च विशि प्रतिष्ठिते ॥ १६ ॥ राष्ट्रꣳ सान्नाय्यम् । स यो ह वै राष्ट्रꣳ सान्नाय्यमिति वेदाव ह राष्ट्रꣳ रुन्द्धेऽथो यत्किञ्च राष्ट्रेण जय्यꣳ सर्वꣳ हैव तज्जयति तद्यत्सन्नयन्त्येके नैके तस्माद्राष्ट्रꣳ सञ्चैति वि च ॥ १७ ॥ तपः स्विष्टकृत् । स यो ह वै तपः स्विष्टकृदिति वेदाव ह तपो रुन्द्धेऽथो यत्किञ्च तपसा जय्यꣳ सर्वꣳ हैव तज्जयति ॥ १८ ॥ लोकः प्राशित्रम् । स यो ह वै लोकः प्राशित्रमिति वेदाव ह लोकꣳ रुन्द्धेऽथो यत्किञ्च लोकेन जय्यꣳ सर्वꣳ हैव तज्जयति नो ह लवेन लोकाद्व्यथते लवेन ह वा ऽअमुष्मिँल्लोके लोकाद्व्यथन्तेऽथ य ऽएवं वेद न ह बहु चन पापङ्कृत्वा लोकाद्व्यथते ॥ १९ ॥ श्रद्धेडा ।

स यो ह वै श्रद्धेडेति वेदाव ह श्रद्धाꣳ रुन्द्धेऽथो यत्किञ्च श्रद्धया जय्यꣳ सर्वꣳ हैव तज्जयति ॥ २० ॥ अशनिरेव प्रथमोऽनुयाजः । ह्रादुनिर्द्वितीय ऽउल्कुषी तृतीयः ॥२१॥ स प्रथममनुयाजमनुमन्त्रयेत । अशन्यमुञ्जहीति यन्द्विष्याद्ध्रादुन्न्यमुञ्जहीति द्वितीयमुल्कुष्यमुञ्जहीति तृतीयम् ॥ २२ ॥ स य ऽएष क्षिप्रम्म्रियते । अशनिर्हं तमनुयाजो हन्त्यथ यो विस्रवन्मिमश्र ऽइव ह्रादुनिर्हं तमनुयाजो हन्त्यथ योऽभ्युष्टमिश्र ऽइवोल्ककुषी ह तमनुयाजो हन्ति ॥ २३ ॥ सैषा यज्ञमेनिः । एतया वै मेन्न्या देवा ऽअसुरान्पराभावयाञ्चक्रुस्तथो ऽएवैवंविद्यजमानः पाप्मानन्द्विषन्तम्भ्रातृव्यम्पराभावयति ॥ २४ ॥ स यदनुयाजान्तो यज्ञः स्यात् । अशन्यन्तः स्याद्ध्रादुन्न्यन्त ऽउल्कुष्यन्तस्तस्माद्वै देवानां यज्ञ ऽइडान्तो वैव शंय्वन्तो वा ॥ २५॥ प्रयाजैर्वै देवाः । स्वर्ग्गँल्लोकमायँस्तानसुरा ऽअन्वाजिगाꣳसँस्ताननुयाजैः प्रत्यौहँस्तद्यदनुयाजा ऽइज्यन्ते पाप्मानमेव तद्द्विषन्तम्भ्रातृव्यं यजमानः प्रत्यूहति ॥ २६ ॥ प्राणा वै प्रयाजाः । अपाना ऽअनुयाजास्तस्मात्प्रयाजाः प्राञ्चो हूयन्ते तद्धि प्राणरूपम्प्रत्यञ्चोऽनुयाजास्तदपानरूपमेता ह वै दर्शपूर्ण्णमासयोरुपसदो यदनुयाजास्तस्मात्त ऽउपसद्रूपेण प्रत्यञ्चो हूयन्ते ॥ २७ ॥ सꣳस्था सूक्तवाकः । स यो ह वै सꣳस्था सूक्तवाक ऽइति वेदाव ह सꣳस्थाꣳ रुन्द्धेऽथो यत्किञ्च सꣳस्थया जय्यꣳ सर्वꣳ हैव तज्जयति गच्छति वयसः सꣳस्थाम् ॥ २८ ॥

प्रतिष्ठा शँय्योर्वाकः । स यो ह वै प्प्रतिष्ठा शँय्योर्वाक ऽइति वेदाव ह प्प्रतिष्ठाᳪं रुन्द्धेऽथो यत्किञ्च प्प्रतिष्ठया जय्यᳪं सर्वᳪं हैव तज्जयति गच्छति प्प्रतिष्ठाम् ॥ २९ ॥ ते देवाः । एताम्पत्नीसँय्याजान्पश्चात्प्रय्यौहन्त मिथुनमेवैतदुपरिष्टाद्दधत प्प्रजात्त्यै तद्यत्पत्नीसंय्याजा ऽइज्यन्ते मिथुनमेवैतदुपरिष्टाद्धत्ते प्प्रजात्त्यै देवानाᳪं ह वै प्प्रजातिमनु प्प्रजायते मिथुनेन मिथुनेन ह प्प्रजायते य ऽएवमेतद्वेद ॥ ३० ॥ अन्नᳪं समिष्टयजुः । स यो ह वा ऽअन्नᳪं समिष्टयजुरिति वेदाव हान्नᳪं रुन्द्धेऽथो यत्किञ्चान्नेन जय्यᳪं सर्वᳪं हैव तज्जयति ॥ ३१ ॥ सँवत्सरो यजमानः । तमृतवो याजयन्ति वसन्त ऽआग्नीध्रस्तस्माद्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपङ्ग्रीष्मोऽद्ध्वर्युस्तप्त ऽइव वै ग्ग्रीष्मस्तप्तमिवाद्ध्वर्युर्न्निष्क्क्रामति वर्षा ऽउद्गाता तस्माद्यदा बलवद्वर्षति साम्म्न ऽइवोपब्दिः क्क्रियते शरद्ब्रह्मा तस्माद्यदा सस्यम्पच्च्यते ब्ब्रह्मण्ण्यवत्यः प्प्रजा ऽइत्त्याहुर्हेमन्तो होता तस्माद्धेमन्न्वषट्कृताः पशवः सीदन्त्येता ह वा ऽएनन्देवता याजयन्ति स यद्येनमैषावीरा याजयेयुरेता ऽएव देवता मनसा द्ध्यायेदेता हैवैनन्देवता याजयन्ति ॥ ३२ ॥ अथ हैषैव तुला । यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्यथ यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत तुलायाᳪं ह वा ऽअमुष्मिँल्लोक ऽआदधति यतरद्यᳪंस्यति तदन्न्वेष्ष्यति यदि साधु वासाधु वेत्यथ य ऽएवं वेदास्मिन्हैव लोके

तुलामारोहत्त्यत्त्यमुष्मिँल्लोके तुलाधानम्मुच्यते साधुकृत्त्या हैवास्य यच्छति न पापकृत्त्या ॥ ३३ ॥ [ अर्ध प्रपाठकः ५२ ]

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ अग्निहोत्रावयवोपासनाप्रकारः ]

व्वाग्घ वा ऽएतस्याग्निहोत्रस्याग्निहोत्री *। मन ऽएव व्वत्सस्तदिदम्मनश्च व्वाक्च समानमेव सन्नानेव तस्मात्त्समान्न्या रज्ज्वा व्वत्सञ्च मातरञ्चाभिदधति तेज ऽएव श्श्रद्धा सत्त्यमाज्ज्यम् ॥ १ ॥ तद्धैतज्जनको व्वैदेहः। याज्ञवल्क्यम्पप्रच्छ व्वेत्थाग्निहोत्रं ऱ्याज्ञवल्क्या३ ऽइति व्वेद सम्म्राडिति किमिति पय ऽएवेति ॥ २ ॥ यत्पयो न स्यात्। केन जुहुया ऽइति व्व्रीहियवाब्भ्यामिति यद्व्रीहियवौ न स्याताङ्केन जुहुया ऽइति या ऽअन्न्या ऽओषधय ऽइति यदन्न्या ऽओषधयो न स्युः केन जुहुया ऽइति या ऽआरण्ण्या ऽओषधय ऽइति यदारण्ण्या ऽओषधयो न स्युः केन जुहुया ऽइति व्वानस्पत्त्येनेति यद्वानस्पत्त्यन्न स्यात्केन जुहुया ऽइत्त्यद्भिरिति यदापो न स्युः केन जुहुया ऽइति ॥ ३ ॥ स होवाच। न वा ऽइह तर्हि किञ्चनासीदथैतदहूयतैव सत्त्यँ श्रद्धायामिति व्वेत्थाग्निहोत्रं ऱ्याज्ञवल्क्य धेनुशतन्ददामीति होवाच ॥ ४ ॥ तदप्येते श्श्लोकाः। किँ

* अग्निहोत्रमिति कर्मनामधेयम्। अग्नये होत्रं होमोऽस्मिन्निति तद्व्युत्पत्तिः। उपचारात् तदर्थं पयोऽप्यग्निहोत्रम्, तस्य दोग्ध्री धेनुरप्यग्निहोत्रीत्युच्यते।

स्विद्विद्वान्प्रवसत्त्यग्निहोत्त्री गृहेब्भ्यः कथꣳ स्विदस्य काऽव्यङ्क्थः सन्ततो ऽअग्निभिरिति कथꣳ स्विदस्यानपप्प्रोषितम्भवतीत्त्येवैतदाह ॥ ५ ॥ यो जविष्ठो भुवनेषु । स विद्वान्प्रवसन्न्विदे तथा तदस्य काऽव्यन्तथा सन्ततो ऽअग्निभिरिति मन ऽएवैतदाह मनसैवास्यानपप्प्रोषितम्भवतीति ॥ ६ ॥ यत्त्स दूरम्परेत्त्य । अथ तत्र प्प्रमाद्यति कस्मिमन्त्सास्य हुताहुतिर्ग्गृहे यामस्य जुह्वतीति यत्त्स दूरम्परेत्त्याथ तत्र प्प्रमाद्यति कस्मिमन्नस्य साहुतिर्हुता भवतीत्त्येवैतदाह ॥ ७ ॥ यो जागार भुवनेषु । विश्श्वा जातानि योऽबिभः तस्म्मिन्त्सास्य हुताहुतिर्ग्गृहे यामस्य जुह्वतीति प्प्राणमेवैतदाह तस्म्मादाहुः प्प्राण ऽएवाग्निहोत्रमिति ॥ ८ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अग्निहोत्रे मिथुनत्वदर्शनम् ]

यो ह वा ऽअग्निहोत्त्रे । षण्णिमथुनानि व्वेद मिथुनेन मिथुनेन ह प्प्रजायते सर्व्वाभिः प्प्रजातिभिर्य्यजमानश्च पत्त्नी च तदेकम्मिथुनन्तस्म्मादस्य पत्त्नीवदग्निहोत्रꣳ स्यादेतन्म्मिथुनमुपाप्नवानीति वत्त्सश्चाग्निहोत्त्री च तदेकम्मिथुतन्तस्म्मादस्य पुँवत्त्साग्निहोत्त्री स्यादेतन्मिथुनमुपाप्नवानीति स्त्थाली चाङ्गाराश्च तदेकम्मिथुनꣳ स्रुक्च स्रुवश्च तदेकम्मिथुनमाहवनीयश्च समिच्च तदेकम्मिथुनमाहुतिश्च स्वाहाकारश्च तदेकम्मिथुनमेतानि ह वा

ऽअग्निहोत्रे षण्मिथुनानि तानि य ऽएवं वेद मिथुनेन मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिः ॥ १ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ प्रसङ्गतः आख्यायिकया ब्रह्मचारिधर्मप्रतिपादनम् ]

ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेव न प्रायच्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग ऽइति यामेव रात्रिः समिधन्नाहराता ऽइति तस्माद्याᳬ रात्रिम्ब्रह्मचारी समिधन्नाहरत्यायुष ऽएव तामवदाय वसति तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥ १ ॥ दीर्घसत्रं वा ऽएष ऽउपैति । यो ब्रह्मचर्यमुपैति स यामुपयन्त्समिधमादधाति सा प्रायणीया याᳬ स्नास्यन्त्सोदयनीयाथ या ऽअन्तरेण सत्र्या ऽएवास्य ता ब्राह्मणो ब्रह्मचर्यमुपयन् ॥ २ ॥ चतुर्द्धा भूतानि प्रविशति । अग्निम्पदा मृत्युम्पदाचार्यम्पदात्मन्येवास्य चतुर्थः पादः परिशिष्यते ॥ ३ ॥ स यदग्नये समिधमाहरति । य ऽएवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तᳬ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ४ ॥ अथ यदात्मानन्दरद्रीकृत्येव । अह्रीर्भूत्वा भिक्षते य ऽएवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तᳬ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ५ ॥ अथ यदाचार्यवचसङ्करोति । यदाचार्याय कर्म्म करोति य ऽएवास्याचार्ये पादस्तमेव तेन परिक्रीणाति तᳬ संस्कृत्यात्मन्धत्ते

स ऽएनमाविशति ॥ ६ ॥ न ह वै स्नात्वा भिक्षेत । अप ह वै स्नात्वा भिक्षाञ्जयत्यप ज्ञातीनामशनायामप पितॄणाᳬं स ऽएवं विद्वान्यस्या ऽएव भूयिष्ठᳬं श्लाघेत ताम्भिक्षेतेत्याहुस्तल्लोक्यमिति स यद्यन्याम्भिक्षितव्यान्न विन्देदपि स्वामेवाचार्यजायाम्भिक्षेताथो स्वाम्मातरन्नैनᳬं सप्तम्यभिक्षिताऽतीयात्तमेवं विद्वाᳬंसमेवञ्चरन्तᳬं सर्वे वेदा ऽआविशन्ति यथा ह वा ऽअग्निᳬं समिद्धो रोचत ऽएवᳬं ह वै स स्नात्वा रोचते य ऽएवं विद्वान्ब्रह्मचर्यञ्चरति ॥ ७ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ आख्यायिकया दर्शपूर्णमासयोः सर्वोत्पत्तिहेतुत्वकथनम् ]

उद्दालको हारुणिᳬं । उदीच्च्यान्वृतो धावयाञ्चकार तस्य निष्क ऽउपाहित ऽआसैतद्ध स्म वै तत्पूर्वेषां वृताना न्धावयतामेकधनमुपाहितम्भवत्युपवल्हाय बिभ्यतान्ताᳬन्होदीच्च्यानाम्ब्राह्मणान्भीर्विवेद ॥ १ ॥ कौरुपाञ्चालो वा ऽअयम्ब्रह्मा ब्रह्मपुत्रᳬं । यद्वै नोऽयमर्द्धन्न पर्य्यादुदीत हन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति केन वीरेणेति स्वैदायनेनेति शौनको ह स्वैदायन ऽआस ॥ २ ॥ ते होचुᳬं । स्वैदायन त्वया वीरेणेमम्प्रतिसंयतामहा ऽइति स होवाचोपात्र खलु रमताहन्वेनं वेदानीति तᳬं हाभिप्प्रपेदे तᳬं हाभिप्प्रपन्नमभ्युवाद स्वैदायना३ ऽइति हो३ गौतमस्य पुत्रे-

तीतरः प्प्रतिशुश्श्राव तꣳ ह तत ऽएव प्प्रष्टुन्दध्रे ॥ ३ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यो दर्शपूर्ण्णमासयोरष्टौ पुरस्तादाज्यभागान्विद्यात्पञ्च मध्यतो हविर्भागान्षट् प्राजापत्यानष्टा ऽउपरिष्टादाज्यभागान् ॥ ४ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्णमासयोर्व्विद्याद्यस्म्मादिमाः प्प्रजा ऽअदन्तका जायन्ते यस्म्मादासाञ्जायन्ते यस्म्मादासाम्प्रभिद्यन्ते यस्म्मादासाꣳ सन्तिष्ठन्ते यस्म्मादासाम्पुनरुत्तमे व्वयसि सर्व्व ऽएव प्प्रभिद्यन्ते यस्म्मादधर ऽएवाग्ग्रे जायन्तेऽथोत्तरे यस्म्मादणीयाꣳस ऽएवाधरे प्प्रथीयाꣳस ऽउत्तरे यस्म्माद्दꣳष्ट्रा व्वर्षीयाꣳसो यस्म्मात्समा ऽएव जम्भ्याः ॥ ५ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्णमासयोर्व्विद्याद्यस्म्मादिमाः प्प्रजा लोमशा जायन्ते यस्म्मादासाम्पुनरिव श्म्मश्रूण्ण्यौपपक्ष्याणि दुर्व्वीरिणानि जायन्ते यस्म्माच्छीर्षण्ण्येवाग्ग्रे पलितो भवत्यथ पुनरुत्तमे व्वयसि सर्व्व ऽएव पलितो भवति ॥ ६ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्णमासयोर्व्विद्याद्यस्म्मात्कुमारस्य रेतः सिक्तन्न सम्भवति यस्म्मादस्य मध्यमे व्वयसि सम्भवति यस्म्मादस्य पुनरुत्तमे व्वयसि न सम्भवति ॥ ७ ॥ यो गायत्रीꣳ हरिणीम् । ज्योतिष्पक्षां य्यजमानꣳ स्वर्ग्गँल्लोकमभिवहन्तीं व्विद्यादिति तस्म्मै ह निष्कम्प्रददावनूचानः स्वैदायनासि सुवर्ण्णं वाव सुवर्ण्णविदे ददतीति तꣳ होपगुह्य निश्चक्राम तꣳ ह पप्प्रच्छुः

किमिवैष गौतमस्य पुत्त्रोऽभूदिति ॥ ८ ॥ स होवाच । यथा ब्ब्रह्मा ब्ब्रह्मपुत्त्रो मूर्द्धास्य व्विपतेद्य ऽएनमुपवल्हेतेति ते ह तत ऽएव व्विप्प्रेयुस्तद्ध ह तत ऽएव समित्पाणिः प्प्रति-चक्क्रम ऽउप त्वायानीति किमद्ध्येष्ष्यमाण ऽइति यानेव मा प्प्रश्श्नानप्प्राक्षीस्तानेव मे व्विब्ब्रूहीति स होवाचा-नुपेतायैव त ऽएनान्ब्रवाणीति ॥ ९ ॥ तस्स्मा ऽउ हैतदु-वाच । द्वावाघारौ पञ्च प्प्रयाजा ऽआग्नेय ऽआज्यभागोऽ-ष्टम ऽएतेऽष्टौ पुरस्तदाज्यभागाः सौम्म्य ऽआज्य-भागो हविर्ब्भागाणाम्प्रथमो हविर्हि सोम ऽआग्ग्नेयः पुरोडाशोऽग्नीषोमीय ऽउपाᳬशुयाजो[1]ऽग्नीषोमीयः पुरो-डाशोऽग्निः स्विष्टकृदेते पञ्च मद्ध्यतो हविर्ब्भागाः ॥१०॥ प्राशित्र[2]श्चेडा च । यच्चाग्नीध ऽआदधाति ब्ब्रह्मभागो यजमानभागोऽन्न्वाहार्य्य ऽएते षट् प्राजापत्यास्त्रयोऽनुया-जाश्चत्त्वारः पत्नीसँय्याजाः[†] समिष्टयजुरष्टममेतेऽष्टा ऽउपरिष्टादाज्यभागाः ॥ ११ ॥ अथ यदपुरोऽनुवाक्क्यकाः प्प्रयाजा भवन्ति । तस्स्मादिमाः प्प्रजा ऽअदन्तका जाय-न्तेऽथ यत्पुरोऽनुवाक्क्यवन्ति हवीᳬषि भवन्ति तस्स्मादासा-ञ्जायन्तेऽथ यदपुरोऽनुवाक्क्यका ऽअनुयाजा भवन्ति तस्स्मा-दासाम्प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्क्यवन्तः पत्नीसँय्याजा भवन्ति तस्स्मादासाᳬ सन्तिष्ठन्तेऽथ यदपुरोऽनुवाक्क्यकः

---

(१) उपांशु इज्यते इति उपांशुयाजः । एवमुपांशुजपश्च "जिह्वोष्ठौ चालयेत् किञ्चिद् देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशु स जपः स्मृतः ॥" इति स्मृत्युक्तः

(२) प्राशित्रं ब्रह्मणो भागः ।

† पत्नीदेवताका दर्शपूर्णमासाङ्गभूताश्चत्वारो यागविशेषाः पत्नीसंयाजाः ।

समिष्टयजुर्भवति तस्मादासाम्पुनरुत्तमे व्वयसि सर्व्व ऽएव प्प्रभिद्यन्ते ॥ १२ ॥ * अथ यदनुवाक्क्यामनूच्य । याज्यया यजति तस्मादधर ऽएवाग्ग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्त्रीमनूच्य त्रिष्टुभा यजति तस्मादणीयाᳬंस ऽएवाधरे प्प्रथीयाᳬंस ऽउत्तरेऽथ यत्प्राश्चावाघारावाघारयति तस्माद्दᳬंष्ट्रा व्वर्षीयाᳬंसोऽथ यत्सच्छन्दसावेव संय्याज्ज्ये भवतस्तस्मात्समा ऽएव जम्भ्याः ॥ १३ ॥ अथ यद्बर्हिस्तृणाति । तस्मादिमाः प्प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्प्रस्तरᳬं[A] स्तृणाति तस्मादासाम्पुनरिव श्म्मश्श्रूण्ण्यौपपक्ष्याणि दुर्व्वीरिणानि जायन्तेऽथ यत्केवलमेवाग्ग्रे प्प्रस्तरमनुप्प्रहरति तस्माच्छीर्षण्ण्येवाग्ग्रे पलितो भवत्यथ यत्सर्व्वमेव बर्हिरनुप्प्रहरति तस्मात्पुनरुत्तमे व्वयसि सर्व्व ऽएव पलितो भवति ॥ १४ ॥ अथ यदाज्ज्यहविषः प्प्रयाजा भवन्ति । तस्मात्कुमारस्य रेतः सिक्तन्न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्ज्यमथ यन्मद्ध्ये यज्ञस्य दद्ध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मद्ध्यमे व्वयसि सम्भवति द्रप्प्सीवैव भवति द्रप्प्सीव हि रेतोऽथ यदाज्ज्यहविष ऽएवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे व्वयसि न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्ज्यम् ॥ १५ ॥ व्वेदिरेव गायत्री । तस्यै येऽष्टौ पुरस्तादाज्ज्यभागाः स दक्षिणः पक्षो येऽष्टा ऽउपरिष्टादाज्ज्यभागाः स

* शतम् ५७०० ।

(A) प्रस्तरः कुशमुष्टिः ।

ऽउत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानꣳ स्वर्ग्गँल्लोकमभिवहति य ऽएवमेतद्वेद ॥ १६ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ स्रुगादानप्रकारः ]

अथातः स्रुचोरादानस्य । तद्धैतदेके कुशला मन्न्यमाना दक्षिणेनैव जुहूमाददते सव्व्येनोपभृतन्न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयात्प्रतिप्प्रतिन्न्वा ऽअयमद्धर्य्युर्यजमानस्य द्विषन्तम्भ्रातृव्व्यमकः प्रत्युद्यामिनमितीश्वरो ह तथैव स्यात् ॥ १ ॥ इत्थमेव कुर्य्यात् । उभाभ्यामेव पाणिभ्याञ्जुहूम्परिगृह्योपभृत्यधिनिदध्यात्तस्य नोपमीमाꣳसास्ति तत्पशव्व्यमायुष्ष्यन्ते ऽअसꣳशिञ्जयन्नाददीत ते * यत्सꣳशिञ्जयेदुयोगक्षेमो यजमानमृच्छेत्तस्मादसꣳशिञ्जयन्नाददीत ॥ २ ॥ अथातोऽतिक्क्रमणस्य । वज्रेण ह वा ऽअन्न्योऽद्धर्य्युर्यजमानस्य पशून्विधमति वज्रेण हास्म्मा ऽअन्न्य ऽउपसमूहत्त्येष ह वा ऽअद्धर्य्युर्वज्रेण यजमानस्य पशून्न्विधमति य ऽआश्रावयिष्ष्यन्दक्षिणेनातिक्क्रामति सव्व्येनाश्राव्व्याथ हास्म्मा ऽएष ऽउपसमूहति य ऽआश्रावयिष्ष्यन्त्सव्व्येनातिक्क्रामति दक्षिणेनाश्राव्व्यैष हास्म्मा ऽउपसमूहति ॥ ३ ॥ अथातो धारणस्य । तद्धैतदेके कुशला मन्न्यमानाः प्प्रगृह्य बाहू स्रुचौ धारयन्ति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयाच्छूलौ न्न्वा ऽअयमद्ध-

* 'ग' 'ज' पुस्तकयोः 'ते' इति नास्ति ।

समिष्टयजुर्भवति तस्मादासाम्पुनरुत्तमे व्वयसि सर्व्वं ऽएव प्प्रभिद्यन्ते ॥ १२ ॥ * अथ यदनुवाक्क्यामनूच्च्य । याज्यया यजति तस्मादधर ऽएवाग्ग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्च्य त्रिष्टुभा यजति तस्मादणीयाᳫंस ऽएवाधरे प्प्रथीयाᳫंस ऽउत्तरेऽथ यत्प्राश्चावाघारावाघारयति तस्माद्दᳫंष्ट्रा व्वर्षीयाᳫंसोऽथ यत्सच्छन्दसावेव संय्याज्ये भवतस्तस्मात्समा ऽएव जम्भ्याः ॥ १३ ॥ अथ यद्बर्हिस्तृणाति । तस्मादिमाः प्प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्प्रस्तरᳫं[A] स्तृणाति तस्मादासाम्पुनरिव श्मश्श्रूण्ण्यौपपक्ष्याणि दुर्ब्बीरिणानि जायन्तेऽथ यत्केवलमेवाग्ग्रे प्प्रस्तरमनुप्प्रहरति तस्माच्छीर्षण्ण्येवाग्ग्रे पलितो भवत्त्यथ यत्सर्व्वमेव बर्हिरनुप्प्रहरति तस्मात्पुनरुत्तमे व्वयसि सर्व्व ऽएव पलितो भवति ॥ १४ ॥ अथ यदाज्ज्यहविषः प्प्रयाजा भवन्ति । तस्मात्कुमारस्य रेतः सिक्तन्न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्ज्यमथ यन्मद्ध्ये यज्ञस्य दद्ध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मद्ध्यमे व्वयसि सम्भवति द्रप्प्सीवैव भवति द्रप्प्सीव हि रेतोऽथ यदाज्ज्यहविष ऽएवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे व्वयसि न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्ज्यम् ॥ १५ ॥ व्वेदिरेव गायत्री । तस्यै येऽष्टौ पुरस्तादाज्ज्यभागाः स दक्षिणः पक्षो येऽष्टा ऽउपरिष्टादाज्ज्यभागाः स

---

* शतम् ५७०० ।

(A) प्रस्तरः कुशमुष्टिः ।

ऽउत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानꣳ स्वर्गँल्लोकमभिवहति य ऽएवमेतद्वेद ॥ १६ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ स्रुगादानप्रकारः ]

अथातः स्रुचोरादानस्य । तद्धैतदेके कुशला मन्यमाना दक्षिणेनैव जुहूमाददते सव्येनोपभृतन्न तथा कुर्याद्यो हैनन्तत्र ब्रूयात्प्रतिप्रतिन्न्वा ऽअयमध्वर्युर्यजमानस्य द्विषन्तम्भ्रातृव्यमकःप्रत्युद्यामिनमितीश्वरो ह तथैव स्यात् ॥ १ ॥ इत्थमेव कुर्यात् । उभाभ्यामेव पाणिभ्याञ्जुहूम्परिगृह्योपभृत्यधिनिदध्यात्तस्य नोपमीमाꣳसास्ति तत्पशव्यमायुष्यन्ते ऽअसꣳशिञ्जयन्नाददीत ते * यत्सꣳशिञ्जयेद्योगक्षेमो यजमानमृच्छेत्तस्मादसꣳशिञ्जयन्नाददीत ॥ २ ॥ अथातोऽतिक्रमणस्य । वज्रेण ह वा ऽअन्योऽध्वर्युर्यजमानस्य पशून्विधमति वज्रेण हास्मा ऽअन्य ऽउपसमूहत्येष ह वा ऽअध्वर्युर्वज्रेण यजमानस्य पशून्न्विधमति य ऽआश्रावयिष्यन्दक्षिणेनातिक्रामति सव्येनाश्राव्याथ हास्मा ऽएष ऽउपसमूहति य ऽआश्रावयिष्यन्त्सव्येनातिक्रामति दक्षिणेनाश्राव्यैष हास्मा ऽउपसमूहति ॥ ३ ॥ अथातो धारणस्य । तद्धैतदेके कुशला मन्यमानाः प्रगृह्य बाहू स्रुचौ धारयन्ति न तथा कुर्याद्यो हैनन्तत्र ब्रूयाच्छूलौ न्न्वा ऽअयमध्व-

* 'ग' 'ज' पुस्तकयोः 'ते' इति नास्ति ।

र्य्युर्ब्बाहू ऽअकृत शूलबाहुर्ब्भविष्यतीतीश्श्वरो ह
तथैव स्यादुथ हैष मद्ध्यमः प्प्राणस्तस्म्मादु तमुपन्न्य-
च्च्येवैव धारयेत् * ॥ ४ ॥ अथात ऽआश्श्रावणस्य ।
षड्ढ वा ऽआश्श्रावितानि न्न्यक्तिर्य्यगूर्द्ध्वङ्क्रूपणम्बहिः-
श्श्रयन्तःश्श्रि ॥ ५ ॥ एतद्ध वै न्न्यक् । योऽयमुच्चैरा-
दाय शनैर्न्निदधाति स यमिच्छेत्पापीयान्त्स्यादिति
तस्योच्चैरादाय शनैर्न्निदद्ध्यात्तेन स पापीयान्भवति ॥ ६ ॥
अथ हैतत्तिर्य्यक् । योऽयं यावतैवादत्ते तावता निदधाति
स यमिच्छेन्नैव श्श्रेयान्त्स्यान्न पापीयानिति तस्य यावतै-
वाददीत तावता निदद्ध्यात्तेन स नैव श्श्रेयान्न पापीया-
न्भवति ॥ ७ ॥ अथ हैतदूर्द्ध्वम् । योऽयꣳ शनैरादायो-
च्चैर्न्निदधाति स यमिच्छेच्छ्रेयान्त्स्यादिति तस्य शनैरादायो-
च्चैर्न्निदद्ध्यात्तेन स श्श्रेयान्भवति ॥ ८ ॥ अथ हैतत्क्रूपणम् ।
योऽयमणु दीर्ग्घमस्वरमाश्श्रावयति यो हैनन्तत्र ब्रूयात्क्रूप-
णन्न्वा ऽअयमद्ध्वर्य्युर्य्यजमानमकद्विषतो भ्भ्रातृव्व्यस्योपा-
वसायिनमितीश्श्वरो ह तथैव स्यात् ॥ ९ ॥ अथ हैतद्ध-
हिःश्श्रि । योऽयमपव्व्यादायौष्ठा ऽउच्चैरस्वरमाश्श्रावयति
श्श्रीर्व्वै स्वरो बाह्यत ऽएव तच्छ्रियन्धत्तेऽशनायुको भवति
॥ १० ॥ अथ हैतदन्तःश्श्रि । योऽयꣳ सन्धायौष्ठा ऽउच्चैः
स्वरवदाश्श्रावयति श्श्रीर्व्वै स्वरोऽन्तरत ऽएव तच्छ्रियन्ध-
त्तेऽन्नादो भवति ॥ ११ ॥ स वै मन्द्रमिवोरसि । परास्त-
भ्भ्योभयतो बार्हतमुच्चैरन्ततो निदद्ध्यात्तस्य नोपमीमाꣳ-

* तथा चोक्तं सूत्रकृता "नाभिदेशे धारणम्" ( का० श्रौ० सू० ३. २. १ ) ।

सास्ति तत्पशव्व्यमायुष्ष्यम् ॥ १२ ॥ अथातो होमस्य । तद्धैतद्देके कुशला मन्न्यमानाः प्प्राचीᳫं स्रुचमुपावहृत्त्य हुत्त्वा पर्य्याहृत्त्योपभृत्त्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयादनुयुवन्न्वा ऽअयमद्ध्वर्य्युर्य्यजमानमकह्नि- षतो भ्रातृव्व्यस्यान्न्ववसायिनमितीश्श्वरो ह तथैव स्यात् ॥ १३ ॥ पार्श्वत ऽउ हैके । स्रुचमुपावहृत्त्य हुत्त्वा पर्य्याहृत्त्योपभृत्त्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयादुतीत्थैन न्न्वा ऽअयमद्ध्वर्य्युराहुतीः प्प्रारौत्सीत्सं वा शरिष्ष्यते घुणिर्वा भविष्ष्यतीतीश्श्वरो ह तथैव स्यात् ॥ १४ ॥ इत्थमेव कुर्य्यात् । प्राचीमेव स्रुचमुपावहृत्त्य हुत्त्वा तेनैवाधिहृत्त्योपभृत्त्यधिनिदध्यात्तस्य नोपमीमाᳫं- सास्ति तत्पशव्व्यमायुष्ष्यम् ॥ १५ ॥ प्रदग्ग्धाहुतिर्ह्वा ऽअन्न्योऽद्ध्वर्य्युः । आहुतीर्हान्न्यः सन्तर्प्पयत्त्येष ह वै प्प्रदग्ग्धाहुतिरद्ध्वर्य्युर्य्योऽयमाज्ज्यᳩ हुत्त्वावदानानि जुहो- त्त्येतᳩ ह वै तद्दृश्श्यमाना व्वागभ्भ्युवाद प्प्रदग्ग्धाहुतिर्न्वा ऽअयमद्ध्वर्य्युरित्त्यथ हैना ऽएष सन्तर्प्पयति योऽयमाज्ज्यᳩ हुत्त्वावदानानि जुहोत्त्यथ पुनरन्तत ऽआज्ज्येनाभिजुहोत्त्येष हैनाः सन्तर्प्पयति तासाᳫं सन्तृप्प्तानान्देवा हिरण्मयाँश्च- मसान्न्पूरयन्ते ॥ १६ ॥ तदु होवाच याज्ञवल्क्यः । यद्वा ऽउपस्तीर्य्यावदायाभिघारयति तद्देवैनाः सन्तर्प्पयति तासाᳫं सन्तृप्प्तानान्देवा हिरण्मयाँश्चमसान्न्पूरयन्तेऽय- स्त्थूणगृहपतीनाᳫं ह वै शौल्बायनोऽद्ध्वर्य्युरास ॥ १७ ॥ स

(१) "नां वै" इति 'ग' 'ज' पुस्तकयोः पाठः ।

होवाच । इदमहेदꣳ सत्रङ्कुशपश्श्वल्प्पाज्यमथायङ्गृह-
पतिरस्म्मीति मन्न्यत ऽइति ॥ १८ ॥ स होवाच ।
अद्धर्य्यवा वै नोऽक्कुक्ष ऽएते वै ते स्रुचौ ये त्वꣳ सँवत्स-
रन्नाशक ऽआदातुं ष्यद्वै त्वाहमेतयोरनुशिष्ष्याम्प्र प्प्रजया
पशुभिर्ज्जायेथा ऽअभि स्वर्ग्गँल्लोकं वहेरिति ॥ १९ ॥ स
होवाच । उप त्वयानीति स होवाचात्र वाव खल्ल्वर्हसि
यो नः सँवत्सरेऽद्धर्य्युरभूरनुपेतायैव त ऽ[1]एनद्ब्रवाणीति
तस्म्मा ऽउ हैतदेव स्रुचोरादानमुवाच यदेतद्व्याख्याम
तस्म्मादेवंविदमेवाद्धर्य्युङ्कुर्वीत नानेवंविदम् ॥ २० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या १०४ ॥



[ मित्रविन्देष्टिः ]

प्रजापतिर्वै प्प्रजाः सृजमानोऽतप्प्यत । तस्म्माच्छ्रा-
न्तात्तेपानाच्छ्रीरुदक्क्रामत्त्सा दीप्प्यमाना भ्भ्राजमाना
लेलायन्त्यतिष्ठ्ठन्तान्दीप्प्यमानाम्भ्राजमानाँल्लेलायन्तीन्देवा
ऽअभ्भ्यद्ध्यायन् ॥ १ ॥ ते प्प्रजापतिमब्ब्रुवन् । हनामेमा-
मेदमस्या ददामहा ऽइति स होवाच स्त्री वा ऽएषा
यच्छ्रीर्न्न वै स्त्रियङ्घ्नन्त्युत त्वा ऽअस्या जीवन्त्या ऽएवा-
ददत ऽइति ॥ २ ॥ तस्या ऽअग्निरन्नाद्यमादत्त । सोमो
राज्यं वरुणः साम्म्राज्यम्मित्रः क्षत्रमिन्द्रो बलम्बृहस्पति-

(१) 'ग' 'ज' पुस्तकयोः 'एतद्ब्र०' इति पाठ उपलभ्यते ।

ब्ब्रह्मवर्च्चसꣳ सविता राष्ट्रम्पूषा भगꣳ सरस्वती पुष्टिन्त्वष्टा रूपाणि ॥ ३ ॥ सा प्प्रजापतिमब्ब्रवीत् । आ वै म ऽइदमदिषतेति स होवाच यज्ञेनैनाꣳपुनर्य्याचस्वेति ॥ ४ ॥ सैतान्दशहविषमिष्टिमपश्श्यत् । आग्नेयमष्टाकपालम्पुरोडाशꣳ सौम्म्यञ्चरुं व्वारुणन्दशकपालम्पुरोडाशम्मैत्रञ्चरुमैन्द्रमेकादशकपालम्पुरोडाशम्बार्हस्पत्यञ्चरुꣳ सावित्रन्द्वादशकपालं व्वाष्ट्राकपालं व्वा पुरोडाशम्पौष्णञ्चरुꣳ सारस्वतञ्चरुन्त्वाष्ट्रन्दशकपालम्पुरोडाशम् * ॥ ५ ॥ तानेतयानुवाक्क्ययान्ववदत् । अग्निꣳ सोमो व्वरुणो मित्र ऽइन्द्रो बृहस्पतिꣳ सविता यꣳ सहस्री ॥ पूषा नो गोभिरवसा सरस्वती त्त्वष्टा रूपाणि समनक्तु यज्ञैरिति ते प्प्रत्युपातिष्ठन्त ॥ ६ ॥ तानेतया याज्ज्यया । परस्तात्प्रतिलोमम्प्रत्यैत्त्वष्टा रूपाणि ददती सरस्वती पूषा भगꣳ सविता मे ददातु ॥ बृहस्पतिर्द्ददिन्द्रो बलम्मे मित्रꣳ क्षत्रं व्वरुणꣳ सोमो ऽअग्निरिति ते पुनर्द्दानायाद्ध्रियन्त ॥ ७ ॥ सैतानुपहोमानपश्श्यत् । अग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादायाग्निरुदक्क्रामत्पुनरस्या ऽअन्नाद्यमददात् ॥ ८ ॥ सोमो राजा राजपतिꣳ । राज्ज्यमस्स्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय सोम ऽउदक्क्रामत्पुनरस्यै राज्ज्यमददात् ॥ ९ ॥ व्वरुणꣳ सम्म्राट् सम्म्राट्पतिꣳ साम्म्राज्ज्यमस्स्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय व्वरुण ऽउदक्क्रामत्पुनरस्यै साम्म्रा-

* का० श्रौ० सू० अ० ५ कं० १२ सू० ३ ।

ज्ज्यमददात् ॥ १० ॥ मित्रः क्षत्रं क्षत्रपतिः । क्षत्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय मित्र ऽउदक्क्रामत्पुनरस्यै क्षत्रमददात् ॥ ११ ॥ इन्द्रो बलम्बलपतिः । बलमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादयेन्द्र ऽउदक्क्रामत्पुनरस्यै बलमददात् ॥ १२ ॥ बृहस्पतिर्ब्ब्रह्म ब्ब्रह्मपतिः । ब्रह्मवर्च्चसमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय बृहस्पतिरुदक्क्रामत्पुनरस्यै ब्ब्रह्मवर्च्चसमददात् ॥ १३ ॥ सविता राष्ट्रꣳ राष्ट्रपतिः । राष्ट्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय सवितोदक्क्रामत्पुनरस्यै राष्ट्रमददात् ॥ १४ ॥ पूषा भगम्भगपतिः । भगमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय पूषोदक्क्रामत्पुनरस्यै भगमददात् ॥ १५ ॥ सरस्वती पुष्टिम्पुष्टिपतिः । पुष्टिमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय सरस्वत्त्युदक्क्रामत्पुनरस्यै पुष्टिमददात् ॥ १६ ॥ त्त्वष्टा रूपाणाꣳ रूपकृद्रूपपतिः । रूपेण पशूनस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय[2] त्त्वष्टोदक्क्रामत्पुनरस्यै रूपेण पशूनददात् ॥ १७ ॥ ता वा ऽएताः । दश देवता दश हवीꣳषि दशाहुतयो दश दक्षिणा[3] दशन्दशिनी विराट् श्रीर्व्विराट् श्रियाꣳ हैतद्विराज्ज्यन्नाद्ये प्प्रतितिष्ठति ॥ १८ ॥ तस्यै पञ्चदश सामिधेन्न्यो भवन्ति । उपाꣳशु देवता यजति पञ्च प्प्रयाजा भवन्ति त्रयोऽनुयाजा ऽएकः समि-

(१) का० श्रौ० सू० ५. १२. १ । (२) का० श्रौ० सू० ५. १३. १ । (३) का० श्रौ० सू० ५. १३. ४ ।

ष्टयजुः * पुष्टिमन्तावाज्यभागा'वग्निना रयिमश्नवत्पोषमेव दिवे दिवे। यशसं वीरवत्तमम्' ॥ 'गयस्फानो ऽअमीवहा वसुवित्पुष्टिवर्द्धनः। सुमित्रः सोम नो भवे'ति सहस्रवत्यौ सँय्याज्ये 'नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु द्युमदग्ने सुवीर्य्यं वर्षिष्ठमनुपक्षितम्' ॥ 'उत नो ब्रह्मन्नविष ऽउक्थेषु देवहूतमः। शन्नः शोचा मरुद्वृधोऽग्ने सहस्रसातम' ऽइति ॥ १९ ॥ ताᳬं हैताङ्गोतमो राहूगणः। विदाञ्चकार सा ह जनकं वैदेहम्प्रत्युत्ससाद ताᳬं हाङ्गजिद्ब्राह्मणेष्वन्विवियेष तामु ह याज्ञवल्क्ये विवेद स होवाच सहस्रम्भो याज्ञवल्क्य दद्मो यस्मिन्मन्न्वयन्त्वयि मित्रविन्दामन्वविदामेति विन्दते मित्रᳬं राष्ट्रमस्य भवत्यप पुनर्म्मृत्युञ्जयति सर्वमायुरेति य ऽएवं विद्वानेतयेष्ट्या यजते यो वै तदेवं वेद ॥ २० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ २ ॥

[ हविषः समृद्धिः ]

अथातो हविषः समृद्धिः। षड्ढ वै ब्रह्मणो द्वारोऽग्निर्वायुरापश्चन्द्रमा विद्युदादित्यः ॥ १ ॥ स य ऽउपदग्धेन हविषा यजते। अग्निना ह स ब्रह्मणो द्वारेण प्रतिपद्यते सोऽग्निना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यᳬं सलोकताञ्जयति ॥ २ ॥ अथ यो

* प्रधानयागादौ सम्यग् इष्टा देवता इज्यन्ते अनेन स होमः मन्त्रश्च समिष्टयजुः।

(१) ऋ० सं० १. १. १। (२) ऋ० सं० १. ६. २१। (३) ऋ० सं० ३. १. १३। (४) ऋ० सं० ३. १. १३।

विपतितेन हविषा यजते । वायुना ह स ब्रह्मणो द्वारेण प्रतिपद्यते स वायुना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ३ ॥ अथ योऽश्रृतेन हविषा यजते । अग्निर्ह स ब्रह्मणो द्वारेण प्रतिपद्यते सोऽग्निर्ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ४ ॥ अथ य ऽउपरक्तेन हविषा यजते । चन्द्रमसा ह स ब्रह्मणो द्वारेण प्रतिपद्यते स चन्द्रमसा ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ५ ॥ अथ यो लोहितेन हविषा यजते । विद्युता ह स ब्रह्मणो द्वारेण प्रतिपद्यते स विद्युता ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ६ ॥ अथ यः सुश्रृतेन हविषा यजते । आदित्येन ह स ब्रह्मणो द्वारेण प्रतिपद्यते स ऽआदित्येन ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति सैषा हविषः समृद्धिः स यो हैवमेताꣳ हविषः समृद्धिं वेद सर्वसमृद्धेन हैवास्य हविषेष्टम्भवति ॥ ७ ॥ अथातो यज्ञस्य समृद्धिः । यद्वै यज्ञस्य न्यूनम्प्रजननमस्य तदुथ यदतिरिक्तम्पशव्यमस्य तदुथ यत्सङ्कसुकꣳ श्रिया ऽअस्य तदुथ यत्सम्पन्नꣳ स्वर्ग्यमस्य तत् ॥ ८ ॥ स यदि मन्येत । न्यूनम्मे यज्ञेऽभूदिति प्रजननम्म ऽएतत्प्रजनिष्य ऽइत्येव तदुपासीत ॥ ९ ॥ अथ यदि मन्येत । अतिरिक्तम्मे यज्ञेऽभूदिति पशव्यम्म ऽएतत्पशुमान्भविष्यामी-त्येव तदुपासीत ॥१०॥ अथ यदि मन्येत । सङ्कसुकम्मे यज्ञेऽ-

भूदिति श्रियै म ऽएतदा मा श्रीस्तेजसा यशसा ब्रह्म-वर्चसेन परिवृता गमिष्यतीत्येव तदुपासीत ॥ ११ ॥ अथ यदि मन्येत । सम्पन्नम्मे यज्ञेऽभूदिति स्वर्ग्यम्म ऽएतत्स्वर्गलोको भविष्यामीत्येव तदुपासीत सैषा यज्ञस्य समृद्धिः स यो हैवमेतां यज्ञस्य समृद्धिं वेद सर्वसमृद्धेन हैवास्य यज्ञेनेष्टम्भवति ॥ १२ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

[ अरण्योरश्वत्थविकृतित्वविधानमाख्यायिकया ]

उर्वशी हाप्सराः । पुरूरवसमैडञ्चकमे तꣳ ह विन्द-मानोवाच त्रिः स्म माह्नो वैतसेन * दण्डेन हतादकामाꣳ स्म मा निपद्यासै मो स्म त्वा नग्नन्दर्शमेष वै न स्त्रीणामुपचार ऽइति ॥ १ ॥ सा हास्मिञ्ज्योगुवास । अपि हास्माद्गर्भिण्यास तावज्ज्योग्घास्मिन्नुवास ततो ह गन्धर्वाः समूदिरे ज्योग्वा ऽइयमुर्वशी मनुष्येष्ववात्सीदुपजानीत यथेयम्पुनरागच्छेदिति तस्यै हावि-द्वर्युरणा शयन ऽउपबद्धास ततो ह गन्धर्वा ऽअन्यतर-मुरणम्प्रमेथुः ॥ २ ॥ सा होवाच । अवीर ऽइव बत मेऽजन ऽइव पुत्रꣳ हरन्तीति द्वितीयम्प्रमेथुः सा ह तथैवोवाच ॥ ३ ॥ अथ हायमीक्षाञ्चक्रे । कथन्नु तद्-

* वैतस इति पुंस्प्रजननस्य नाम । तथाहि "शेपो वैतस इति पुंस्प्रजननस्य" वैतसो वितस्तं भवति, ( निरु० अ० ३ पा० ४ ख० २१ ) ।

वीरङ्कथमजनथ्ठं स्याद्यत्राहथ्ठं स्यामिति स नग्न ऽएवानूत्पपात चिरन्तन्मेने यद्वासः पर्य्यधास्यत ततो ह गन्धर्व्वा विद्युतञ्जनयाञ्चक्क्रुस्तं रुयथा दिवैवन्नग्नन्ददर्श ततो हैवेयन्तिरोबभूव पुनरैमीत्त्येत्तिरोभूताथ्ठं स ऽआद्ध्या जल्प-न्कुरुक्षेत्रᳮ समया चचारान्न्यतः प्प्लक्षेति बिसवती तस्यै हाद्ध्यन्तेन वव्व्राज तद्ध ता ऽअप्प्सरस ऽआतयो भूत्त्वा परिपुप्प्लुविरे ॥ ४ ॥ तᳮ हेयं ज्ञात्त्वोवाच । अयं वै स मनुष्ष्यो यस्म्मिन्नहमवात्त्समिति ता होचुस्तस्म्मै वा ऽआविरसामेति तथेति तस्म्मै हाविरासुः ॥ ५ ॥ ताथ्ठं हायं ज्ञात्त्वाभिपरोवाद । '[1]हये जाये मनसा तिष्ठ घोरे वचाथ्ठंसि मिश्र्श्रा कृणवावहै नु ॥ न नौ मन्त्रा ऽअनु-दितास ऽएते मयस्क्करन्न्परतरे चनाहन्नि'त्युप नु रम सन्नु वदावहा ऽइति हैवैनान्तदुवाच ॥ ६ ॥ तᳮ हेतरा प्प्र-त्युवाच । '[2]किमेता वाचा कृणवा तवाहम्प्राक्क्रमिषमुष-सामग्ग्रियेव ॥ पुरूरवः पुनरस्तम्परेहि दुरापना व्वात ऽइवा-हमस्म्मी'ति न वै त्वन्तदकरोर्य्यदहमब्ब्रवन्दुरापा वा ऽअहन्त्वयैतर्ह्यस्म्मि पुनर्ग्गृहानिहीति हैवैनन्तदुवाच ॥ ७ ॥ अथ हायम्परिद्यून ऽउवाच । '[3]सुदेवो ऽअद्य प्प्रपतेदना-वृत्परावतम्परमाङ्गन्तवा ऽउ ॥ अधा शयीत निर्ऋतेरु-पस्त्थेऽधैनं व्वृका रभसासो ऽअद्यु'रिति सुदेवोऽद्योद्वा बद्ध्नीत प्प्रवा पतेत्तदेनं व्वृका वा श्श्वानो वाद्युरिति हैव तदुवाच ॥ ८ ॥ तᳮ हेतरा प्प्रत्युवाच । '[4]पुरूरवो

(१) ऋ० सं० अष्ट० ८ अ० ५ व० १। (२) ऋ० सं० अष्ट० ८ अ० ५ व० १। (३) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ३। (४) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ३।

मा मृथा मा प्प्रपप्तो मा त्त्वा व्वृकासो ऽअशिवास ऽउ-क्षन् ॥ न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणाᳬं हृदयान्न्येते'ति मैतदादृथा न वै स्त्रैणᳬ सख्यमस्ति पुनर्ग्गृहा-निहीति हैवैनन्तदुवाच ॥ ९ ॥ 'यद्विरूपाचरम् । मर्त्त्येष्ष्व-वसᳬ रात्रीᳬ शरदश्चतस्रᳬ ॥ घृतस्य स्तोकᳬ सकृदह्न ऽआश्नान्तादेवेदन्तातृपाणा चरामी'ति तदेतदुक्तप्प्रत्त्यु-क्तम्पञ्चदशर्च्चं बह्वृचाᳬ प्प्राहुस्तस्यै ह हृदयमाव्ययां-ञ्चकार ॥ १० ॥ सा होवाच । सँवत्सरतमीᳬं रात्रिमा-गच्छतात्तन्म ऽएकाᳬं रात्रिमन्ते शयितासे जात ऽउ ते-ऽयन्तर्हि पुत्रो भवितेति स ह सँवत्सरतमीᳬं रात्रिमाज-गामेद्धिरण्ण्यविमितानि ततो हैनमेकमूचुरेतत्त्प्रपद्यस्वेति तद्धास्म्मै तामुपप्प्रजिग्घ्युᳬ ॥ ११ ॥ सा होवाच । गन्धर्व्वा वै ते प्प्रातर्व्वरन्दातारस्तं व्वृणासा ऽइति तं व्वै मे त्त्वमेव व्वृणीष्ष्वेति युष्म्माकमेवैकोऽसानीति ब्रूतादिति तस्म्मै ह प्प्रातर्ग्गन्धर्व्वा व्वरन्ददुᳬ स होवाच युष्म्माकमेवैकोऽ-सानीति ॥ १२ ॥ ते होचुᳬ । न वै सा मनुष्ष्येष्ष्वग्ग्ने-र्य्यज्ञिया तनूरस्ति ययेष्ट्वास्म्माकमेकᳬ स्यादिति तस्म्मै ह स्त्थाल्ल्यामोप्प्याग्ग्निम्प्रददुरनेनेष्ट्वास्म्माकमेको भवि-ष्ष्यसीति तञ्च ह कुमारञ्चादायावव्राज सोऽरण्ण्य ऽएवा-ग्ग्निन्निधाय कुमारेणैव ग्ग्राममेयाय पुनरैमीत्त्येत्तिरोभूतं य्योऽग्ग्निरश्वत्थन्तं य्या स्त्थाली शमीन्ताᳬं स ह पुन-र्ग्गन्धर्व्वानेयाय ॥ १३ ॥ ते होचुᳬ । सँवत्सरञ्चातुष्प्राश्यं-

(१) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ४ ।

मोदनम्पच स एतस्यैवाश्वत्थस्य तिस्रस्तिस्रः समिधो घृतेनाभ्यज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्याधत्तात्स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १४ ॥ ते होचुः । परोऽक्षमिव वा ऽएतदाश्वत्थीमेवोत्तरारणिङ्कुरुष्व शमीमयीमधरारणिं स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १५ ॥ ते होचुः । परोऽक्षमिव वा ऽएतदाश्वत्थीमेवोत्तरारणिङ्कुरुष्वाश्वत्थीमधरारणिं स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥१६॥ स ऽआश्वत्थीमेवोत्तरारणिञ्चक्रे । आश्वत्थीमधरारणिं स यस्ततोऽग्निर्जज्ञे स ऽएव स ऽआस तेनेष्ट्वा गन्धर्वाणामेक ऽआस तस्मादाश्वत्थीमेवोत्तरारणिङ्कुर्वीताश्वत्थीमधरारणिं स यस्ततोऽग्निर्जायते स ऽएव स भवति तेनेष्ट्वा गन्धर्वाणामेको भवति ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ चातुर्मास्ययाजिनो द्वैविध्यं दर्शयितुं तत्रत्यैर्यागैः शरीरावयवकल्पनम् ]

प्रजापतिर्ह चातुर्म्मास्यैरात्मानं विदधे । स ऽइममेव दक्षिणम्बाहुं वैश्वदेवं हविरकुरुत तस्यायमेवाङ्गुष्ठ ऽआग्नेयं हविरिदं सौम्यमिदं सावित्रम् ॥ १ ॥ स वै वर्षिष्ठः पुरोडाशो भवति । तस्मादियमासां वर्षिष्ठेदं सारस्वतमिदम्पौष्णमथ य ऽएष ऽउपरिष्टाद्धस्तस्य सन्धिस्तन्मारुतमिदं वैश्वदेवन्द्यावापृथिवीयन्तद्वा

"अश्वत्थशमीगर्भारणी प्रयच्छति" ( का० श्रौ० सू० ४. ७. २० )

ऽअनिरुक्तम्भवति तस्म्मात्तदुनिरुक्तम् ॥ २ ॥ अयमेव दक्षिण ऽऊरुर्व्वरुणप्प्रघासाः । तस्य यानि पञ्च हवीᳬषि समायीनि * ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नᳫ हविस्तद्वै द्विदेवत्यम्भवति तस्म्मादिमौ द्वौ कुल्फाविदुं वारुण-मिदुम्मारुतमनूकङ्कायस्तद्वा ऽअनिरुक्तम्भवति तस्म्मात्त-दुनिरुक्तम् ॥ ३ ॥ मुखमेवास्यानीकवतीष्टिः । मुखᳫ हि प्प्राणानामनीकमुरः सान्तपनीयोरसा हि समिव तप्प्यत ऽउदरङ्गृहमेधीया प्प्रतिष्ठा वा ऽउदरम्प्रतिष्ठित्या ऽएव शिश्नान्न्येवास्य क्रैडिनᳫ हविः शिश्नैर्हि क्क्रीडती-वायमेवावाङ् प्राण ऽआदित्येष्टिः ॥ ४ ॥ अयमेवोत्तर ऽऊरु-र्म्महाहविः तस्य यानि पञ्च हवीᳬषि समायीनि ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नᳫ हविस्तद्वै द्विदेवत्य-म्भवति तस्म्मादिमौ द्वौ कुल्फाविदुम्माहेन्द्रमिदुं वैश्श्व-कर्म्मणन्तद्वा ऽअनिरुक्तम्भवति तस्म्मात्तदुनिरुक्तमथ यदिदुमन्तरुदुरे तत्पितृयज्ञस्तद्वा ऽअनिरुक्तम्भवति तस्म्मा-त्तदुनिरुक्तम् ॥ ५ ॥ अयमेवोत्तरो बाहुः शुनासीरीयम् । तस्य यानि पञ्च हवीᳬषि समायीनि ता ऽइमाः पञ्चाङ्गु-लयोऽथ य ऽएष ऽउपरिष्टाद्धस्तस्य सन्धिस्तच्छुनासीरी-यमिदुं वायव्व्यन्दोः सौर्य्यन्तद्वा ऽअनिरुक्तम्भवति तस्म्मात्तदुनिरुक्तम् ॥ ६ ॥ तानि वा ऽएतानि । चातु-र्म्मास्यानि † त्रिषन्धीनि ‡ द्विसमस्तानि तस्म्मादि-

* पर्वचतुष्टयसञ्चारीणि ।

† चतुर्षु चतुर्षु मासेषु क्रियमाणानि चातुर्मास्यानि वैश्वदेव-वरुणप्रघास-साकमेध-शुना-सीरीयाख्यानि चत्वारि पर्वाणि ।

‡ त्रयः सन्धयोऽन्तरालकालाश्चत्वारो मासा येषु तानि त्रिषन्धीनि ।

मानि पुरुषस्याङ्गानि त्रिषन्धीनि द्विसमस्तानि तेषां वै चतुर्ण्णान्द्वयोस्त्रीणि त्रीणि हवीᳬंष्यनिरुक्तानि भवन्ति द्वे द्वे द्वयोः ॥७॥ [अर्धः प्रपाठकः ॥५६॥] तेषां वै चतुर्ष्वग्निम्मन्थन्ति। तस्माच्चतुर्भिरङ्गैरायुते द्वयोः प्प्रणयन्ति तस्माद्द्वाभ्यामेत्त्येवमु ह प्प्रजापतिश्चातुर्म्मास्यैरात्मानं विदधे तथो ऽएवैवंविद्यजमानश्चातुर्म्मास्यैरात्मानं विधत्ते ॥८॥ तदाहुः सर्व्वंगायत्रं वैश्वदेवᳬं हविः स्यात्सर्व्वन्त्रैष्टुभं वरुणप्प्रघासाः सर्व्वंजागतम्महाहविः सर्व्वानुष्टुभᳬं शुनासीरीयञ्चतुष्टोमस्याप्प्त्या ऽइति तदु तथा न कुर्य्याद्यत्त्वा ऽएतान्यभिसम्पद्यन्ते तेनैवास्य स काम ऽउपाप्प्तो भवति ॥ ९ ॥ तानि वा ऽएतानि । चातुर्म्मास्यानि द्वाषष्टानि त्रीणि शतानि बृहत्त्यः सम्पद्यन्ते तदेभिः सँवत्त्सरञ्च महाव्रतञ्चाप्प्नोत्त्यथो द्विप्प्रतिष्टो वा ऽअयं यजमानो यजमानमेवैतत्त्स्वर्ग्गे लोक ऽआयातयति प्प्रतिष्ठापयति ॥ १० ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ प्रश्नप्रतिवचनैरग्निहोत्रहोमस्य सर्वदेवतृप्तिकरत्वप्रतिपादनम् ]

शौचेयो ह प्प्राचीनयोग्ग्यः । उद्दालकमारुणिमाजगाम ब्ब्रह्मोद्यमग्निहोत्त्रं विविदिषिष्ष्यामीति[1] ॥ १ ॥ स होवाच । गौतम का तेऽग्निहोत्त्री को वत्सः किमुपसृष्टा किᳬं संयोजनङ्किन्दुह्यमानङ्किन्दुग्धङ्किमाह्रियमाणङ्किमधिश्रितङ्किमवज्योत्त्यमानङ्किमद्भिः प्रत्त्यानीतङ्किमुद्वास्यमानङ्किमुद्वा-

(१) 'ग' 'ज' पुस्तकयोः "विविदिषामीति" इति पाठो दृश्यते ।

सितङ्किमुन्नीयमानङ्किमुन्नीतङ्किमुद्यतङ्किᳫं ह्रियमाणङ्किन्नि-
गृहीतम् ॥ २ ॥ काᳫं समिधमादधासि का पूर्व्वाहुतिः
किमुपासीषदः किमपैक्षिष्ठाः कोत्तराहुतिः ॥ ३ ॥ किᳫं
हुत्वा प्प्रकम्पयसि । किᳫं स्रुचम्परिमृज्य कूर्च्चे न्न्यमार्ज्जीः
किन्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपासीषदः किम्पूर्व्व-
म्प्राशीः किन्द्वितीयङ्किमुत्स्रप्प्यापाः किᳫं स्रुच्यप ऽआनीय
निरौक्षीः किन्द्वितीयङ्किन्तृतीयमेतान्दिशमुदौक्षीः किञ्ज-
घनेनाहवनीयमपो न्न्यनैषीः किᳫं समतिष्ठिपो यदि वा
ऽएतद्विद्वानग्निहोत्रमहौषीरथ ते हुतं यद्यु वा ऽअविद्वा-
नहुतमेव त ऽइति ॥ ४ ॥ स होवाच । इडैव मे मानव्व्य-
ग्निहोत्री वायव्व्यो वत्सः सजूरुपस्रष्टा विराट् संय्यो-
जनमाश्विनन्दुह्यमानं वैश्वदेवन्दुग्धं वायव्व्यमाह्रियमाण-
माग्नेयमधिश्रितमैन्द्राग्नमवज्ज्योत्यमानं वारुणमद्भिः
प्प्रत्यानीतं वायव्व्यमुद्वास्यमानन्द्यावापृथिव्व्यमुद्वासितमा-
श्विनमुन्नीयमानं वैश्वदेवमुन्नीतम्महादेवायोद्यतं वाय-
व्व्यᳫं ह्रियमाणं वैष्णवन्निगृहीतम् ॥ ५ ॥ अथ याᳫं
समिधमादधामि । आहुतीनाᳫं सा प्प्रतिष्ठा या
पूर्व्वाहुतिर्द्देवाँस्तयाप्प्रैषं यदुपासीषदम्बार्हस्पत्यन्तद्यदपैक्षि-
षीमञ्चामुञ्च लोकौ तेन समिधां योत्तराहुतिर्म्मा-
न्तया स्वर्ग्गे लोकेऽधाम् ॥६॥ अथ यद्धुत्वा प्प्रकम्पयामि ।
वायव्व्यन्तद्यत्स्रुचम्परिमृज्य कूर्च्चे न्न्यमार्ज्जिषमोषधिवन-
स्पतीँस्तेनाप्प्रैषं यद्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपा-
सीषदम्पितॄँस्तेनाप्प्रैषं यत्पूर्व्वम्प्राशिषम्मान्तेनाप्प्रैषं यद्द्वि-

तीयम्प्रजान्तेनाथ यदुत्तरम्प्याघारम्पशूँस्तेनाथैवं यदत्रुच्च्यप ऽआनीय निरौक्षिषन्द सर्पदेवजनाँस्तेनाथैवं यद्द्वितीय- ङ्गन्धर्वाप्सरसस्तेनाथ यत्तृतीयमेतान्दिशमुदौक्षिषन्ँ स्व- र्ग्गस्य लोकस्य तेन द्वारं व्यवारिषं यज्जघनेनाहवनीय- मपो न्ययनैषमस्म्मै लोकाय तेन वृष्टिमदां यत्समति- ष्ठिपं यत्पृथिव्या ऽऊनन्तत्तेनापूपुरमित्येतन्नौ भगवन्त्स- हेति होवाच ॥ ७ ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यस्मिम- न्काल ऽउद्धृतास्तेऽग्नयः स्युरुपावहृतानि पात्राणि होष्य- न्त्स्या ऽअथ त ऽआहवनीयोऽनुगच्छेद्वेत्थ तद्भयं यदुत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य ज्येष्ठः पुत्रो म्म्रियेत यस्यैतदविदितन्ँ स्याद्विद्याभिस्त्वेवाहमता- रिषमिति किं विदितङ्का प्रायश्चित्तिरिति प्राण ऽउदान- मप्प्यगादिति गार्हपत्य ऽआहुतिञ्जुहुयाञ्ँ सैव प्राय- श्चित्तिर्न्न तदागः कुर्व्वीयेत्येतन्नौ भगवन्त्सहेति होवाच ॥ ८ ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिमन्नेव काले गार्हपत्योऽनुगच्छेद्वेत्थ तद्भयं यदुत्र जुह्वतो भव- तीति वेदेति होवाच पुरा चिरादस्य गृहपतिर्म्म्रियेत यस्यैतदविदितन्ँ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्रायश्चित्तिरित्युदानः प्राणमप्प्यगादित्याहव- नीय ऽआहुतिञ्जुहुयाञ्ँ सैव प्रायश्चित्तिर्न्न तदागः कुर्व्वी- येत्येतन्नौ भगवन्त्सहेति होवाच ॥ ९ ॥ शौचेयो ज्ञप्तः ।

प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव कालेऽन्वाहार्य्यपचनोऽनुगच्छेद्देत्थ तद्धयं य्यदत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य सर्व्वे पशवो म्म्रियेरन्न्यस्यैतदविदितछं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति व्व्यान ऽउदानमप्प्यगादिति गार्हपत्य ऽआहुतिञ्जुहुयाछ सैव प्प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेत्त्येतन्नौ भगवन्त्सहेति होवाच ॥ १० ॥ शौचेयो ज्ञप्तः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले सर्व्वेऽग्न्नयोऽनुगच्छेयुर्व्वेत्थ तद्धयं य्यदत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्यादायादङ्कुलछं स्याद्यस्यैतदविदितछं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्त्वा यान्दिशं व्वातो व्वायात्तान्दिशमाहवनीयमुद्धृत्त्य व्वायव्व्यामाहुतिञ्जुहुयाछं स विद्याछं समृद्धम्मेऽग्निहोत्रमिति सर्व्वदेवत्त्यं व्वायुछं ह्येव सर्व्वाणि भूतान्न्यपियन्ति व्वायोः पुनर्व्विसृज्ज्यन्ते सैव प्प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेत्त्येतन्नौ भगवन्त्सहेति होवाच ॥ ११ ॥ शौचेयो ज्ञप्प्तः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले निवाते सर्व्वेऽग्न्नयोऽनुगच्छेयुर्व्वेत्थ तद्धयं य्यदत्र जुह्वतो भवतीति वेदेति होवाचाप्प्रियमेवास्मिँल्लोके पश्श्येताप्प्रियममुष्म्मिन्न्यस्यैतदविदितछं स्याद्विद्या-

भिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्वा प्प्राञ्चमाहवनीयमुद्धृत्य जघनेना-हवनीयमुपविश्श्याहमेवैनत्पिबेयछ स विद्याथ्ठं समृद्धम्मे-ऽग्निहोत्रछ सर्व्वदेवत्यम्ब्राह्मणथ्ठं ह्येव सर्व्वाणि भूतान्न्य-पियन्ति ब्ब्राह्मणात्पुनर्व्विसृज्ज्यन्ते सैव प्प्रायश्चित्तिर्न्न तदागछ कुर्व्वीयेत्यथ वा ऽअहमेतन्नावेदिषमिति होवाच ॥ १२ ॥ शौचेयो ज्ञप्तछ । इमानि समित्काष्ठान्न्युपायानि भगवन्तमिति स होवाच यदेवन्नावक्ष्यो मूर्द्धा ते व्व्यपति-ष्यदेह्युपेहीति तथेति तछ होपनिन्न्ये तस्म्मै हैताथ्ठं शोकतरां व्व्याहृतिमुवाच यत्सत्त्यन्तस्म्मादु सत्त्यमेव वदेत् ॥ १३ ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ उपनयनधर्मनिरूपणम् ]

ब्रह्मचर्य्यमागामित्त्याह । ब्ब्रह्मण ऽएवैतदात्मानन्नि-वेदयति ब्ब्रह्मचार्य्यसानीत्त्याह ब्ब्रह्मण ऽएवैतदात्मानम्प-रिददात्यथैनमाह को नामासीति प्प्रजापतिर्व्वै कछ प्प्राजा-पत्यमेवैनन्तत्कृत्वोपनयते ॥ १ ॥ अथास्य हस्तङ्गृह्णाति । इन्द्रस्य ब्ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तवासावि-त्येते वै श्श्रेष्ठे बलिष्ठे देवते ऽएताब्भ्यामेवैनथ्ठं श्श्रेष्ठाब्भ्या-म्बलिष्ठाब्भ्यान्देवताब्भ्याम्परिददाति तथा हास्य ब्ब्रह्म-चारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं व्वेद ॥ २ ॥ अथैनम्भूतेब्भ्यछ परिददाति । प्प्रजापतये त्वा परिददामि

देवाय त्वा सवित्रे परिददामीत्येते वै श्रेष्ठे वर्षिष्ठे देवते ऽएताभ्यामेवैनꣳ श्रेष्ठाभ्यां वर्षिष्ठाभ्यान्देवताभ्याम्परिददाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ३ ॥ अद्भ्यस्त्वौषधीभ्यः परिददामीति । तदेनमद्भ्यश्चौषधिभ्यश्च परिददाति द्यावापृथिवीभ्यान्त्वा परिददामीति तदेनमाभ्यान्द्यावापृथिवीभ्याम्परिददाति ययोरिदꣳ सर्वमधि विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या ऽइति तदेनꣳ सर्वेभ्यो भूतेभ्यः परिददात्यरिष्ट्यै तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥४॥ * ब्रह्मचार्य्यसीत्याह । ब्रह्मण ऽएवैनन्तत्परिददात्यपोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह कर्म्म कुर्व्विति वीर्य्यं वै कर्म्म वीर्य्यङ्कुर्व्वित्येवैनन्तदाह समिधमाधेहीति समित्स्वात्मानन्तेजसा ब्रह्मवर्चसेनेत्येवैनन्तदाह मा सुषुप्था ऽइति मा मृथा ऽइत्येवैनन्तदाहापोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह तदेनमुभयतोऽमृतेन परिगृह्णाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ५ ॥ अथास्मै सावित्रीमन्वाह[†] । ताꣳ ह स्मैताम्पुरा सँवत्सरेऽन्वाहुः सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दध्म ऽइति ॥ ६ ॥ अथ षट्सु मासेषु । षड्वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वा-

* अत्रशतम् ५८०० ।
† पा० गृ० सू० २. ३. ३ ।

चन्दद्ध्म ऽइति ॥ ७ ॥ अथ चतुर्विंशत्यहे । चतुर्विंशतिर्वै सँवत्सरस्यार्द्धमासाः सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ८ ॥ अथ द्वादशाहे । द्वादश वै मासा सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ९ ॥ अथ षडहे । षड्वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ १० ॥ अथ त्र्यहे । त्रयो वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥११॥ तदपि श्लोकङ्गायन्ति । आचार्य्यो गर्भी भवति हस्तमाधाय दक्षिणन्तृतीयस्याᳬ स जायते सावित्र्या सह ब्राह्मण ऽइति सद्यो ह त्वाव ब्राह्मणायानुब्रूयादाग्नेयो वै ब्राह्मणः सद्यो वा ऽअग्निर्ज्जायते तस्मात्सद्य ऽएव ब्राह्मणायानुब्रूयात् ॥ १२ ॥ ताᳫ हैतामेके । सावित्रीमनुष्टुभमन्वाहुर्वाग्वा ऽअनुष्टुप्तदस्मिन्वाचन्दद्ध्म ऽइति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयादा न्वा ऽअयमस्य वाचमदित मूको भविष्यतीतीश्वरो ह तथैव स्यात्तस्मादेताङ्गायत्रीमेव सावित्रीमनुब्रूयात् ॥ १३ ॥ अथ हैके दक्षिणतः । तिष्ठते वासीनाय वान्वाहुर्न्न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयाद्बुल्बन्न्वा ऽअयमिममजीजनत बुल्बो भविष्यतीतीश्वरो ह तथैव स्यात्तस्मात्पुरस्तादेव प्रतीचे समीक्षमाणायानुब्रूयात् ॥ १४ ॥ तां वै पच्छोऽन्वाह । त्रयो वै

प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तानेवास्मिँस्तद्दधात्यथा-
र्द्धर्चशो द्वौ वा ऽइमौ प्प्राणौ प्प्राणोदानावेव प्प्राणोदानावे-
वास्मिँस्तद्दधात्यथ कृत्स्नामेको वा ऽअयम्प्राणः कृत्स्न ऽएव
प्प्राणमेवास्मिँस्तत्कृत्स्नन्दधाति ॥ १५ ॥ तदाहुः । न
ब्ब्राह्मणम्ब्रह्मचर्य्यमुपनीय मिथुनञ्चरेद्गर्ब्भो वा ऽएष भवति
यो ब्ब्रह्मचर्य्यमुपैति नेदिमम्ब्राह्मणं व्विषिक्ताद्रेतसो जनया-
नीति ॥ १६ ॥ तदु वा ऽआहुः । काममेव चरेद्द्रप्सो वा
ऽइमाः प्प्रजा दैव्व्यश्चैव मानुष्ष्यश्च ता वा ऽइमा
मानुष्ष्यः प्प्रजाः प्प्रजननात्प्रजायन्ते च्छन्दाᳬसि वै
दैव्व्यः प्प्रजास्तानि मुखतो जनयते तत ऽएतज्जनयते
तस्म्मादु काममेव चरेत् ॥ १७ ॥ तदाहुः । न ब्ब्रह्मचारी
सन्न्मद्ध्वश्नीयादोषधीनां व्वा ऽएष परमो रसो यन्मधु
नेदन्नाद्यस्यान्तङ्गच्छानीत्यथ ह स्म्माह श्वेतकेतुरारुणेयो
ब्ब्रह्मचारी सन्न्मद्ध्वश्नँस्त्रय्यै वा ऽएतद्विद्यायै शिष्टं
य्यन्मधु स तु रसो यस्येदृक्किश्शिष्टमिति यथा ह वा ऽऋचं
व्वा यजुर्व्वा साम वाभिव्व्याहरेत्तादृक्तद्य ऽएवं व्विद्वान्ब्रह्मचारी
सन्न्मद्ध्वश्नाति तस्म्मादु काममेवाश्नीयात् ॥ १८ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

[ शतातिरात्राख्यसत्रविधानमाख्यायिकया ]

देवाव्वा ऽऊर्द्ध्वान्त्स्वर्ग्गँल्लोकं य्यतः । असुरास्तमसा-
न्तरदधुस्ते होचुर्न्न वा ऽअस्यान्न्येन सत्रादपघातोऽस्ति
हन्त सत्रमासामहा ऽइति ॥ १ ॥ ते शताग्निष्टोमः

सत्त्रमुपेयुः । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाघ्नन्नैवमेव शतोक्क्थ्येन यावत्तिष्ठन्परापश्श्येत्तावतस्तमोऽपाघ्नत ॥ २ ॥ ते होचुः । अप वाव तमो हन्महे न त्वेव सर्व्वमिव हन्त प्प्रजापतिम्पितरम्प्रत्ययामेति ते प्प्रजापतिम्पितरम्प्रतीत्त्योचुरसुरा वै नो भगव ऽऊर्द्ध्वान्त्स्वर्ग्गँल्लोकं य्यतस्तमसान्तरदधुः ॥ ३ ॥ ते शताग्निष्टोमः सत्त्रमुपैम । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाहन्महेवमेव शतोक्क्थ्येन यावत्तिष्ठन्परापश्श्येत्तावतस्तमोऽपाहन्महि प्प्र नो भगवञ्छाधि यथासुराँस्तमोऽपहत्त्य सर्व्वम्पाप्प्मानमपहत्त्य स्वर्ग्गँल्लोकम्प्रज्ञास्याम ऽइति ॥ ४ ॥ स होवाच । असर्व्वक्रतुभ्यां वै यज्ञाभ्यामगन्त यदग्निष्टोमेन चोक्क्थ्येन च शतातिरात्रः सत्त्रमुपेत तेनासुराँस्तमोऽपहत्त्य सर्व्वम्पाप्प्मानमपहत्त्य स्वर्ग्गँल्लोकम्प्रज्ञास्यथेति ॥ ५ ॥ ते शतातिरात्रः सत्त्रमुपेयुः । तेनासुराँस्तमोऽपहत्त्य सर्व्वम्पाप्प्मानमपहत्त्य स्वर्ग्गँल्लोकम्प्रजज्ञुस्तेषामर्व्वाक्क्पश्चाशोष्ष्वेवाहःस्वहरभि रात्रिसामानि परीयू रात्रिमभ्यहःसामानि ॥ ६ ॥ ते होचुः । अमुहाम वै न प्प्रजानीमो हन्त प्प्रजापतिमेव पितरम्प्रत्ययामेति ते प्प्रजापतिमेव पितरम्प्रतीत्त्योचुरहन्नो रात्रिसामानि रात्त्यामहन्नो भवन्ति नः ॥ विपश्श्चिद्यज्ञान्मुग्ग्धान्विद्वान्धीरोऽनुशाधि न ऽइति ॥ ७ ॥ तान्हैतदुपजगौ । महाहिमिव वै हृदाद्धलीयानन्ववेत्त्य ॥ अनुत्त स्वादास्त्थानात्ततः सत्त्रन्न तायत ऽइति ॥ ८ ॥ आश्श्विनं वै वः शस्यमानम् । प्रातरनुवाकमास्त्थानादनुत्त

यमास्स्थानादनुद्धन्धीराः सन्तो ऽअधीरवत् ॥ प्रशास्त्रा तमुपेत शनैरप्प्रतिशꣳसतेति ॥ ९ ॥ ते होचुः । कथन्नु भगवः शस्तङ्कथमप्प्रतिशस्तमिति स होवाच यत्र होताश्विनꣳ शꣳसन्नाग्नेयस्य क्रतोर्ग्गायत्रस्य च्छन्दसः पारङ्गच्छात्तत्प्रतिप्प्रस्थाता वसतीवरीः परिहृत्य मैत्रावरुणस्य हविर्द्धानयोः प्प्रातरनुवाकमुपाकुरुतादुच्चैर्होता शꣳसति शनैरितरो जञ्जप्प्यमान ऽइवान्न्वाह तन्न वाचा वाचम्प्रत्येति न च्छन्दसा च्छन्दः ॥ १० ॥ परिहिते प्प्रातरनुवाके । यथायतनमेवोपाꣳशवन्तर्यामौ हुत्वा द्रोणकलशे पवित्रम्[1] प्रपीड्य निदधाति तिरोह्न्यैश्चरित्त्वा प्प्रत्यञ्चः प्प्रातिपरेत्त्य तिरोह्न्यानेव भक्षयाद्धा ऽअथानुपूर्व्वं यज्ञपुच्छꣳ सꣳस्थाप्प्य य ऽऊर्द्ध्वा ऽअन्तर्यामाद्ग्रहास्तान्न्गृहीत्त्वा विप्प्रुषाꣳ होमं[2] हुत्वा सन्तनिञ्च बहिष्प्पवमानेन स्तुत्त्वाहरेव प्प्रातिपद्याद्धा ऽइति ॥ ११ ॥ तदेतेऽभि श्श्लोकाः । चतुर्भिः सैन्धवैर्युक्तैर्द्धीरा व्व्यजहुस्तमः ॥ विद्वाꣳसो ये शतक्रतुदेवाः सत्रमतन्न्वतेति ॥ १२ ॥ चत्त्वारो ह्यत्र युक्ता भवन्ति । द्वौ होतारौ द्वावद्ध्वर्यू पवेर्न्नु शक्केव हनूनि कल्प्पयन्नहन्नोरन्तौ व्व्यतिषजन्त धीराः ॥ न दानवा यज्ञियन्तन्तुमेषां विजानीमो विततम्मोहयन्ति नः ॥ पूर्वस्याह्नः परिशिक्षन्ति कर्म्म तदुत्तरेणाभिवितन्वतेऽह्ना ॥ दुर्व्विज्ञान-

(१) "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ॥ (कर्मप्र०)
"कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ" ( का० श्रौ० सू० २. ३. ३० )

(२) अभिषवे ग्रहणे च पतितानां सोमबिन्दूनां ग्रहणाशक्यत्वात् तत्प्रत्यवायपरिहाराय घृतहोमस्य विप्रुड्ढोम इति संज्ञा ।

ङ्क्ताव्व्यन्देवतानाᳪं सोमाः सोमैर्व्व्यतिषक्ताः प्प्लवन्ते ॥ समानान्त्सदमुक्षन्ति हयान्काष्ठभृतो यथा ॥ पूर्ण्णान्पपरिस्तुतः कुम्भाञ्जनमेजयसादन ऽइत्त्यसुररक्षसान्न्यपेयुः ॥१३॥

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ पञ्चमहायज्ञानां महासत्रत्वप्रतिपादनम् ]

पञ्चैव महायज्ञाः * । तान्त्येव महासत्त्राणि भूतयज्ञो मनुष्ष्ययज्ञः पितृयज्ञो देवयज्ञो ब्ब्रह्मयज्ञ ऽइति ॥ १ ॥ अहरहर्ब्भूतेब्भ्यो बलिᳪं हरेत् । तथैतम्भूतयज्ञᳪं समाप्प्नोत्त्यहरहर्द्दद्यादोदपात्रात्तथैतम्मनुष्ष्ययज्ञᳪं समाप्प्नोत्त्यहरहः स्वधाकुर्य्यादोदपात्रात्तथैतम्पितृयज्ञᳪं समाप्प्नोत्त्यहरहः † स्वाहाकुर्य्यादाकाष्ठात्तथैतन्देवयज्ञᳪं समाप्प्नोति ॥२॥ अथ ब्ब्रह्मयज्ञः । स्वाद्ध्यायो वै ब्ब्रह्मयज्ञस्तस्य वा ऽएतस्य ब्ब्रह्मयज्ञस्य व्वागेव जुहूर्म्मन ऽउपभृच्चक्षुर्द्ध्रुवा मेधा स्त्रुवः सत्त्यमवभृथः स्वर्ग्गो लोक ऽउदयनं य्यावन्तᳪं ह वा ऽइमाम्पृथिवीं वित्तेन पूर्ण्णान्ददँल्लोकञ्जयति त्रिस्तावन्तञ्जयति भूयाᳪंसञ्चाक्षय्यं य्य ऽएवं विद्वानहरहः स्वाद्ध्यायमधीते तस्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ३ ॥ पय ऽआहुतयो ह वा ऽएता देवानाम् । यदृचः स य ऽएवं विद्वानृचोऽहरहः स्वाद्ध्यायमधीते पय ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त

* "अथातः पञ्च महायज्ञाः" पा० गृ० सू० का० २ क० ९ सू० १ ।

† "अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात्" पा० गृ० सू० २. ९. १६ ।

ऽएनन्तृप्प्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ४ ॥ आज्याहुतयो ह वा ऽएता देवानाम् । यद्यजूꣳषि स य ऽएवं विद्वान्न्यजूꣳष्यहरहः स्वाद्ध्यायमधीत ऽआज्याहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्प्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ५ ॥ सोमाहुतयो ह वा ऽएता देवानाम् । यत्सामानि स य ऽएवं विद्वान्त्सामान्न्यहरहः स्वाद्ध्यायमधीते सोमाहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्प्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ६ ॥ मेद ऽआहुतयो ह वा ऽएता देवानाम् । यदथर्व्वाङ्गिरसः स य ऽएवं विद्वानथर्व्वाङ्गिरसोऽहरहः स्वाद्ध्यायमधीते मेद ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्प्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥७॥ मद्ध्वाहुतयो ह वा ऽएता देवानाम् । यदनुशासनानि * विद्या † वाकोवाक्क्यमितिहासपुराणङ्गाथा

* अनुशिष्यन्ते—व्युत्पाद्यन्ते एभिरित्यनुशासनानि-व्याकरणनिरुक्तादीनि षडङ्गानि ।

† न्यायमीमांसादयः ।

( १ ) उक्तिप्रत्युक्तिरूपं प्रकरणं वाकोवाक्यम् ।

नाराशꣳस्यः स य ऽएवं विद्वाननुशासनानि विद्या वाकोवाक्यमितिहासपुराणङ्गाथा नाराशꣳसीरित्यहरहः स्वाध्यायमधीते मद्ध्वाहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्स्वधा ऽअभिवहन्ति ॥ ८ ॥ तस्य वा ऽएतस्य ब्ब्रह्मयज्ञस्य । चत्वारो वषट्कारा यद्वातो वाति यद्विद्योतते यत्स्तनयति यदवस्फूर्ज्जति तस्मादेवंविद्वाते वाति विद्योतमाने स्तनयत्यवस्फूर्ज्जत्यधीयीतैव वषट्काराणामच्छम्बट्कारायाति ह वै पुनर्म्मृत्युम्मुच्च्यते गच्छति ब्ब्रह्मणः सात्मताꣳ स चेदपि प्प्रबलमिव न शक्नुयादप्प्येकन्देवपदमधीयीतैव तथा भूतेब्भ्यो न हीयते ॥ ९ ॥

पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ ११२ ॥



[ स्वाध्यायप्रशंसा ]

अथातः स्वाद्ध्यायप्प्रशꣳसा । प्प्रिये स्वाद्ध्यायप्प्रवचने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्त्थान्त्साधयते सुखꣳ स्वपिति परमचिकित्सक ऽआत्मनो भवतीन्द्रियसंय्यमश्चैकारामता च प्प्रज्ञावृद्धिर्य्यशो लोकपक्तिः प्प्रज्ञा वर्द्धमाना चतुरो धर्म्मान्ब्राह्मणमभिनिष्पादयति ब्ब्राह्मण्यम्प्रतिरूपचर्य्यां य्यशो लोकपक्तिँल्लोकः पच्च्यमान-

श्चतुर्भिर्द्धर्म्मैर्ब्राह्मणम्भुनक्त्यर्च्चया च दानेन चाज्येयतया चावद्ध्यतया च ॥ १ ॥ ये ह वै के च श्रमाः । इमे द्यावापृथिवी ऽअन्तरेण स्वाद्ध्यायो हैव तेषाम्परमता काष्ठा य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ २ ॥ यद्यद्ध वा ऽअयञ्छन्दसः । स्वाद्ध्यायमधीते तेन तेन हैवास्य यज्ञक्रतुनेष्टम्भवति य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ३ ॥ यदि ह वा अप्प्यभ्यक्तः । अलङ्कृतः सुहितः सुखे शयने शयानः स्वाद्ध्यायमधीत ऽआ हैव स नखाग्रेभ्यस्तप्प्यते य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ४ ॥ मधु ह वा ऽऋचः । घृतꣳ ह सामान्यमृतं यजूꣳषि यद्ध वा ऽअयं वाकोवाक्क्यमधीते क्षीरौदनमाꣳसौदनौ हैव तौ ॥ ५ ॥ मधुना ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वानृचोऽहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्प्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ६ ॥ घृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्त्सामान्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्प्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ७ ॥ अमृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्न्यजूꣳष्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्प्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥८॥ क्षीरौदनमाꣳसौदनाभ्याꣳ ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्वाकोवाक्क्यमितिहासपुराणमित्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्प्तास्तर्प्पयन्ति सर्वैः कामैः सर्वै-

र्भोगैः ॥ ९ ॥ यन्ति वा ऽआपः । एत्यादित्य ऽएति चन्द्रमा यन्ति नक्षत्राणि यथा ह वा ऽएता देवता नेयुर्न्न कुर्य्युरेवꣳ हैव तदुहर्ब्राह्मणो भवति यदुहः स्वाध्यायन्ना-धीते तस्मात्स्वाध्यायोऽध्येतव्यस्तस्मादप्यृचं वा यजु-र्वा साम वा गाथां वा कुंव्यां वाभिव्याहरेद्व्रतस्याव्य-वच्छेदाय ॥ १० ॥

पञ्चमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ आख्यायिकया व्याहृत्युत्पत्तिकथनम् ]

प्रजापतिर्व्वा ऽइदमग्र ऽआसीत् । एक ऽएव सोऽका-मयत स्याम्प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानात्त्रयो लोका ऽअसृज्यन्त पृथिव्यन्त-रिक्षन्द्यौः ॥ १ ॥ स ऽइमाँस्त्रीँल्लोकानभितताप । तेभ्य-स्तप्तेभ्यस्त्रीणि ज्योतीꣳष्यजायन्ताग्निर्य्योऽयम्पवते सूर्यः ॥ २ ॥ स ऽइमानि त्रीणि ज्योतीꣳष्यभितताप । तेभ्य-स्तप्तेभ्यस्त्रयो व्वेदा ऽअजायन्ताग्नेर्ऋग्वेदो वायोर्यजु-र्वेदः सूर्यात्सामवेदः ॥ ३ ॥ स इमाँस्त्रीन्वेदानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्यृग्वेदा-द्भुव ऽइति यजुर्वेदात्स्वरिति सामवेदात्तदृग्वेदेनैव होत्रम-कुर्वत यजुर्वेदेनाद्ध्वर्य्यवꣳ सामवेदेनोद्गीथं यदेव त्रय्यै विद्यायै शुक्रन्तेन ब्रह्मत्वमथोच्चक्राम ॥ ४ ॥ ते देवाः प्रजापतिमब्रुवन् । यदि न ऋक्तो वा यजुष्टो वा सामतो वा यज्ञो ह्वलेत्केनैनम्भिषज्येमेति ॥ ५ ॥ स होवाच ।

यद्यृक्तो भूरिति चतुर्गृहीतमाज्यङ्गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुव ऽइति चतुर्गृहीतमाज्यङ्गृहीत्वाग्नीध्रीये जुहवथान्वाहार्य्यपचने† वा हविर्य्यज्ञे यदि सामतः स्वरिति चतुर्गृहीतमाज्यङ्गृहीत्वाहवनीये जुहवथ यद्यु ऽअविज्ञातमसत्सर्वाण्यनुद्रुत्याहवनीये जुहवथ तदृग्वेदेनैवऽर्ग्वेदम्भिषज्यति यजुर्वेदेन यजुर्वेदꣳ सामवेदेन सामवेदꣳ स यथा पर्व्वणा पर्व्व सन्दध्यादेवꣳ हैव स सन्दधाति य ऽएताभिर्भिषज्यत्यथ यो ह्यतोऽन्येन भिषज्यति यथा शीर्णेन शीर्णꣳ सन्धित्सेद्यथा वा शीर्णे गरमभिनिदध्यादेवन्तत्तस्मादेवंविदमेव ब्रह्माणङ्कुर्वीत नानेवंविदम् ॥ ६ ॥ तदाहुः । यदृचा होत्रङ्क्रियते यजुषाध्वर्य्यवꣳ साम्नोद्गीथोऽथ केन ब्रह्मत्वमित्यनया त्रय्या विद्ययेति ह ब्रूयात् ॥ ७ ॥

पञ्चमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥



[ अंश्वदाभ्ययोर्ग्रहयोरात्मवागादिरूपतया समुच्चित्यानुष्ठानम् ]

प्रजापतिर्ह वा ऽएष यदꣳशुः । सोऽस्यैष ऽआत्मैवात्मा ह्ययम्प्रजापतिर्व्वागेवादाभ्यः स यदꣳशुङ्गृहीत्वादाभ्यङ्गृह्णात्यात्मानमेवास्यैतत्संस्कृत्य तस्मिन्नेतां व्वाचम्प्रतिष्ठापयति ॥ १ ॥ अथ मनो ह वा ऽअꣳशुः । व्वागदाभ्यः प्राण ऽएवाꣳशुरुदानोऽदाभ्यश्चक्षुरेवाꣳशुः श्रोत्रमदा-

† अन्वाहार्यपचने—दक्षिणाग्नौ ।

ब्भ्यस्तद्यदेतौ ग्ग्रहौ गृह्णन्ति सर्व्वत्वायैव कृत्स्नतायै ॥ २ ॥ अथ देवाश्च ह वा ऽअसुराश्च । उभये प्प्राजापत्त्या ऽअस्प्पर्द्धन्त त ऽएतस्म्मिन्नेव यज्ञे प्प्रजापतावस्प्पर्द्धन्ता-स्म्माकमयꣳ स्यादस्म्माकमयꣳ स्यादिति ॥ ३ ॥ ततो देवाः । अर्च्चन्तः श्राम्म्यन्तश्चेरुस्त ऽएतन्नहन्ददृशुरेत-मदाब्भ्यन्तमगृह्णत ते सवनानि प्प्रावृहन्त ते सर्वꣳ यज्ञꣳ समवृञ्जतान्तरायन्नसुरान्न्यज्ञात् ॥ ४ ॥ ते होचुः । अदभाम वा ऽएनानिति तस्म्मादुदाब्भ्यो न वै नोऽदभन्निति तस्म्मा-दुदाब्भ्यो व्वाग्ग्वा ऽअदाब्भ्यः सेयमदब्धा व्वाक्कस्म्मा-द्द्वेवादाब्भ्य ऽएवꣳ ह वै द्विषतो ब्भ्रातृव्व्यस्य सर्वꣳ यज्ञꣳ संव्वृङ्क्त ऽएवन्द्विषन्तम्भ्रातृव्व्यꣳ सर्व्वस्म्माद्यज्ञा-न्निर्ब्भजति बहिर्द्धा करोति य ऽउ ऽएवमेतद्वेद ॥ ५ ॥ स येनैव पात्रेणाꣳशुङ्गृह्णाति । तस्म्मिन्नेव पात्रे निग्ग्राब्भ्या-ब्भ्योऽप ऽआनीय तस्म्मिन्नेतानꣳशून्न्गृह्णाति A ॥६॥ 'उपयाम[1]गृहीतोऽसि । अग्ग्नये त्वा गायत्रच्छन्दसङ्गृह्णामी'ति गायत्र-म्प्रातःसवनन्तत्प्रातःसवनम्प्रवृहन्ती'न्द्राय[2] त्वा त्रिष्टुप्प्छन्द-सङ्गृह्णामी'ति त्रैष्टुभम्माध्यन्दिनꣳ सवनन्तन्माध्यन्दिनꣳ सवनम्प्रवृहति 'व्विश्वेब्भ्यस्त्वा[3] देवेब्भ्यो जगच्छन्दसङ्गृ-ह्णामी'ति जागतन्तृतीयसवनन्तत्तृतीयसवनम्प्रवृहत्य'नुष्टु-प्प्तेऽभिगर'[4] ऽइति यद्वा ऽऊर्द्ध्वꣳ सवनेब्भ्यस्तदानुष्टुभन्त-

(१) अभिषोतव्यस्य सोमस्य सेवनीया आपो निग्राभ्या उच्यन्ते।

(A) का० श्रौ० सू० अ० १२ क० ५ सू० १६।

(२) शु० य० वे० सं० अ० ८ क० ४७। (३) शु० य० वे० सं० अ० ८ क० ४७। (४) शु० य० वे० सं० अ० ८ क० ४७। (५) शु० य० वे० सं० अ० ८ क० ४७।

देवैतत्प्रवृहति तन्नाभिषुणोति वज्रो वै ग्ग्रावा वागदाभ्यो नेद्वज्रेण वाचꣳ हिनसानीति ॥ ७ ॥ अꣳशूनेवाधूनोतिB । '[1]ऽव्रेशीनान्त्वा पत्मन्नाधूनोमि कुकूननानान्त्वा पत्मन्नाधूनोमि भन्दनानान्त्वा पत्मन्नाधूनोमि मदिन्तमानान्त्वा पत्मन्नाधूनोमि मधुन्तमानान्त्वा पत्मन्नाधूनोमी'त्येता वै देवीरापस्तद्याश्चैव देवीरापो याश्चेमा मानुष्ष्यस्ताभिरेवास्मिन्नेतदुभयीभी रसन्दधाति ॥ ८ ॥ '[2]शुक्रन्त्वा शुक्र ऽआधूनोमी'ति। शुक्रꣳ ह्येतच्छुक्र ऽआधूनो'त्यह्नो रूपे [3]सूर्य्यस्य रश्मिमष्ष्वि'ति तदह्नश्चैवैनमेतद्रूपे सूर्य्यस्य च रश्मिमष्ष्वाधूनोति ॥ ९ ॥ '[4]ककुभꣳ रूपं व्वृषभस्य रोचते बृहदि'ति । एतद्वै ककुभꣳ रूपं व्वृषभस्य रोचते बृहद्य ऽएष तपति '[5]शुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगा' ऽइति तच्छुक्रमेवैतच्छुक्रस्य पुरोगाङ्करोति सोमꣳ सोमस्य पुरोगां '[6]यत्ते सोमादाभ्यन्नाम जागृवि तस्म्मै त्वा गृह्णामी'त्येतद्ध वा ऽअस्यादाभ्यन्नाम जागृवि यद्वाक्तद्वाचमेवैतद्वाचे गृह्णाति ॥ १० ॥ अथोपनिष्क्रम्म्य जुहोति* । '[7]तस्म्मै ते सोम सोमाय स्वाहे'ति तत्सोममेवैतत्सोमाय जुहोति तथो वाचमग्नौ न प्प्रवृणक्त्यथ हिरण्यमभिव्व्यनित्य-

---

(B) का॰ श्रौ॰ सू॰ १२. ५. १९ ।
(१) शु॰ य॰ वे॰ सं॰ अ॰ ८ क॰ ४८ । (२) शु॰ य॰ वे॰ सं॰ अ॰ ८ क॰ ४८ । (३) शु॰ य॰ वे॰ सं॰ अ॰ ८ क॰ ४८ । (४) शु य॰ वे॰ सं॰ अ॰ ८ क॰ ४९ । (५) शु॰ य॰ वे॰ सं॰ अ॰ ८ क॰ ४९ । (६) शु॰ य॰ वे॰ सं॰ अ॰ ८ क॰ ४९ ।
* "तस्मै त इति जुहोति" का॰ श्रौ॰ सू॰ १२. ५. २ ।
(७) शु॰ य॰ वे॰ सं॰ अ॰ ८ क॰ ४९ ।

सावेव बन्धुस्तस्य तावतीरेव दक्षिणा यावतीरꣳशोः * ॥ ११ ॥ अथाꣳशून्पुनरप्यर्जति † । 'उशिक्त्वन्देव सोमाग्नेः प्रियम्पाथोऽपीहि वशी त्वन्देव सोमेन्द्रस्य प्रियम्पाथोऽपीह्यस्मत्सखा त्वन्देव सोम विश्वेषान्देवानाम्प्रियम्पाथोऽपीही'ति सवनानि वा ऽअदः प्रवृहति तान्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामैर्यज्ञन्तन्वते ॥ १२ ॥

पञ्चमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ आख्यायिकया समिदाधानादीनां वनस्पत्यादिरूपफलप्राप्तिसाधनताकथनम् ]

भृगुर्ह वै वारुणिः । वरुणम्पितरं विद्ययातिमेने तद्ध वरुणो विद्दाञ्चकारा‌ति वै मा विद्यया मन्यत ऽइति ॥ १ ॥ स होवाच । प्राङ् पुत्रक व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वा दक्षिणा व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वा प्रत्यग्व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वोदग्व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वैतयोः पूर्वयोरुत्तरमन्ववान्तरदेशं व्रजतात्तत्र यत्पश्येस्तन्म ऽआचक्षीथा ऽइति ॥ २ ॥ स ह तत ऽएव प्राङ् प्रवव्राज । इदु पुरुषैः पुरुषान्पर्वाण्येषाम्पर्वशः संव्रश्चम्पर्वशो विभजमानानिदन्तवेदम्म-

* "अङ्शुवद्दक्षिणा" का० श्रौ० सू० १२. ५. २२ ।

† का० श्रौ० सू० १२. ५. २१ ।

(१) शु० य० वे० सं० अ० ८ क० ५० ।

मेति स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषाः पर्वाण्यन्येषाम्पर्वशः संव्वृश्चम्पर्वशो ऽत्यभक्षतेति ते होचुरित्थं व्वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदुमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्ती३रित्त्यस्तीति कातिं पिता ते वेदेति ॥ ३ ॥ स ह तत ऽएव दक्षिणा प्प्रवव्राज । इदु पुरुषैः पुरुषान्पर्वाण्यन्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो विभजमानानिदन्तवेदम्ममेति स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषाः पर्वाण्यन्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो ऽत्यभक्षतेति ते होचुरित्थं व्वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदुमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्ती३रित्त्यस्तीति कातिं पितैव ते वेदेति ॥ ४ ॥ स ह तत ऽएव प्प्रत्यङ् प्रवव्राज । इदु पुरुषैः पुरुषाँस्तूष्णीमासीनाँस्तूष्णीमासीनैरद्यमानान्त्स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषास्तूष्णीमासीनाँस्तूष्णीमासीना ऽअदन्तीति ते होचुरित्थं व्वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदुमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्ती३रित्त्यस्तीति कातिं पितैव ते वेदेति ॥ ५ ॥ स ह तत ऽएवोदङ् प्रवव्राज । इदु पुरुषैः पुरुषानाक्रन्दयत ऽआक्रन्दयद्भिरद्यमानान्त्स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषा ऽआक्रन्दयत ऽआक्रन्दयन्तोऽदन्तीति ते होचुरित्थं व्वा ऽइमेऽस्मानमु-

---

( १ ) 'ग' 'ज' पुस्तकयोः 'एदु' इति पाठ उपलभ्यते ।

ष्म्मँल्लोकेऽसचन्त तान्न्वयमिदमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्तीऽरित्त्यस्तीति कातिं पितैव ते वेदेति ॥ ६ ॥ स ह तत ऽएवैतयोः पूर्व्वयोः । उत्तरमन्ववान्तरदेशम्प्रवव्राजेदु स्त्रियौ कल्ल्याणी चातिकल्ल्याणी च ते ऽअन्तरेण पुरुषः कृष्ष्णः पिङ्गाक्षो दण्डपाणिस्तस्थौ तꣳ हैनन्दृष्ट्वा भीर्व्विवेद स हेत्त्य संव्विवेश तꣳ ह पितोवाचाधीष्ष्व स्वाद्ध्यायङ्कस्स्मान्नु स्वाद्ध्यायन्नाधीष ऽइति स होवाच किमद्ध्येष्ष्ये न किञ्चनास्तीति तद्ध व्वरुणो विदाञ्चकाराद्व्येग्ग्वा ऽइति ॥ ७ ॥ स होवाच । यान्वैतत्प्राच्च्यान्दिश्श्यद्राक्षीः पुरुषैः पुरुषान्प्पर्व्वाण्ण्येषाम्पर्व्वशः संव्व्रश्च्चम्पर्व्वशो व्विभजमानानिदन्तवेदम्ममेति व्वनस्प्पतयो वै ते ऽअभूवन्त्स यद्वनस्प्पतीनाꣳ समिधमादधाति तेन व्वनस्प्पतीनवरुन्द्धे तेन व्वनस्प्पतीनाँल्लोकञ्जयति ॥ ८ ॥ अथ यानेतद्दक्षिणायान्दिश्श्यद्राक्षीः । पुरुषैः पुरुषान्प्पर्व्वाण्ण्येषाम्पर्व्वशः सङ्कर्त्तम्पर्व्वशो व्विभजमानानिदन्तवेदम्ममेति पशवो वै ते ऽअभूवन्त्स यत्पयसा जुहोति तेन पशूनवरुन्द्धे तेन पशूनाँल्लोकञ्जयति ॥ ९ ॥ अथ यानेतत्प्रतीच्च्यान्दिश्श्यद्राक्षीः । पुरुषैः पुरुषाँस्तूष्ष्णीमासीनाँस्तूष्ष्णीमासीनैरद्यमानानोषधयो वै ता ऽअभूवन्त्स यत्तृणेनावज्ज्योतयति तेनौषधीरवरुन्द्धे तेनौषधीनाँल्लोकञ्जयति ॥ १० ॥ अथ यानेतदुदीच्च्यान्दिश्श्यद्राक्षीः । पुरुषैः पुरुषानाक्क्रन्दयत ऽआक्क्रन्दयद्भिरद्यमानानापो वै ता ऽअभूवन्त्स

(१) 'ध्य' इत्यस्य स्थाने 'द्रा' इति 'ग' 'ज' पुस्तकयोः ।

यदपः प्प्रत्यानयति तेनापोऽवरुन्द्धे तेनापाँल्लोकञ्जयति ॥ ११ ॥ अथ ये ऽएते । स्त्रियावद्राक्षीः कल्ल्याणीश्चाति-कल्ल्याणीश्च सा या कल्ल्याणी सा श्श्रद्धा स यत्पूर्वा-माहुतिञ्जुहोति तेन श्श्रद्धामवरुन्द्धे तेन श्श्रद्धाञ्जयत्यथ यातिकल्ल्याणी साऽश्रद्धा स यदुत्तरामाहुतिञ्जुहोति तेनाऽश्रद्धामवरुन्द्धे तेनाऽश्रद्धाञ्जयति ॥१२॥ अथ य ऽएने । सोऽन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिरस्त्था-त्क्रोधो वै सोऽभूत्स यत्स्रुच्च्यप ऽआनीय निनयति तेन क्क्रोधमवरुन्द्धे तेन क्क्रोधञ्जयति स य ऽएवं विद्वान-ग्निहोत्रञ्जुहोति तेन सर्वञ्जयति सर्वमवरुन्द्धे ॥ १३ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ आख्यायिकयाग्निहोत्राहुतिप्राशस्त्यप्रतिपादनम् ]

जनको ह वै वैदेहः । ब्ब्राह्मणैर्द्धावयद्भिः समाजगाम श्श्वेतकेतुनारुणेयेन सोमशुष्ष्मेण सात्त्ययज्ञिना याज्ञ-वल्क्येन तान्होवाच कथङ्कथमग्निहोत्रञ्जुहुथेति ॥ १ ॥ स होवाच । श्श्वेतकेतुरारुणेयो घर्म्मावेव सम्म्राडहमजस्रौ यशसा वि[1]ष्प्पन्दमानावन्न्योऽन्न्यस्मिञ्जुहोमीति कथन्त-दित्त्यादित्त्यो वै घर्म्मस्तः सायमग्नौ जुहोम्म्यग्निर्वै घर्म्म-स्तम्प्रातरादित्त्ये जुहोमीति किं स भवति य ऽएवञ्जुहोत्त्य-जस्र ऽएव श्श्रिया यशसा भवत्त्येतयोश्च देवतयोः सायुज्यं सलोकताञ्जयतीति ॥ २ ॥ अथ होवाच सोमशुष्ष्मः सात्त्य-यज्ञिः । तेज ऽएव सम्म्राडहन्तेजसि जुहोमीति कथन्त-

(१) 'विष्यन्द' इति 'ग' 'ज' पुस्तकयोः ।

दित्यादित्यो वै तेजस्तꣳ सायमग्नौ जुहोम्म्यग्निर्वै तेजस्त-
म्प्रातरादित्ये जुहोमीति किꣳ स भवति य ऽएवञ्जुहोतीति
तेजस्वी यशस्व्यन्नादो भवत्त्येतयोश्चैव देवतयोः सायुज्यꣳ
सलोकताञ्जयतीति ॥ ३ ॥ अथ होवाच याज्ञवल्क्यः ।
यदहमग्निमुद्धराम्म्यग्निहोत्रमेव तदुद्यच्छाम्म्यादित्यं वा
ऽअस्तं य्यन्तꣳ सर्व्वे देवा ऽअनुयन्ति ते म ऽएतमग्नि-
मुद्धृतन्दृष्ट्वोपावर्त्तन्तेऽथाहम्पात्राणि निर्णिज्ज्योपवाप्प्या-
ग्निहोत्रीन्दोहयित्वा पश्श्यन्न्पश्श्यतस्तर्प्पयामीति त्वन्ने-
दिष्ठं य्याज्ञवल्क्याग्निहोत्रस्यामीमाꣳसिष्ठा धेनुशतन्ददा-
मीति होवाच न त्त्वेवैनयोस्त्वमुत्क्रान्तिन्न गतिन्न प्प्रति-
ष्ठान्न तृप्तिन्न पुनरावृत्तिन्न लोकम्प्रत्त्युत्थायिनमित्त्युक्त्वा
रथमास्त्थाय प्प्रधावयाञ्चकार ॥ ४ ॥ ते होचुः । अति वै
नोऽयꣳ राजन्न्यबन्धुरवादीद्धन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति
स होवाच याज्ञवल्क्यो ब्ब्राह्मणा वै व्वयꣳ स्स्मो राज-
न्न्यबन्धुरसौ यद्यमुं व्वयञ्जयेम कमजैष्म्मेति ब्ब्रूयामाथ
यद्यसावस्म्माञ्जयेद्ब्राह्मणान्न्राजन्न्यबन्धुरजैषीदिति नो ब्ब्रू-
युर्म्मेदमाद्दृद्ध्वमिति तद्धास्य जज्ञुरथ ह याज्ञवल्क्यो रथ-
मास्त्थायानुप्प्रधावयाञ्चकार तꣳ हान्न्वाजगाम स होवा-
चाग्निहोत्रं य्याज्ञवल्क्य व्वेदितूश्मित्त्यग्निहोत्रꣳ सम्म्राडिति
॥ ५ ॥ ते वा ऽएते ऽआहुती हुते ऽउत्क्रामतः । ते
ऽअन्तरिक्षमाविशतस्ते ऽअन्तरिक्षमेवाहवनीयङ्कुर्व्वाते वायुꣳ
समिधम्मरीचीरेव शुक्क्रामाहुतिन्ते ऽअन्तरिक्षन्तर्प्पयतस्ते
तत ऽउत्क्रामतः ॥ ६ ॥ ते दिवमाविशतः । ते दिवमेवा-

हवनीयङ्कुर्व्वाते ऽआदित्यꣳ समिधश्चन्द्रमसमेव शुक्का-
माहुतिन्ते दिवन्तर्प्पयतस्ते तत ऽआवर्त्तेते ॥ ७ ॥ ते
ऽइमामाविशतꣳ । ते ऽइमामेवाहवनीयङ्कुर्व्वाते ऽअग्निꣳ
समिधमोषधीरेव शुक्रामाहुतिन्ते ऽइमान्तर्प्पयतस्ते तत
ऽउत्क्रामतꣳ ॥ ८ ॥ ते पुरुषमाविशतꣳ । तस्य मुखमेवाह-
वनीयङ्कुर्व्वाते जिह्वाꣳ समिधमन्नमेव शुक्रामाहुतिन्ते
पुरुषन्तर्प्पयतꣳ स य ऽएवं विद्वानश्नात्यग्निहोत्रमेवास्य
हुतम्भवति ते तत ऽउत्क्रामतꣳ ॥९॥ [अर्धः प्रपाठकः ॥५१॥]
ते स्त्रियमाविशतꣳ । तस्या ऽउपस्थमेवाहनीयङ्कुर्व्वाते धार-
काꣳ समिधन्धारका ह वै नामैषैतया ह वै प्प्रजापतिꣳ
प्प्रजा धारयाञ्चकार रेत ऽएव शुक्रामाहुतिन्ते स्त्रियन्तर्प्पयतꣳ
स य ऽएवं विद्वान्मिथुनमुपैत्यग्निहोत्रमेवास्य हुतम्भवति
यस्ततꣳ पुत्रो जायते स लोकꣳ प्प्रत्युत्थाय्येतदग्निहोत्रं
ऽयाज्ञवल्क्य नातꣳ परमस्तीति होवाच तस्मै ह याज्ञवल्क्यो
व्वरन्ददौ स होवाच कामप्प्रश्न ऽएव मे त्वयि याज्ञवल्क्यास
दिति ततो ब्ब्रह्मा जनक ऽआस ॥ १० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ आख्यायिकयाऽग्निहोत्रदर्शपूर्णमासादियागदेवतानां तत्त्वतः प्राण-
शब्दाभिधेयपरमात्मरूपताप्रतिपादनम् ]

जनको ह वैदेहꣳ । बहुदक्षिणेन यज्ञेनेजे स ह
गवाꣳ सहस्रमवरुन्धन्नुवाचैता वो ब्ब्राह्मणा यो ब्ब्रह्मिष्ठꣳ
स ऽउदजतामिति ॥ १ ॥ स होवाच याज्ञवल्क्यꣳ ।

(१) ब्रह्मिष्ठः ।

अर्वाचीरेता ऽइति ते होचुस्त्वᳬं स्विन्नो याज्ञवल्क्य ब्ब्रह्मिष्ठोऽसी३ ऽइति स होवाच नमोऽस्तु ब्ब्रह्मिष्ठाय गोकामा ऽएव व्वयᳬं स्म ऽइति ॥ २ ॥ ते होचुः । को न ऽइमम्प्रक्ष्यतीति स होवाच विदग्धः शाकल्ल्योऽहमिति तᳬं ह प्प्रतिख्यायोवाच त्वाᳬं स्विच्छाकल्ल्य ब्ब्राह्मणा ऽउल्म्मुकावक्षयणमक्रूता३ ऽइति ॥ ३ ॥ स होवाच । कति देवा याज्ञवल्क्येति त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति त्रयस्त्रिᳬंशदित्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति त्रय ऽइत्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति द्वावित्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येत्त्यद्ध्यर्द्ध ऽइत्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येत्त्येक ऽइत्त्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ ४ ॥ स होवाच । महिमान ऽएवैषामेते त्रयस्त्रिᳬंशत्त्वेव देवा ऽइति कतमे ते त्रयस्त्रिᳬंशदित्त्यष्टौ व्वसव ऽएकादश रुद्रा द्वादशादित्त्यास्त ऽएकत्रिᳬंशदिन्द्रश्चैव प्प्रजापतिश्च त्रयस्त्रिᳬंशाविति ॥ ५ ॥ कतमे व्वसव ऽइति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते व्वसव ऽएते हीदᳬं सर्वं व्वासयन्ते ते यदिदᳬं सर्वं व्वासयन्ते तस्माद्वसव ऽइति ॥ ६ ॥ कतमे रुद्रा ऽइति । दशेमे पुरुषे प्प्राणा ऽआत्त्मैकादशस्ते यदास्म्मान्मर्त्त्याच्छरीरादुत्क्रामन्त्यथ रोद-

(१) अर्धदग्धकाष्ठमुल्मुकम्—तस्य वहिर्निरसनमवक्षयणम् ।

यन्ति तद्यद्रोदयन्ति तस्मादुद्रा ऽइति ॥ ७ ॥ कतम ऽआदित्त्या ऽइति । द्वादश मासाः सँव्वत्सरस्यैत ऽआदित्त्या ऽएते हीदꣳ सर्व्वमाददाना यन्ति ते यदिदꣳ सर्व्वमाददाना यन्ति तस्मादादित्त्या ऽइति ॥ ८ ॥ कतम ऽइन्द्रः कतमः प्प्रजापतिरिति । स्तनयित्त्नुरेवेन्द्रो यज्ञः प्प्रजापतिरिति कतम स्तनयित्त्नुरित्त्यशनिरिति कतमो यज्ञ ऽइति पशव ऽइति ॥ ९ ॥ कतमे ते त्रयो देवा ऽइति । इम ऽएव त्त्रयो लोका ऽएषु हीमे सर्व्वे देवा ऽइति कतमौ तौ द्वौ देवावित्त्यन्नञ्चैव प्प्राणश्चेति कतमोऽद्ध्यर्द्ध ऽइति योऽयम्पवत ऽइति [1]यदस्मिन्निदꣳ सर्व्वमद्ध्याद्ध्नोत्तेनाद्ध्यर्द्ध ऽइति कतम ऽएको देव ऽइति प्प्राण ऽइति ॥ १० ॥ स होवाच । अनतिप्प्रश्न्यां म्मा देवतामत्त्यप्राक्षीः पुरेतिथ्यै मरिष्ष्यसि न तेऽस्त्थीनि चन गृहान्प्प्राप्प्स्यन्तीति स ह तथैव ममार तस्य हाप्प्यन्न्यन्न्मन्न्यमानाः परिमोषिणोऽस्त्थीन्न्यपजह्रुस्तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवति ॥ ११ ॥

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥



[ पशुबन्धप्रशंसा ]

पशुबन्धेन*यजते । पशवो वै पशुबन्धः स यत्पशुबन्धेन यजते पशुमानसानीति तेन गृहेषु † यजेत

(१) 'यदस्मिन्निदꣳ सर्व्वमद्ध्याध्नोत्तेनाद्ध्यर्द्ध ऽइति' इति पाठः 'ग' 'ज' पुस्तकयोर्नास्ति ।

* पशुर्वध्यते यज्ञार्थं यस्मिन्कर्मणि स पशुबन्धाख्यो यागः ।
उद्भिदा यजेतेतिवद्यजिसमानाधिकृतत्वाद्यागनामधेयम् ॥

† का० श्रौ० सू० ६. १. ३. ।

गृहेषु पशून्बद्ध्नाऽइति तेन सुयवसे (A) यजेत सुयवसे पशून्बद्ध्ना इति जीर्य्यन्ति ह वै जुह्वतो यजमानस्याग्नयोऽग्नीञ्जीर्य्यतोऽनु यजमानो यजमानमनु गृहाश्च पशवश्च ॥ १ ॥ * स यत्पशुबन्धेन यजते । अग्नीनेवैतत्पुनर्णवान्कुरुतेऽग्नीनाम्पुनर्णवतामनु यजमानो यजमानमनु गृहाश्च पशवश्चायुष्यो ह वाऽअस्यैषऽआत्मनिष्क्रयणो भवति माꣳसीयन्ति (B) ह वै जुह्वतो यजमानस्याग्नयस्ते यजमानमेव ध्यायन्ति यजमानꣳ सङ्कल्पयन्ति पचन्ति वाऽअन्येष्वग्निषु वृथा माꣳसमथैतेषान्नातोऽन्या माꣳसाशा विद्यते यस्यो चैते भवन्ति ॥ २ ॥ स यत्पशुबन्धेन यजते । आत्मानमेवैतन्निष्क्रीणीते वीरेण वीरं वीरो हि पशुर्वीरो यजमानऽएतदु ह वै परममन्नाद्यं यन्माꣳसꣳ स परमस्यैवान्नाद्यस्यात्ता भवति तं वै सँवत्सरो नानीजानमतीयादायुर्वै सँवत्सर आयुरेवैतदमृतमात्मन्धत्ते ॥ ३ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पशुबन्धस्येष्टिविधत्वम्, सोमविधत्वञ्च ]

हविर्यज्ञविधो ह वाऽअन्यः पशुबन्धः । सवविधोऽन्यः स हैष हविर्यज्ञ[1]विधो यस्मिन्व्रतमुपनयति

(A) शोभनानि यवसानि तृणानि यस्मिन्नृतौ स कालः सुयवसः ।

* शतम् ५९०० ।

(B) मांसीयन्ति = मांसं खादितुमिच्छन्ति ।

(१) "व्रतोपायन-प्रणीताज्यभाग-भागावदान-पूर्णपात्र-विष्णुक्रमान् कुर्याद्धविर्यज्ञविधे" (का० श्रौ० सू० ६. २. ४)

यस्मिन्नपः प्प्रणयति यस्मिन्न्पूर्णपात्रन्निनयति यस्मिन्न्विष्णुक्रमान्क्रमयत्यथ हैष सर्वविधो यस्मिन्नेतानि न क्रियन्ते ॥ १ ॥ तदाहुः । इष्टिः पशुबन्धा३ महायज्ञा३ ऽइति महायज्ञ ऽइति ह ब्रूयादिष्टिं वै तर्हि पशुबन्धमकुर्व्वन्येनमक्रक्षथा ऽइत्येनम्ब्रूयात् ॥ २ ॥ तस्य प्प्रयाजा ऽएव प्प्रातःसवनम् । अनुयाजास्तृतीयसवनम्पुरोडाश ऽएव माध्यन्दिनꣳ सवनम् ॥ ३ ॥ तद्धैके । वपायाꣳ हुतायान्दक्षिणा नयन्ति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयाद्वर्हिर्द्धा न्वा ऽअयम्प्राणेभ्यो दक्षिणा ऽअनैषीन्न प्प्राणानदद्क्षदन्धो वा स्रामो वा बधिरो वा पक्षहतो वा भविष्यतीतीश्श्वरो ह तथैव स्यात् ॥ ४ ॥ इत्थमेव कुर्य्यात् । पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेदैन्द्रो वा ऽअयम्मध्यतः प्प्राण ऽइममेवैतदैन्द्रम्मध्यतः प्प्राणन्दक्षिणाभिर्द्दक्षयत्यैन्द्रं वै माध्यन्दिनꣳ सवनम्माध्यन्दिने वै सवने दक्षिणा नीयन्ते तस्मात्पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेत् ॥ ५ ॥ तदाहुः । अद्ध्वर्य्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते क्वैनमदिदीक्ष ऽइत्यावभृथादनूहꣳहेयुरद्ध्वर्य्युश्च प्प्रतिप्प्रस्त्थाता च होता च मैत्रावरुणश्च ब्रह्मा चाग्नीद्ध्रश्चैतैर्वा ऽएष षड्ढोता * तमनुद्रुत्य षड्ढोतारञ्जुहोत्येकामाहुतिङ्कृत्वा पञ्च वाज्या 'द्यौष्पृष्ठमन्तरिक्षमात्मा-ङ्गैर्यज्ञम्पृथिवीꣳ शरीरैः । व्वाचस्प्पतेऽच्छिद्रया वाचा-

---

* षट् होतारो होमनिष्पादका यस्मिन् स षड्ढोता ।

(१) "षड्ढोतारं पञ्चगृहीतं मनसानुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा" ( का० श्रौ० सू० ६. १. ३३ )

च्छिद्रया जुह्वा दिवि देवावृधꣳ होत्रामैरयत्स्वाहे'ति सैव दीक्षा ॥ ६ ॥ तदाहुः । अद्धर्य्यो यद्दीक्षितस्य नानवभृथोऽवकल्प्पते क्क्वैनमवभृथमवनेष्ष्यसीति स यद्धृदयशूलेन चरन्ति स हैवैतस्यावभृथः ॥ ७ ॥ मधुको ह स्म्माह पैङ्ग्यः । विसोमेन वा ऽएके पशुबन्धेन यजन्ते ससोमेनैके दिवि वै सोम ऽआसीत्तङ्गायत्री वयो भूत्त्वाहरत्तस्य यत्पर्ण्णमच्छिद्यत तत्पर्ण्णस्य पर्ण्णत्त्वमिति न्न्वा ऽएतद्ब्राह्मणमुद्यते विसोमेन वा ऽएके पशुबन्धेन यजन्ते ससोमेनैके स हैष विसोमेन पशुबन्धेन यजते योऽन्न्यम्पालाशाद्यूपङ्कुरुतेऽथ हैष ससोमेन पशुबन्धेन यजते यः पालाशं यूपङ्कुरुते तस्म्मात्पालाशमेव यूपङ्कुर्वीत ॥ ८ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ बहुसारस्य यूपस्य पशुविरोधित्वम्, अल्पसारस्य पशुसमृद्धिकरत्वञ्च ]

स य ऽएष बहुसारः । स हापशव्व्यस्तस्म्मात्तादृशम्पशुकामो यूपन्न कुर्वीताथ य ऽएष फल्गुप्प्रासहः स ह पशव्व्यस्तस्म्मात्तादृशम्पशुकामो यूपङ्कुर्वीत ॥ १ ॥ अथ यस्यैतद्वक्क्रस्य सतः । शूल ऽइवाग्ग्रम्भवति स ह कपोती नाम स यो ह तादृशं यूपङ्कुरुते पुरा हायुषोऽमुँल्लोकमेति तस्म्मात्तादृशमायुष्क्कामो यूपन्न कुर्वीत ॥ २ ॥ अथ य ऽएष ऽआनतः । उपरिष्टादुपनतो मद्ध्ये सोऽशनायै रूपꣳ स यो ह तादृशं यूपङ्कुरुतेऽशनायुका हास्य भार्य्या

(१) का० श्रौ० सू० अ० ६ क० १ सू० ८ ।

भवन्ति तस्म्मात्तादृशमन्नाद्यकामो यूपन्न कुर्वीताथ य ऽएष ऽआनत ऽउपरिष्ट्टादुपनतो मद्ध्ये सोऽन्नाद्यस्य रूप-न्तस्म्मात्तादृशमन्नाद्यकामो यूपङ्कुर्वीत ॥ ३ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ यूपप्रमाणम् ]

स यत्पशुना यक्ष्यमाणः । एकारत्निं ऽयूपङ्कुरुत ऽइममेव तेन लोकञ्जयत्यथ यद्‌द्व्यरत्निमन्तरिक्षलोक-मेव तेन जयत्यथ यत्त्र्यरत्निन्दिवमेव तेन जयत्यथ यच्चतुररत्निन्दिश ऽएव तेन जयति स वा ऽएष त्र्यर-त्निर्वैव चतुररत्निर्वा * पशुबन्धयूपो भवत्यथ योऽत ऽऊर्द्ध्वः सौम्म्यस्यैव सोऽद्ध्वरस्य ॥ १ ॥ तदाहुः । यजेदाज्यभागौ ना३ ऽइति यजेदित्याहुश्चक्षुषी वा ऽएते यज्ञस्य यदाज्यभागौ किम्मृते पुरुषश्चक्षुर्ब्भ्यांᳬ स्यादिति यावद्वै भागिनᳬ स्वेन भागधेयेन न निर्ब्भजन्त्यनिर्ब्भक्तो वै स तावद्मन्यतेऽथ यदैव तᳬ स्वेन भागधेयेन निर्ब्भ-जन्त्यथैव स निर्ब्भक्तो मन्यते स यत्रैतद्धोतान्न्वाहास्न्ना रक्षः सᳬसृजतादिति तदेनᳬ स्वेन भागधेयेन निर्ब्भ-जति ॥ २ ॥ एतद्वै पशोः संज्ञप्प्यमानस्य । हृदयᳬ शुक्क्समवैति हृदयाच्छूलन्तद्ये सह हृदयेन पशुᳬ श्रप-यन्ति पुनः पशुः शुगनुविष्प्पन्देत पार्श्वत ऽएवैनत्काष्ठे प्प्रवृह्य श्रपयेत् † ॥ ३ ॥ उपस्तृणीत ऽआज्यम् । तत्पृ-थिव्व्यै रूपङ्करोति हिरण्यशकलमवदधाति तदग्ग्ने रूप-

* "त्र्यरत्निश्चतुररत्निर्वा" का० श्रौ० सू० ६. १, ४।
† का० श्रौ० सू० ६. ७. १४।

ङ्करोति व्वपामवदधाति तदन्तरिक्षस्य रूपङ्करोति हिरण्य-शकलमवदधाति तदादित्यस्य रूपङ्करोत्यथ यदुपरिष्टा-दभिघारयति तद्दिवो रूपङ्करोति सा व्वा ऽएषा पञ्चावत्ता व्वपा भवति पाङ्क्तो यज्ञः [A] पाङ्क्तः पशुः [B] पञ्च ऽर्त्तवः सँव्व-त्सरस्य तस्मात्पञ्चावत्ता व्वपा भवति ॥ ४ ॥

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

[ अग्निहोत्रे मह इत्युपस्थानं कर्तव्यनिमित्तं विधातुमाख्यायिका ]

तद्यथा ह व्वै । इदꣳ रथचक्रं व्वा कौलालचक्रं व्वा प्प्रतिष्ठितङ्क्रन्देदेवꣳ हैवेमे लोका ऽअद्ध्रुवा ऽअप्प्रति-ष्ठिता ऽआसुः ॥ १ ॥ स ह प्प्रजापतिरीक्षाञ्चक्रे । कथ-न्न्विमे लोका द्ध्रुवाः प्प्रतिष्ठिताः स्युरिति स ऽएभि-श्चैव पर्व्वतैर्न्नदीभिश्चचेमामदृꣳहद्वयोभिश्च मरीचि-भिश्चान्तरिक्षञ्जीमूतैश्च नक्षत्रैश्च द्दिवम् ॥ २ ॥ स मह ऽइति व्व्याहरत् । पशवो व्वै महस्तस्माद्यस्यैते बहवो भवन्ति भूयिष्ठमस्य कुले महीयन्ते बहवो ह व्वा ऽअस्यैते भवन्ति भूयिष्ठꣳ हास्य कुले महीयन्ते तस्मा-द्यद्येनमायतनाद्बाधेरन्न्वा प्र वा यापयेयुरग्निहोत्रꣳ हुत्वा मह ऽइत्युपतिष्ठेत प्प्रति प्प्रजया पशुभिस्तिष्ठति नाय-तनाच्च्यवते ॥ ३ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(A) धानाकरम्भादिपञ्चद्रव्यसाध्यत्वाद्यज्ञः पाङ्क्तः ।
(B) लोमत्वङ्मांसास्थिमज्जाख्यपञ्चधातुमयत्वात्पशुः पाङ्क्तः ।

[ आहितादिभेदेनाग्नेश्चातुर्विध्यम् ]

चत्वारो ह वा ऽअग्नयः । आहित ऽउद्धृतः प्प्रहृतो वि-
हृतोऽयमेव लोक ऽआहितोऽन्तरिक्षलोक ऽउद्धृतो द्यौष्प्र-
हृतो दिशो विहृतोऽग्निरेवाहितो वायुरुद्धृत ऽआदित्यः प्प्रहृ-
तश्चन्द्रमा विहृतो गार्हपत्य ऽएवाहित ऽआहवनीय
ऽउद्धृतोऽथ यमेतमाहवनीयात्प्राञ्चम्प्रणयन्ति स प्प्रहृ-
तोऽथ यमेतमुदञ्चम्पशुश्रपणायाहरन्ति यश्चोपयड्भ्यः
स विहृतस्तस्मात्प्रहार्य्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ पशोः प्रजापतिः सूर्य इन्द्राग्नीति देवतात्रयप्रतिपादनम् ]

तदाहुः । किन्देवत्य ऽएष पशुः स्यादिति प्प्राजापत्यः
स्यादित्याहुः प्प्रजापतिर्व्वा ऽएतमग्ग्रेऽभ्यपश्यत्तस्मा-
त्प्राजापत्य ऽएवैष पशुः स्यादिति ॥ १ ॥ अथो ऽअप्प्या-
हुः । सौर्य्य ऽएवैष पशुः स्यादिति तस्मादेतस्मिन्नस्त-
मिते पशवो बद्ध्यन्ते बद्ध्नन्त्येकान्यथागोष्ठमेक ऽउपसमा-
यन्ति तस्मात्सौर्य्य ऽएवैष पशुः स्यादिति ॥ २ ॥ अथो
ऽअप्प्याहुः । ऐन्द्राग्न ऽएवैष पशुः स्यादित्येते वै देवते
ऽअन्न्वन्ये देवा यद्यार्त्तो यजते पारयत ऽएव यदि महसा
यजते पारयत ऽएव तस्मादैन्द्राग्न * ऽएवैष पशुः
स्यादिति ॥ ३ ॥ प्राण ऽएव पशुबन्धः । तस्माद्यावज्जी-

* "ऐन्द्राग्नः सौर्यः प्राजापत्यो वा यमिच्छेत्" ( का० श्रौ० सू० ६. ३. २६ )

वति न्ह्यस्यान्न्यः पशूनामीष्टे बद्धा ह्यस्मिन्नेते भवन्ति ॥४॥ स ह प्प्रजापतिरग्निमुवाच । युजे त्वया त्वा लभा ऽइति नेति होवाच व्वायुम्ब्रूहीति स ह व्वायुमुवाच युजे त्वया त्वा लभा ऽइति नेति होवाच पुरुषम्ब्रूहीति स ह पुरुषमुवाच युजे त्वया त्वा लभा ऽइति नेति होवाच पशून्ब्रूहीति स ह पशूनुवाच युजे युष्म्माभिरा वो लभा ऽइति नेति होचुश्चन्द्रमसम्ब्रूहीति स ह चन्द्रमसमुवाच युजे त्वया त्वा लभा ऽइति नेति होवाचादित्त्यम्ब्रूहीति स हादित्त्यमुवाच युजे त्वया त्वा लभा ऽइति तथेति होवाच य ऽउ त ऽएते नाचीकमन्त किमु म ऽएतेषु स्यादिति यद्यत्कामयेथा ऽइति तथेति तमालभत सोऽस्यायम्पशुरालब्धः संज्ञप्तोऽश्वयत्तमेताभिराप्प्रीभिराप्प्रीणात्तद्यदेनमेताभिराप्प्रीभिराप्प्रीणात्तस्म्मादाप्प्रियो नाम तस्म्मादु पशुः संज्ञप्तम्ब्रूयाच्छेतान्नु मुहूर्त्तमिति स यावन्तमश्वमेधेनेष्ट्वा लोकञ्जयति तावन्तमेनेन जयति ॥ ५ ॥ तम्प्राची दिक् । प्राणेत्त्यनुप्प्राणत्प्राणमेवास्मिँमस्तदद्धात्तन्दक्षिणा दिग्व्यानेत्त्यनुप्प्राणद्व्यानमेवास्मिँमस्तदद्धात्तम्प्रतीची दिगपानेत्त्यनुप्प्राणदपानमेवास्मिँमस्तदद्धात्तमुदीची दिगुदानेत्त्यनुप्प्राणदुदानमेवास्मिँमस्तदद्धात्तमूर्द्ध्वा दिक्समानेत्त्यनुप्प्राणत्समानमेवास्मिँमस्तदद्धात्तस्म्मादु पुत्रञ्जातमकृत्तनाभिस्पञ्च ब्ब्राह्मणान्ब्रूयादित्त्येनमनुप्प्राणितेति * यद्यु तान्न विन्देदपि

(१) 'ते' इति 'ग' 'ज' पुस्तकयोः ।
* पा० गृ० सू० १. १६. १० ।

स्वयमेवानुपरिक्क्राममनुप्प्राणण्यात्स सर्व्वमायुरेत्या हैव जरायै जीवति ॥ ६ ॥ स प्प्राणमेवाग्नेरादत्त । तस्म्मादेष नानुपद्ध्मातो नानुपज्ज्वलितो ज्ज्वलत्यात्तो ह्यस्य प्प्राण ऽआ ह वै द्विषतो ब्भ्रातृव्व्यस्य प्प्राणन्दत्ते य ऽएवं व्वेद ॥ ७ ॥ रूपमेव वायोरादत्त । तस्म्मादेतस्य लेलयत ऽइवैवो-पश्शृण्णवन्ति न त्वेनम्पश्श्यन्त्यात्तथं ह्यस्य रूपमा ह वै द्विषतो ब्भ्रातृव्व्यस्य रूपन्दत्ते य ऽएवं व्वेद ॥ ८ ॥ चित्त-मेव पुरुषस्यादत्त । तस्म्मादाहुर्द्देवचित्तन्त्वावतु मा मनुष्य-चित्तमित्त्यात्तथं ह्यस्य चित्तमा ह वै द्विषतोब्भ्रातृव्व्यस्य चित्तन्दत्ते य ऽएवं व्वेद ॥ ९ ॥ चक्षुरेव पशूनामादत्त । तस्म्मादेते चाकश्श्यमाना ऽइवैव न जानन्त्यथ यद्दैवो-पजिग्घ्रन्त्यथ जानन्त्यात्तथं ह्येषाञ्चक्षुरा ह वै द्विषतो ब्भ्रातृव्व्यस्य चक्षुर्द्दत्ते य ऽएवं व्वेद ॥ १० ॥ भामेव चन्द्रमस ऽआदत्त । तस्म्मादेतयोः सदृशयोः सतोर्न्नत-राश्चन्द्रमा भात्त्यात्ता ह्यस्य भा ऽआ ह वै द्विषतो ब्भ्रातृव्व्यस्य भान्दत्ते य ऽएवं व्वेद तद्यदादत्त तस्म्मा-दादित्यः ॥ ११ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ पशुप्रायश्चित्ततया स्पृत्याख्यहोमविधानम् ]

केशिग्गृहपतीनामु ह । सम्म्राड्दुघाथं शार्द्दूलो जघान स ह ससत्त्रिण आमन्त्रयाञ्चक्क्रे केह प्प्रायश्चित्तिरिति ते होचुर्न्नेह प्प्रायश्चित्तिरस्ति खण्डिक ऽएवौद्भारिरस्य

प्प्रायश्चित्तिं व्वेद स ऽउ त ऽएतादृक्क्चैव कामयतेऽतश्च पापीय ऽइति ॥ १ ॥ स होवाच । सङ्गृहीतर्ष्युङ्क्षधि मे स्यन्त्स्यामि स यद्यह मे व्वक्ष्यति समाप्प्स्यामि यद्यु मा मारयिष्ष्यति यज्ञं व्विकृष्टमनु व्विकृक्ष्य ऽइति ॥ २ ॥ स ह युक्त्वा ययावाजगाम । तछ्ठ ह प्प्रातिख्यायोवाच यन्न्वे-तान्न्येवाजिनानि मृगेषु भवन्त्यथैषाम्पृष्ट्टीरपिशीर्ष्य पचामहे कृष्णाजिनम्मे ग्ग्रीवास्वाबद्धमित्त्येव मेदुमधृषोऽब्भ्यव-स्यन्तू३ मिति ॥ ३ ॥ नेति होवाच । सम्म्राड्दुघां* व्वै मे भगवः शार्दूलोऽवधीत्स यद्यह मे व्वक्ष्यसि समाप्प्स्यामि यद्यु मा मारयिष्ष्यसि यज्ञं व्विकृष्टमनु व्विकृक्ष्य ऽइति ॥ ४ ॥ स होवाच । आमन्त्रणीयान्न्वामन्त्रया ऽइति तान्न्हामन्त्र्योवाच यद्यस्म्मै व्वक्ष्याम्म्यमुष्ष्यैवेदम्प्रजा भविष्ष्यति न मम लोकी त्त्वहम्भविष्ष्यामि यद्यु वा ऽअस्म्मै न व्वक्ष्यामि ममैवेदम्प्रजा भविष्ष्यति नामुष्ष्य लोकी त्त्वसौ भविष्ष्यतीति ते होचुर्म्मा भगवो व्वोच्चोऽयं व्वाव क्षत्त्रियस्य लोक ऽइति स होवाच व्वक्ष्याम्म्येवामूर्व्वै रात्त्रयो भूयस्य ऽइति ॥ ५ ॥ तस्म्मा ऽउ हैतदुवाच । स्पृतीर्हुत्वान्न्यामाजतेति ब्ब्रूतात्सा ते सम्म्राड्दुघा स्यादिति चन्द्रात्ते मन स्पृणोमि स्वाहा सूर्य्यात्ते चक्षु स्पृणोमि स्वाहा व्वातात्ते प्प्राणान्त्स्पृणोमि स्वाहा दिग्ग्भ्यस्ते श्श्रोत्त्रछ्ठं स्पृणोमि स्वाहाद्भ्यस्ते लोहितछ्ठं स्पृणोमि स्वाहा पृथिव्व्यै ते शरीरछ्ठं स्पृणोमि स्वाहेत्त्यथान्न्यामाजतेति

* प्रवर्ग्यदोहनार्थां गामित्यर्थः ।

ब्ब्रूतात्सा ते सम्म्राड्दुघा स्यादिति ततो हैव स ऽउत्स- साद् कैशिनीरेवेमा ऽअप्प्येतर्हि प्प्रजा जायन्ते ॥ ६ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या॥१०२॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

अष्टाध्यायीनामैकादशं काण्डं समाप्तम्* ॥ ११ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ॥ ४३७ ॥

954

# अथ मध्यमनाम द्वादशं काण्डम्

[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—दीक्षाक्रमः, सत्राणि, पृष्ठ्याऽभिप्लु-स्वरसाम—विषुवन्महाव्रतादिनिरूपणम्’ गवामयनम्, अग्निहोत्र-प्रायश्चित्तम्, मृतकाग्निहोत्रम्, मृतस्यदाहः ]

[ द्वादशाहे* दीक्षाक्रमः ]

॥ ॐ ॥ अयं वै यज्ञो योऽयम्पवते। तमेत ऽईप्सन्ति ये सँवत्सराय दीक्षन्ते तेषाङ्गृहपतिः प्प्रथमो दीक्षतेऽयं वै लोको गृहपतिरस्मिमन्न्वै लोक ऽइदꣳ सर्वम्प्रतिष्ठितङ्गृहपता ऽउ वै ससत्रिणः प्प्रतिष्ठिताः प्प्रतिष्ठायामेवैतत्प्रतिष्ठाय दीक्षन्ते ॥ १ ॥ अथ ब्ब्रह्माणन्दीक्षयति। चन्द्रमा वै ब्ब्रह्मा सोमो वै चन्द्रमाः सौम्म्या ऽओषधय ऽओषधीस्तदनेन लोकेन सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेतौषधीस्तदनेन लोकेन नानाकुर्य्यादुच्छोषुका ह स्युस्तस्मादेता-

---

* द्वादशाहो द्विविधः सत्रात्मकोऽहीनात्मकश्चेति। तयोर्लक्षणं यथा—‘आसत उपयन्तीति सत्रलिङ्गं यजत इत्यहीनस्य’ ( का० श्रौ० सू० १२. १. ५. ) इति। यस्य उत्पत्तिवाक्ये आस् धातुः, उपोपसृष्ट इण् धातुर्वा श्रूयते तत् सत्रम्। यथा—‘द्वादशाहमृद्धिकामा उपेयुः’ ‘देवा ह वै सत्रमासत’ इति। यजधातुघटितवाक्यविहितत्वमहीनत्वम्। यथा—‘द्वादशाहेन प्रजाकामं याजयेत्’ इति।

लक्षणान्तरञ्च—‘उभयतोऽतिरात्रं सत्रमुपरिष्टादहीनस्य’ ( का० सू० १२. १. ६ ) इति।

अत्र सत्रे अहीने वा योऽहःशब्दो रात्रिशब्दो वा श्रूयते स सर्वोऽप्यहोरात्रसमुदायवाचकः। तेन द्वादशरात्रो द्वादशाह इति समानार्थक एव।

( १ ) का० श्रौ० सू० १२. २. १५।

वन्तरेणान्न्यो न दीक्षेत ॥ २ ॥ अथोद्गातारन्दीक्षयति। पर्ज्जन्न्यो वा ऽउद्गाता पर्ज्जन्न्यादु वै व्वृष्टिर्ज्जायते व्वृष्टिन्तदोषधिभिः[1] सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत व्वृष्टिन्तदोषधिभिर्न्नानाकुर्य्याद्वर्षुको ह स्यात्तस्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ३ ॥ अथ होतारन्दीक्षयति। अग्निर्वै होताधिदेवतं व्वागध्यात्ममन्नं व्वृष्टिरग्निश्च तद्वाचश्चान्नेन सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेताग्निश्च तद्वाचश्चान्नेन नानाकुर्य्यादशनायुका ह स्युस्तस्मादेतावन्तरेणान्न्यो न दीक्षेतैताँश्चतुरोऽद्ध्वर्य्यु-र्द्दीक्षयति ॥ ४ ॥ अथाद्ध्वर्य्युम्[2] प्रतिप्प्रस्थाता दीक्षयति। मनो वा ऽअद्ध्वर्य्युर्व्वाग्घोता मनश्च तद्वाचश्च सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत मनश्च तद्वाचश्च नानाकुर्य्यात्प्रमायुका ह स्युस्तस्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ५ ॥ अथ ब्ब्रह्मणे ब्ब्राह्मणाच्छंसिनन्दीक्षयति। तꣳ हि सोऽन्न्वथोद्गात्रे प्प्रस्तोतारन्दीक्षयति तꣳ हि सोऽन्न्वथ होत्रे मैत्रावरुणन्दीक्षयति तꣳ हि सोऽन्न्वेताँश्चतुरः प्प्रतिप्प्रस्थाता दीक्षयति ॥ ६ ॥ अथाद्ध्वर्य्यवे प्प्रतिप्प्रस्थातारेन्नष्ट्वा[3] दीक्षयति। तꣳ हि सोऽन्न्वेतेषां व्वै नवानाङ्क्लृप्तिमन्न्वितरे कल्प्पन्ते नव वै प्प्राणाः प्प्राणानेवैष्वेतद्दधाति तथा सर्व्वमायुर्य्यन्ति तथो ह न पुरायुषोऽ-

(१) 'ग' 'ज' पुस्तकयोः 'तदोषधिभ्यः' इति पाठ उपलभ्यते।

(२) का० श्रौ० सू० १२. २. १६। (३) का० श्रौ० सू० १२. २. १७।

स्म्माल्लोकात्प्रयन्ति ॥ ७ ॥ अथ ब्ब्रह्मणे पोतारन्दीक्षयति । तꣳ हि सोऽन्न्वथोद्गात्रे प्प्रतिहर्त्तारन्दीक्षयति तꣳ हि सोऽन्न्वथ होत्रेऽच्छावाकन्दीक्षयति तꣳ हि सोऽन्न्वेताँश्चतुरो नेष्टा दीक्षयति ॥ ८ ॥ अथाद्ध्वर्य्युर्वे नेष्टारमुन्नेता दीक्षयति । तꣳ हि सोऽन्न्वथ ब्ब्रह्मण ऽआग्नीध्रन्दीक्षयति तꣳ हि सोऽन्न्वथोद्गात्रे सुब्ब्रह्मण्यान्दीक्षयति तꣳ हि सोऽन्न्वथ होत्रे ग्ग्रावस्तुतन्दीक्षयति तꣳ हि सोऽन्न्वेताँश्चतुर ऽउन्नेता दीक्षयति ॥ ९ ॥ अथोन्नेतारम्[2] । स्नातको वा ब्ब्रह्मचारी वान्न्यो वा दीक्षितो दीक्षयति न पूतꣳ पावयेदिति ह्याहुꣳ सैषानुपूर्व्वदीक्षा स यत्र हैवं विद्वाꣳसो दीक्षन्ते दीक्षमाणा हैव ते यज्ञङ्क्कल्प्पयन्ति यज्ञस्य क्कॢप्तिमनु सत्रिणां ऱ्योगक्षेमꣳ कल्प्पते सत्रिणां ऱ्योगक्षेमस्य क्कॢप्तिमन्न्वपि तस्यार्द्धस्य योगक्षेमꣳ कल्प्पते यस्म्मिन्नर्द्धे यजन्ते ॥ १० ॥ तेषां व्वा ऽउन्नेतोत्तमो दीक्षते । प्प्रथमोऽवभृथादुदायतामुदेति प्प्राणो वा ऽउन्नेता प्प्राणमेवैषव्वेतदुभयतो दधाति तथा सर्व्वमायुर्य्यन्ति तथो ह न पुरायुषोऽस्म्माल्लोकात्प्रयन्ति सैषानुपूर्व्वदीक्षा स यत्र हैवं विद्वाꣳसो दीक्षेरँस्तदेव दीक्षेत ॥ ११ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) का० श्रौ० सू० १२. २. १८। (२) का० श्रौ० सू० १२. २. १९।

[ द्वादशाहस्याहःक्लृप्तिः ]

श्रद्धाया वै देवाः। दीक्षान्निरमिमतादित्यै प्प्रायणीयꣳ * सोमात्क्रयं विष्णणोरातिथ्यमादित्यात्प्रवर्ग्यꣳ स्वधाया ऽउपसदोऽग्नीषोमाभ्यामुपवसथमस्माल्लोकात्प्रायणीयमतिरात्रम् ॥ १ ॥ सँवत्सराच्चतुर्विꣳशमहः। ब्रह्मणोऽभिप्लवङ्क्षत्रात्पृष्ठ्यमग्नेरभिजितमद्भ्यः स्वरसाम्न ऽआदित्याद्विषुवन्तमुक्ताः स्वरसामान † ऽइन्द्राद्विश्वजितमुक्तौ पृष्ठ्याभिप्लवौ ‡ मित्रावरुणाभ्याङ्गोऽआयुषी विश्वेभ्यो देवेभ्यो दशरात्रन्दिग्भ्यो दाशरात्रिकम्पृष्ठ्यꣳ षडहमेभ्यो लोकेभ्यश्छन्दोमान् ॥ २ ॥ सँवत्सराद्दशममहः। प्प्रजापतेर्म्महाव्रतꣳ § स्वर्ग्गाल्लोकादुदयनीयमतिरात्रन्तदेतत्सँवत्सरस्य जन्म स यो हैवमेतत्सँवत्सरस्य जन्म वेद हास्माच्छ्रेयाञ्जायते सात्मा भवति सँवत्सरो भवति सँवत्सरो भूत्वा देवानप्येति ॥ ३ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ उक्ताहःक्लृप्त्यर्थवादः ]

यद्वै दीक्षन्ते। अग्नाविष्णणू ऽएव देवते यजन्तेऽग्नाविष्णणू देवते भवन्त्यग्नाविष्णवोः सायुज्यꣳ सलोक-

* प्रकृष्टमयनमारम्भो यत्रेति व्युत्पत्या प्रायणीयशब्दो द्वादशाहस्य प्रथमदिनवाचकः।

† "यज्ञा यज्ञा" ( ४. ८. १ ) इत्यस्यां योनावुत्पन्नानि चत्वारि स्वरसंज्ञकानि सामानि येषु ते स्वरसामानः। ‡ प्रथमोऽग्निष्टोमः, ततश्चत्वार उक्थ्याः, पुनः षष्ठोऽग्निष्टोमः, एवं विधस्याह्नां षट्कस्य अभिप्लव इति संज्ञा ( तै० सं० सा० ७. ४. ११. १७, ऐ० ब्रा० ४. ३१।

§ महाव्रतं यज्ञस्यान्तिममहः। महानवर्तिष्ट अनेन कर्मणा इति महाव्रतम् ( तै० ब्रा० सा० भा० १. २. ६ )।

ताञ्जयन्ति ॥ १ ॥ अथ यत्प्रायणीयेन यजन्ते । अदिति-मेव देवतां ऽयजन्तेऽदितिर्द्देवता भवन्त्यदितेः सायुज्यꣳ सलोकताञ्जयन्ति ॥ २ ॥ अथ यत्क्रयेण चरन्ति । सोम-मेव देवतां ऽयजन्ते सोमो देवता भवन्ति सोमस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ३ ॥ अथ यदातिथ्येन यजन्ते । विष्णुमेव देवतां ऽयजन्ते विष्णुर्द्देवता भवन्ति विष्णोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ४ ॥ अथ यत्प्र-वर्ग्येण यजन्ते । आदित्यमेव देवतां ऽयजन्त ऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ५ ॥ अथ यदुपसद ऽउपयन्ति । एता ऽएव देवता यजन्ते या ऽएता ऽउपसत्स्वेता देवता भवन्त्येतासान्देवता-नाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ ६ ॥ अथ यदग्नी-षोमीयेण पशुना यजन्ते । अग्नीषोमावेव देवते यजन्तेऽ-ग्नीषोमौ देवते भवन्त्यग्नीषोमयोः सायुज्यꣳ सलोकता-ञ्जयन्ति ॥ ७ ॥ अथ यत्प्रायणीयमतिरात्रमुपयन्ति । अहोरात्रे ऽएव देवते यजन्तेऽहोरात्रे देवते भवन्त्य-होरात्रयोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ८ ॥ अथ यच्चतुर्विꣳशमहरुपयन्ति । सँवत्सरमेव देवतां ऽयजन्ते सँव-त्सरो देवता भवन्ति सँवत्सरस्य सायुज्यꣳ सलोकता-ञ्जयन्ति ॥ ९ ॥ अथ यदभिप्लवꣳ षडहमुपयन्ति । अर्द्धमा-साꣳश्च मासाꣳश्च देवता यजन्तेऽर्द्धमासाश्च मासाश्च देवता भवन्त्यर्द्धमासानाञ्च मासानाञ्च सायुज्यꣳ सलो-कताञ्जयन्ति ॥ १० ॥ अथ यत्पृष्ठ्यꣳ षडहमुपयन्ति ।

ऋतूनेव देवता यजन्त ऽऋतवो देवता भवन्त्यृतूनाᳬं सायुज्यᳬं सलोकताञ्जयन्ति ॥ ११ ॥ अथ यदभिजितमुपयन्ति । अग्निमेव देवतां ᳬं यजन्तेऽग्निर्देवता भवन्त्यग्नेः सायुज्यᳬं सलोकताञ्जयन्ति ॥ १२ ॥ अथ यत्स्वरसाम्न ऽउपयन्ति । अप ऽएव देवता यजन्त ऽआपो देवता भवन्त्यपाᳬं सायुज्यᳬं सलोकताञ्जयन्ति ॥ १३ ॥ अथ यद्विषुवन्तमुपयन्ति । आदित्यमेव देवतां ᳬं यजन्त ऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यᳬं सलोकताञ्जयन्त्युक्ताः स्वरसामानः ॥ १४ ॥ अथ यद्विश्वजितमुपयन्ति । इन्द्रमेव देवतां ᳬं यजन्त ऽइन्द्रो देवता भवन्तीन्द्रस्य सायुज्यᳬं सलोकताञ्जयन्त्युक्तौ पृष्ठ्याभिप्लवौ ॥ १५ ॥ अथ यद्गोऽआयुषी ऽउपयन्ति । मित्रावरुणावेव देवते यजन्ते मित्रावरुणौ देवते भवन्ति मित्रावरुणयोः सायुज्यᳬं सलोकताञ्जयन्ति ॥ १६ ॥ अथ यद्दशरात्रमुपयन्ति । विश्वानेव देवान्देवता * यजन्ते विश्वे देवा देवता भवन्ति विश्वेषान्देवानाᳬं सायुज्यᳬं सलोकताञ्जयन्ति ॥ १७ ॥ अथ यद्दाशरात्रिकम्पृष्ठ्यᳬं षडहमुपयन्ति । दिश ऽएव देवता यजन्ते दिशो देवता भवन्ति दिशाᳬं सायुज्यᳬं सलोकताञ्जयन्ति ॥ १८ ॥ अथ यच्छन्दोमानुपयन्ति । इमानेव लोकान्देवता यजन्त ऽइमे लोका देवता भवन्त्येषाँल्लोकानाᳬं सायुज्यᳬं सलोकताञ्जयन्ति ॥ १९ ॥ अथ यद्दशममहरुपयन्ति । सँवत्सरमेव देवतां ᳬं यजन्ते

* 'ग' 'ज' पुस्तकयोः 'देवतां' इति पाठ उपलभ्यते ।

सँव्वत्त्सरो देवता भवन्ति सँव्वत्त्सरस्य सायुज्यꣳ सलोकता-
ञ्जयन्ति ॥ २० ॥ अथ यन्न्महाव्व्रतमुपयन्ति । प्प्रजापतिमेव
देवतां य्यजन्ते प्प्रजापतिर्द्देवता भवन्ति प्प्रजापतेः सायु-
ज्यꣳ सलोकताञ्जयन्ति ॥ २१ ॥ अथ यदुदयनीयमतिरा-
त्रमुपयन्ति । सँव्वत्त्सरमेव तदाप्प्त्वा स्वर्ग्गे लोके प्प्रति-
तिष्ठन्ति तान्न्यदि पृच्छेयुः कामद्य देवतां य्यजद्ध्वे का
देवता स्स्थ कस्यान्देवतायां व्वसथेत्त्यत ऽएवैकतमाम्ब्रूयु-
र्य्यस्यै तु नेदिष्ठꣳ स्युरेते ह वै सति सद ऽएते हि
सतीषु देवतासु सीदन्तो यन्ति सत्रसदो हैवेतरे स
यो हैवं व्विदुषान्दीक्षितानाम्पापकꣳ सत्रे कीर्त्तयेदेतां[1]-
भ्यस्त्वा देवताभ्य ऽआव्वृश्चाम ऽइत्त्येनम्ब्रूयुः स पापी-
यान्न्भवति श्श्रेयाꣳस ऽआत्मना ॥ २२ ॥ स ऽएष सँव-
त्त्सरस्त्रिमहाव्व्रतः । चतुर्व्विꣳशे महाव्व्रतं व्विषुवति महाव्व्रत-
म्महाव्व्रत ऽएव महाव्व्रतन्तꣳ ह स्म्मैतम्पूर्व्वे ऽउपयन्ति त्रिम-
हाव्व्रतन्ते तेजस्विन ऽआसुः सत्त्यवादिनः सꣳशितव्व्रता
ऽअथ य ऽउ हैनमप्प्येतर्हि तथोपेयुर्य्यथामपात्रमुदक
ऽआसिक्ते व्विम्म्रित्त्येदेवꣳ हैव ते व्विम्म्रित्त्येयुरुपर्य्युपयन्ति
तदेषाꣳ सत्त्येन श्श्रमेण तपसा श्श्रद्धया यज्ञेनाहुतिभि-
रवरुद्धम्भवति ॥ २३ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



१ 'ग' 'ज' पुस्तकयोः 'ते' इति ।

[ द्वादशाहस्य संवत्सरात्मना स्तुतिः ]

पुरुषो वै सँवत्सरः । तस्य पादावेव प्रायणीयोऽतिरात्रः पादाभ्याᳯं हि प्रयन्ति तयोर्यच्छुक्लन्तदह्नो रूपं यत्कृष्णन्तद्रात्रेर्नखान्येवौषधिवनस्पतीनाᳯं रूपमूरू चतुर्विंशमहरुरोऽभिप्लवः पृष्ठम्पृष्ठ्यः ॥ १ ॥ अयमेव दक्षिणो बाहुरभिजित् । इम एव दक्षिणे त्रयः प्राणाः स्वरसामानो मूर्द्धा विषुवानिम एवोत्तरे त्रयः प्राणाः स्वरसामानः ॥ २ ॥ अयमेवोत्तरो बाहुर्विश्वजित् । उक्तौ पृष्ठ्याभिप्लवौ यावर्वाञ्चौ प्राणौ ते गोऽआयुषी ऽअङ्गानि दशरात्रो मुखम्महाव्रतः हस्तावेवोदयनीयोऽतिरात्रो हस्ताभ्याᳯं ह्युद्यन्ति तयोर्यच्छुक्लन्तदह्नो रूपं यत्कृष्णन्तद्रात्रेर्नखान्येव नक्षत्राणाᳯं रूपः स एष सँवत्सरोऽध्यात्मम्प्रतिष्ठितः स यो हैवमेतः सँवत्सरमध्यात्मम्प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया पशुभिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ संवत्सरसत्रस्याहःक्लृप्तिर्ब्राह्मणद्वयेन ]

समुद्रं वा ऽएते प्रतरन्ति । ये सँवत्सराय दीक्षन्ते तस्य तीर्थमेव प्रायणीयोऽतिरात्रस्तीर्थेन हि प्रस्नान्ति तद्यत्प्रायणीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रम्प्रस्नायुस्तादृक्तत् ॥ १ ॥ गाधमेव प्रतिष्ठा चतुर्विंशमहः ।

यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नान्ति प्रस्नेयोऽभिप्लवः प्रस्नेयः पृष्ठ्यः ॥ २ ॥ गाधमेव प्रतिष्ठाभिजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्क्रामन्त्यूरुदघ्न एव प्रथमः स्वरसामा जानुदघ्नो द्वितीयः कुल्फदघ्नस्तृतीयो द्वीपः प्रतिष्ठा विषुवान्कुल्फदघ्न एव प्रथमोऽर्वाक्सामा जानुदघ्नो द्वितीय ऊरुदघ्नस्तृतीयः ॥ ३ ॥ गाधमेव प्रतिष्ठा विश्वजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नान्ति प्रस्नेयः पृष्ठ्यः प्रस्नेयोऽभिप्लवः प्रस्नेये गोऽआयुषी प्रस्नेयो दशरात्रः ॥ ४ ॥ गाधमेव प्रतिष्ठामहाव्रतम् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्स्नान्ति तीर्थमेवोदयनीयोऽतिरात्रस्तीर्थेन ह्युत्स्नान्ति तद्यदुदयनीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रम्प्रस्नाय तीर्थेनोत्स्नायुस्तादृक्तत् ॥ ५ ॥ तदाहुः । कति संवत्सरस्यातिरात्राः कत्यग्निष्टोमाः कत्युक्थ्याः कति षोडशिनः कति षडहा इति द्वावतिरात्रौ षट्शतमग्निष्टोमा द्वे चत्वारिंशे शते उक्थ्यानामिति नु य उक्थ्यान्त्स्वरसाम्न उपयन्ति ॥ ६ ॥ अथ येऽग्निष्टोमान् । द्वादशशतमग्निष्टोमा द्वे चतुस्त्रिंशे शते उक्थ्यानान्द्वादश षोडशिनः षष्टिः षडहा इति नु संवत्सरस्याप्तिः ॥ ७ ॥ द्वादश वै मासाः संवत्सरस्य । तेषामेतत्तेज इन्द्रियं यत्पृष्ठानि तद्यन्मासि मासि पृष्ठान्युपयन्ति मासश एव तत्संवत्सरस्य तेज आप्नु-

वन्त्यथ कथन्त्रयोदशस्य मासस्य तेज ऽआप्नुवन्तीत्युप-रिष्टाद्विषुवतो विश्वजितः सर्वपृष्ठमग्निष्टोममुपयन्त्ये-वमु त्रयोदशस्य मासस्य तेज ऽआप्नुवन्ति ॥ ८ ॥ एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः सँवत्सराय न्वा ऽअहन्दीक्षिष्य ऽइति तं ह पितोपेक्ष्योवाच वेत्थ न्वायुष्मन्त्सँवत्सरस्य गाधप्रतिष्ठा ऽइति वेदेति होवाचैतद्ध तद्विद्वानुवाच ॥ ९ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



तदाहुः । कस्मादुभयतोज्योतिषोऽभिप्लवा भव-न्त्यन्यतोज्योतिः पृष्ठ्य ऽइतीमे वै लोका ऽअभिप्लवा ऽउभयतोज्योतिषो वा ऽइमे लोका ऽअग्निनेत ऽआदि-त्येनामुत ऽऋतवः पृष्ठ्योऽन्यतोज्योतिषो वा ऽऋतव ऽएष ऽएषाञ्ज्योतिर्य ऽएष तपति ॥ १ ॥ देवचक्रे वा ऽएते पृष्ठ्यप्रतिष्ठिते । यजमानस्य पाप्मानन्तृंहती परिप्लवेते स यो हैवं विदुषान्दीक्षितानाम्पापकः सत्रे कीर्त्तयत्येते हास्य देवचक्रे शिरश्छिन्तो दशरात्र ऽउद्धिः पृष्ठ्याभिप्लवौ चक्रे ॥ २ ॥ तदाहुः । यत्समे ऽएव चक्रे भवतोऽथैते विषमा स्तोमाः कथमस्यैते समा स्तोमा ऽउपेता भवन्तीति यदेव षडन्यान्यहानि षडन्यानि तेनेति ब्रूयात् ॥ ३ ॥ पृष्ठ्याभिप्लवौ तन्त्रे कुर्वी-तेति ह स्माह पैङ्ग्यः । तयो स्तोत्राणि च शस्त्राणि च सञ्चारयेदिति स यत्सञ्चारयति तस्मादिमे प्राणा

नाना सन्त ऽएकोतयः समानमूतिमनुसञ्चरन्त्यथ यन्न सञ्चारयेत्प्रमायुको यजमानः स्यादेष ह वै प्प्रमायुको योऽन्धो वा बधिरो वा ॥ ४ ॥ नवाग्निष्टोमा मासि सम्पद्यन्ते । नव वै प्प्राणाः प्प्राणानेवैष्ष्वेतद्दधाति तथा सर्वमायुर्यन्ति तथो ह न पुरायुषोऽस्म्माल्लोकात्प्रयन्ति ॥५॥ एकविंशतिरुक्क्थ्याः । द्वादश वै मासाः सँवत्त्सरस्य पञ्चर्त्तवस्त्रयो लोकास्तद्विंशतिरेष ऽएवैकविंशो य ऽएष तपत्त्येतामभिसम्पदं स ऽएतया सम्पदा मासि मासि स्वर्ग्गँल्लोकं रोहति मासशः स्वर्ग्गँल्लोकं समश्नुत ऽएकविंशश्च स्तोमम्बृहतीञ्च च्छन्दः ॥ ६ ॥ चतुस्त्रिंशदग्निष्टोमा मासि सम्पद्यन्ते । त्रयस्त्रिंशद्वै देवाः प्प्रजापतिश्चतुस्त्रिंशः सर्वासान्देवतानामाप्त्या ऽएक ऽउक्क्थ्यः षोडशिमानन्नं वा ऽउक्क्थ्यो व्वीर्यं षोडशी ॥ ७ ॥ एतेन वै देवाः । व्वीर्य्येणान्नेन सर्वान्कामानाप्नुवन्त्सर्वान्कामानाश्नुवत तथो ऽएवैष ऽएतेन व्वीर्य्येणान्नेन सर्वान्कामानाप्नोति सर्वान्कामानश्नुते तस्मात्पृष्ठ्याभिप्प्लवा ऽउपैवेयात्सँवत्त्सराय दीक्षित ऽएतस्म्मै कामाय ॥ ८ ॥ अथादित्याश्च ह वा ऽअङ्गिरसश्च । उभये प्प्राजापत्त्या ऽअस्पर्द्धन्त वयम्पूर्वे स्वर्ग्गँल्लोकमेष्ष्यामो वयम्पूर्व ऽइति ॥ ९ ॥ त ऽआदित्याः । चतुर्भि स्तोमैश्चतुर्भिः पृष्ठैर्ल्लघुभिः सामभिः स्वर्ग्गँल्लोकमभ्यप्प्लवन्त यदभ्यप्प्लवन्त तस्म्मादभिप्प्लवाः ॥ १० ॥ अन्वञ्च ऽइवाङ्गिरसः । सर्वै स्तोमैः सर्वैः पृष्ठैर्ग्गुरुभिः सामभिः

स्वर्गँल्लोकमस्पृशन्न्यदस्पृशँस्तस्मात्पृष्ठ्यः ॥ ११ ॥ अभिप्लवः षडहः । षड्ढ्यहानि भवन्त्यभिप्लवः पञ्चाहः पञ्च ह्यहानि भवन्ति षळ्वेव प्प्रथममहस्तदुत्तममभिप्लवश्चतुरहश्चत्वारो हि स्तोमा भवन्ति त्रिवृत्पञ्चदशः सप्तदश ऽएकविंशः ऽइत्यभिप्लवस्त्र्यहस्त्र्यावृद्धि ज्योतिर्गौरायुरभिप्लवो द्व्यहो द्वे ह्येव सामनी भवतो बृहद्रथन्तरे ऽएवाभिप्लव ऽएकाह ऽएकाहस्यो हि स्तोमैस्तायते चतुर्णामुक्थ्यानान्द्वादश स्तोत्राणि द्वादश शस्त्राण्यतियन्ति स सप्तमोऽग्निष्टोम ऽएवमु सप्ताग्निष्टोमाः सम्पद्यन्ते ॥ १२ ॥ प्रोतिर्हं कौशाम्बेयः । कौसुरुबिन्दिरुद्दालक ऽआरुणौ ब्रह्मचर्य्यमुवास तं ह्याचार्य्यः पप्रच्छ कुमार कति ते पिता सँवत्सरस्याहान्न्यमन्न्यतेति ॥ १३ ॥* दशेति होवाच । दश वा ऽइति होवाच दशाक्षरा विराड्वैराजो यज्ञः ॥ १४ ॥ कति त्वेवेति । नवेति होवाच नव वा ऽइति होवाच नव वै प्प्राणाः प्प्राणैरु यज्ञस्तायते ॥ १५ ॥ कति त्वेवेति । अष्टेति होवाचाष्टौ वा ऽइति होवाचाष्टाक्षरा गायत्री गायत्रो यज्ञः ॥ १६ ॥ कति त्वेवेति । सप्तेति होवाच सप्त वा ऽइति होवाच सप्त च्छन्दाᳬसि चतुरुत्तराणि च्छन्दोभिरु यज्ञस्तायते ॥ १७ ॥ [ अर्धः प्रपाठकः ६६ ] कति त्वेवेति । षडिति होवाच षड्वा ऽइति होवाच षड्वृतवः सँवत्सरः सँवत्सरो यज्ञः समानमेतदहर्य्यत्प्रायणीयोदयनीयौ ॥ १८ ॥ कति त्वेवेति ।

---

* अत्र शतम् ६००० ।

पञ्चेति होवाच पञ्च वा ऽइति होवाच पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पञ्चर्त्तवः सँवत्सरस्य सँवत्सरो यज्ञः समानमेतदहर्यच्चतुर्विंशमहाव्रते ॥ १९ ॥ कति त्वेवेति । चत्वारीति होवाच चत्वारि वा ऽइति होवाच चतुष्पादाः पशवः पशवो यज्ञः समानमेतदहर्यत्पृष्ठ्याभिप्लवौ ॥ २० ॥ कति त्वेवेति । त्रीणीति होवाच त्रीणि वा ऽइति होवाच त्रीणि च्छन्दाᳬसि त्रयो लोकास्त्रिसवनो यज्ञः समानमेतदहर्यदभिजिद्विश्वजितौ ॥ २१ ॥ कति त्वेवेति । द्वे ऽइति होवाच द्वे वा ऽइति होवाच द्विपाद्वै पुरुषः पुरुषो यज्ञः समानमेतदहर्यत्स्वरसामानः ॥ २२ ॥ कति त्वेवेति । एकमिति होवाचाहरेवेति तदेतदहरहरिति सर्वᳬ सँवत्सरः सैषा सँवत्सरस्योपनिषत्स यो हैवमेताᳬ सँवत्सरस्योपनिषदं वेदा हास्माच्छ्रेयाञ्जायते सात्मा भवति सँवत्सरो भवति सँवत्सरो भूत्वा देवानप्येति ॥ २३ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ दशरात्रनिरूपणम् ]

स वा ऽएष सँवत्सरो बृहतीमभिसम्पन्नः । द्वावाक्ष्यंतामहन्नाᳬ षडहौ द्वौ पृष्ठ्याभिप्लवौ गोऽआयुषी दशरात्रस्तत्षट्त्रिᳬशत्षट्त्रिᳬशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गे लोकेऽयतन्त बृहत्या स्वर्गँल्लोकमाप्नुवँस्तथो ऽएवैष ऽएतद्बृहत्यैव स्वर्गे लोके यतते बृहत्या स्वर्गँल्लोकमाप्नोत्यथ यो बृहत्याङ्कामस्तमेवैतेनैवंविदवरुन्द्धे ॥ १ ॥

षष्ठे चतुर्विंᳬशमहः । दशरात्रस्य वै तत्सप्तमं वा नवमं वाभिप्लवात्पृष्ठ्यो निर्मितः पृष्ठ्यादभिजिदभिजितः स्वरसामानः स्वरसामभ्यो विषुवान्विषुवतः स्वरसामानः स्वरसामभ्यो विश्वजिद्विश्वजितः पृष्ठ्यः पृष्ठ्यादभिप्लवोऽभिप्लवाद्गोऽआयुषी गोऽआयुर्भ्यान्दशरात्रः ॥२॥ अथैतदहराक्षर्यंत् । यन्महाव्रतम्पञ्चविंᳬशो ह्येतस्य स्तोमो भवति नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्यान्न स्तोत्रियया स्तोमः ॥ ३ ॥ अभिप्लवम्पूर्वम्पुरस्ताद्विषुवत ऽउपयन्ति । पृष्ठ्यमुत्तरम्पुत्रा वा ऽअभिप्लवः पिता पृष्ठ्यस्तस्मात्पूर्ववयसे पुत्राः पितरमुपजीवन्ति पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्वमुपयन्त्यभिप्लवमुत्तरन्तस्मादुत्तरवयसे पुत्रान्पितोपजीवत्युप ह वा ऽएनम्पूर्ववयसे पुत्रा जीवन्त्युपोत्तरवयसे पुत्राञ्जीवति य ऽएवमेतद्वेद ॥ ४ ॥ तदाहुः । यच्चतुर्विंᳬशमहरुपेत्य प्रेयात्कथमनागूर्त्तो भवतीति यदेवादः प्रायणीयमतिरात्रमुपयन्ति तेनेति ब्रूयात् ॥ ५ ॥ तदाहुः । यद्द्वादश मासाः सँवत्सरस्याथैतदहरत्येति यद्वैषुवतमवरेषामेताश्त्परेषाश्मित्यवरेषाञ्चैव परेषाञ्चेति ह ब्रूयादात्मा वै सँवत्सरस्य विषुवानङ्गानि मासा यत्र वा ऽआत्मा तदङ्गानि यत्रो ऽअङ्गानि तदात्मा न वा ऽआत्माङ्गान्यतिरिच्यते नात्मानमङ्गान्यतिरिच्यन्त ऽएवमु हैतदवरेषाञ्चैव परेषाञ्च भवति ॥ ६ ॥ अथ ह वा ऽएष महासुपर्ण ऽएव यत्सँवत्सरः । तस्य यान्पुरस्ताद्विषुवतः षण्मासानुपयन्ति सोऽन्यतरः पक्षोऽथ यान्षडु-

परिष्टात्सोऽन्यतर ऽआत्मा विषुवान्यत्र वा ऽआत्मा तत्पक्षौ यत्र वा पक्षौ तदात्मा न वा ऽआत्मा पक्षावतिरिच्यते नात्मानम्पक्षावतिरिच्येते ऽएवमु हैतद्वरेषाञ्चैव परेषाञ्च भवति ॥ ७ ॥ तदाहुः । यत्पुरस्ताद्विषुवत ऽऊर्द्ध्वान्स्तोमान्षण्मासानुपयन्ति षडुपरिष्टादावृत्तान्कथमस्यैत ऽऊर्द्ध्वा स्तोमा ऽउपेता भवन्तीति यमेवामुमूर्द्ध्वस्तोमन्दशरात्रमुपयन्ति तेनेति ब्रूयाद्देवेभ्यो ह वै महाव्रतन्न तस्थे कथमूर्द्ध्वैं स्तोमैर्विषुवन्तमुपागातावृत्तैर्मामिति ॥ ८ ॥ ते ह देवा ऽऊचुः । उप तं यज्ञक्रतुञ्जानीत य ऽऊर्द्ध्वस्तोमो येनेदमाप्नवामेति त ऽएतमूर्द्ध्वस्तोमन्दशरात्रमपश्यन्त्सँवत्सरविधन्तस्य यः पृष्ठ्यः षडह ऽऋतवः स ऽइमे लोकाश्छन्दोमाः सँवत्सरो दशममहस्तेनैनदाप्नुवंस्तदेभ्योऽतिष्ठत तिष्ठते ह वा ऽअस्मै महाव्रतं य ऽएवमेतद्वेद ॥ ९ ॥ अथ वा ऽअतोऽह्नामभ्यारोहः । प्रायणीयेनातिरात्रेणोदयनीयमतिरात्रमभ्यारोहन्ति चतुर्विंशेन महाव्रतमभिप्लवेन परमभिप्लवम्पृष्ठ्येन परम्पृष्ठ्यमभिजिता विश्वजितꣳ स्वरसामभिः परान्त्स्वरसाम्नोऽथैतदुहरनभ्यारूढं यद्वैषुवतमभि ह वै श्रेयाꣳसꣳ रोहति नैनम्पापीयानभ्यारोहति य ऽएवमेतद्वेद ॥१०॥ अथ वा ऽअतोऽह्नान्निवाहः । प्रायणीयोऽतिरात्रश्चतुर्विंशायाह्ने निवहति चतुर्विंशमहरभिप्लवायाभिप्लवः पृष्ठ्याय पृष्ठ्योऽभिजितेऽभिजित्स्वरसामभ्यः स्वरसामानो विषुवते विषुवान्त्स्वरसामभ्यः स्वरसामानो विश्वजिते विश्वजित्पृष्ठ्याय

पृष्ठ्योऽभिप्लवायाभिप्लवो गोऽआयुर्भ्याङ्गोऽआयुषी दशरात्राय दशरात्रो महाव्रताय महाव्रतमुदयनीयायातिरात्रायोदयनीयोऽतिरात्रः स्वर्ग्गाय लोकाय प्रतिष्ठायाऽअन्नाद्याय ॥ ११ ॥ तानि वा ऽएतानि । यज्ञारण्यानि यज्ञकृन्तत्राणि[1] तानि शतꣳ शतꣳ रथाह्न्यान्यन्तरेण तानि येऽविद्वाꣳस ऽउपयन्ति यथारण्यान्यामुग्धाꣳश्चरतोऽशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि सचेरन्नेवꣳ[2] हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि सचन्तेऽथ ये विद्वाꣳसो यथा प्रवाहात्प्रवाहमभयादभयमेवꣳ हैव ते देवतायै देवतामुपसंरुयन्ति ते स्वस्ति स्वर्ग्गꣳल्लोकꣳ समश्नुवते ॥ १२ ॥ तदाहुः । कति सꣳवत्सरस्याहानि पराञ्चि कत्यर्वाञ्चीति स यानि सकृत्सकृदुपयन्ति तानि पराञ्च्यथ यानि पुनः पुनस्तान्यर्वाञ्च्यर्वाञ्चीति ह त्वेवैनान्युपासीत षडहयोर्ह्यावृत्तिमन्वावर्त्तन्ते[3] ॥ १३ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ संवत्सरस्याभिप्लवाद्यात्मना स्तुतिर्ब्राह्मणद्वयेन ]

पुरुषो वै सꣳवत्सरः । तस्य प्राण ऽएव प्रायणीयोऽतिरात्रः प्राणेन हि प्रयन्ति वागेवारम्भणीयमहर्वाचा

(१) 'ग' 'ज' पुस्तकयोः 'यज्ञकृन्तत्राणि' इत्यस्य स्थाने 'यज्ञक्षत्राणि' इति पाठ उपलभ्यते ।

(२) 'सचेरन्नेवꣳ हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि' एतावान् पाठः 'ग' 'ज' पुस्तकयोर्नास्ति ।

(३) 'ग' 'ज' पुस्तकयोः 'व्वर्तते' इति पाठोः दृश्यते ।

ह्यारभन्ते यद्यदारभन्ते ॥ १ ॥ अयमेव दक्षिणो हस्तोऽभिप्लवः षडहः । तस्येदमेव प्रथममहस्तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनः सवनमिदन्तृतीयसवनङ्गायत्र्या ऽआयतने तस्मादियमासाꣳ ह्रसिष्ठा ॥ २ ॥ इदमेव द्वितीयमहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनः सवनमिदन्तृतीयसवनन्त्रिष्टुभ ऽआयतने तस्मादियमस्यै वर्षीयसी ॥३॥ इदमेव तृतीयमहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनः सवनमिदन्तृतीयसवनञ्जगत्या ऽआयतने तस्मादियमासां वर्षिष्ठा ॥ ४ ॥ इदमेव चतुर्थमहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनः सवनमिदन्तृतीयसवनं विराज ऽआयतनेऽन्नं वै विराट् तस्मादियमासामन्नादितमा ॥ ५ ॥ इदमेव पञ्चममहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनः सवनमिदन्तृतीयसवनम्पङ्क्तेरायतने पृथुरिव वै पङ्क्तिस्तस्मादयमासाम्प्रथिष्ठः ॥ ६ ॥ इदमेव षष्ठमहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनः सवनमिदन्तृतीयसवनमतिच्छन्दस ऽआयतने तस्मादयमासां वर्षिष्ठो गायत्रमेतदहर्भवति तस्मादिदम्फलकꣳ ह्रसिष्ठः स ऽइतोऽभिप्लवः षडहः स ऽइतः स ऽइतः स ऽइत ऽआत्मा पृष्ठ्यः ॥ ७ ॥ एतद्ध स्म वै तद्विद्वानाह पैङ्ग्यः । प्लवन्त ऽइव वा ऽअभिप्लवास्तिष्ठतीव पृष्ठ्य ऽइति प्लवत ऽइव ह्ययमङ्गैस्तिष्ठतीवात्मनेति ॥ ८ ॥ शिर ऽएवास्य त्रिवृत् । तस्मात्तत्त्रिविधम्भवति त्वगस्थि मस्तिष्कः ॥ ९ ॥ ग्रीवाः

पञ्चदशः । चतुर्दश वा ऽएतासाङ्करूकराणि वीर्य्यम्पञ्चदशन्तस्मादेताभिरणवीभिः सतीभिर्ग्गुरुम्भारꣳ हरति तस्माद्ग्रीवाः पञ्चदशः ॥ १० ॥ उरः सप्तदशः । अष्टावन्न्ये जत्रवोऽष्टावन्न्य ऽउरः सप्तदशन्तस्मादुरः सप्तदशः ॥ ११ ॥ उदरमेकविꣳशः । विꣳशतिर्वा ऽअन्तरुदरे कुन्तापान्न्युदरमेकविꣳशन्तस्मादुदरमेकविꣳशः ॥ १२ ॥ पार्श्वे त्रिणवः । त्रयोदशान्न्याः पर्शवस्त्रयोदशान्न्याः पार्श्वे त्रिणवे तस्मात्पार्श्वे त्रिणवः ॥ १३ ॥ अनूकन्त्रयस्त्रिꣳशः । द्वात्रिꣳशद्वा ऽएतस्य करूकराण्यनूकन्त्रयस्त्रिꣳशन्तस्मादनूकन्त्रयस्त्रिꣳशः ॥ १४ ॥ अयमेव दक्षिणः कर्ण्णोऽभिजित् । यदिदमक्ष्णः शुक्लꣳ स प्प्रथमः स्वरसामा यत्कृष्णꣳ स द्वितीयो यन्मण्डलꣳ स तृतीयो नासिके विषुवान्न्यदिदमक्ष्णो मण्डलꣳ स प्प्रथमोऽर्व्वाक्वसामा यत्कृष्णꣳ स द्वितीयो यच्छुक्लꣳ स तृतीयः ॥ १५ ॥ अयमेवोत्तरः कर्ण्णो विश्वजित् । उक्तौ पृष्ठ्याभिप्प्लवौ यावन्वाञ्चौ प्प्राणौ ते गोऽआयुषी ऽअङ्गानि दशरात्रो मुखम्महाव्रतमुदान ऽएवोदयनीयोऽतिरात्र ऽउदानेन ह्युद्यन्ति स ऽएष सँवत्सरोऽध्यात्मम्प्रतिष्ठितः स यो हैवमेतꣳ सँवत्सरमध्यात्मम्प्रतिष्ठितं वेद प्प्रतितिष्ठति प्प्रजया पशुभिरस्मिँल्लोकेऽमृतत्त्वेनामुष्मिन् ॥ १६ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



यद्वालाके । इदुन्त्रिवृदेति सर्वमन्न्योऽन्न्यमभिसम्प-द्यमानम् ॥ कथꣳस्विद्यज्ञः पुरुषः प्रजापतिरन्न्योऽन्यन्ना-तिरिच्यन्त ऽएते ॥ १ ॥ यदूर्ध्वा स्तोमा ऽअनुयन्ति । यज्ञमभ्यावर्त्तꣳ सामभिः कल्प्पमानाः ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ २ ॥ प्राय-णीयोऽतिरात्रः । चतुर्विꣳशमहश्चत्त्वारोऽभिप्प्लवाः पृष्ठ्य-ऽइत्त्येते ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ ३ ॥ अभिजिता स्वरसामानः । अभि-क्लृप्ता ऽउभयतो विषुवन्तमुपयन्ति ॥ कथꣳस्वित्ते पुरुष-माविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ ४ ॥ त्रिवृ-त्प्रायाः । सप्तदशाभिक्लृप्तास्त्रयस्त्रिꣳशान्ताश्चतुरुत्तरेण ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भव-न्तीति ॥ ५ ॥ शिरस्त्रिवृत् । पञ्चदशोऽस्य ग्रीवा ऽउर ऽआहुः सप्तदशाभिक्क्लृप्तम् ॥ एकविꣳशमुदरङ्कल्प्पयन्ति पार्श्वे पर्शूस्त्रिणवेनाभिक्क्लृप्ते ॥ ६ ॥ अभिप्प्लवा ऽउभ-यतोऽस्य बाहू । पृष्ठम्पृष्ठ्य ऽइति धीरा वदन्ति ॥ अनू-कमस्य चतुरुत्तरेण सँवत्त्सरे ब्ब्राह्मणाः कल्प्पयन्ति ॥ ७ ॥ कर्णावस्याभिजिद्विश्वजिच्च । अक्ष्याबाहुः स्वरसामाभि-क्लृप्ते ॥ नस्यम्प्राणं विषुवन्तमाहुर्ग्गोऽआयुषी प्प्राणावेता-ववाञ्चौ ॥ ८ ॥ अङ्गान्न्यस्य दशरात्रमाहुः । मुखम्महा-व्व्रतꣳ सँवत्त्सरे ब्ब्राह्मणाः कल्प्पयन्ति ॥ सर्वस्तोमꣳ सर्व-सामानमेतꣳ सँवत्त्सरमध्यात्मम्प्रविष्टम् ॥ समन्धीर

ऽआत्मना कल्पयित्वा बब्रदृध्नस्यास्ते विष्टपेऽजातशोकः ॥ ९ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



पुरुषो वै सँवत्सरः । पुरुष ऽइत्येकः सँवत्सर ऽइत्येकमत्र तत्समन्द्वे वै सँवत्सरस्याहोरात्रे द्वाविमौ पुरुषे प्प्राणावत्र तत्समन्त्रय ऽऋतवः सँवत्सरस्य त्रय ऽइमे पुरुषे प्प्राणा ऽअत्र तत्समश्चतुरक्षरो वै सँवत्सरश्चतुरक्षरोऽयं यजमानोऽत्र तत्समम्पञ्चऽर्त्तवः सँवत्सरस्य पञ्चेमे पुरुषे प्प्राणा ऽअत्र तत्समः षडृतवः सँवत्सरस्य षडिमे पुरुषे प्प्राणा ऽअत्र तत्समः सप्तऽर्त्तवः सँवत्सरस्य सप्तेमे पुरुषे प्प्राणा ऽअत्र तत्समम् ॥ १ ॥ द्वादश वै मासाः सँवत्सरस्य । द्वादशेमे पुरुषे प्प्राणा ऽअत्र तत्समन्त्रयोदश वै मासाः सँवत्सरस्य त्रयोदशेमे पुरुषे प्प्राणा नाभिस्त्रयोदश्यत्र तत्समश्चतुर्विंशतिर्वै सँवत्सरस्यार्द्धमासाश्चतुर्विंशोऽयम्पुरुषो विंशत्यङ्गुलिश्चतुरङ्गोऽत्र तत्समः षड्विंशतिर्वै सँवत्सरस्यार्द्धमासाः षड्विंशोऽयम्पुरुषः प्प्रतिष्ठे षड्विंश्यावत्र तत्समम् ॥ २ ॥ त्रीणि च वै शतानि षष्टिश्च । सँवत्सरस्य रात्रयस्त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीन्यत्र तत्समन्त्रीणि च वै शतानि षष्टिश्च सँवत्सरस्याहानि त्रीणि च शतानि षष्टिश्च पुरुषस्य मज्जानोऽत्र तत्समम् ॥ ३ ॥ सप्त च

वै शतानि विꣳशतिश्च । सँवत्सरस्याहोरात्राणि सप्त च शतानि विꣳशतिश्च पुरुषस्यास्थीनि च मज्जानश्चात्र तत्समम् ॥ ४ ॥ दश च वै सहस्राण्यष्टौ च शतानि । सँवत्सरस्य मुहूर्त्ता यावन्तो मुहूर्त्तास्तावन्ति पञ्चदश कृत्वः क्षिप्राणि यावन्ति क्षिप्राणि तावन्ति पञ्चदश कृत्व ऽएतर्हीणि यावन्त्येतर्हीणि तावन्ति पञ्चदश कृत्व ऽइदानीनि यावन्तीदानीनि तावन्तः पञ्चदश कृत्वः प्राणा यावन्तः प्राणास्तावन्तोऽना यावन्तोऽनास्तावन्तो निमेषा यावन्तो निमेषास्तावन्तो लोमगर्त्ता यावन्तो लोमगर्त्तास्तावन्ति स्वेदायनानि यावन्ति स्वेदायनानि तावन्त ऽएते स्तोका वर्षन्ति ॥ ५ ॥ एतद्ध स्म वै तद्विद्वानाह वार्क्कलिः । सार्वभौमम्मेघं वर्षन्तं वेदाहमस्य वर्षस्य स्तोकानिति ॥ ६ ॥ तदेष श्लोकोऽभ्युक्तः । प्रमादन्यत्र परिवर्त्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि ॥ अहोरात्राभ्याम्पुरुषः समेन कति कृत्वः प्राणिति चाप चानितीति ॥ ७ ॥ तदेष श्लोकः प्रत्युक्तः । शतꣳ शतानि पुरुषः समेनाष्टौ शता यन्निमतन्तद्वदन्ति ॥ अहोरात्राभ्याम्पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानितीति ॥ ८ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ संवत्सरादि दीक्षापक्षः ]

देवा ह वै सहस्रसँवत्सराय दिदीक्षिरे । तेषाम्पञ्च शतानि सँवत्सराणाम्पर्य्युपेतान्यासुरथेदꣳ सर्वमेव शश्राम

ये स्तोमा यानि पृष्ठानि यानि च्छन्दाᳬसि ॥ १ ॥ ततो देवाः । एतद्यज्ञस्यायातयामापश्यँस्तेनायातयाम्ना या वेदे व्यष्टिरासीत्तां व्याश्नुवतायातयामा वा ऽअस्य वेदा ऽअयातयाम्न्या हास्य त्रय्या विद्ययार्त्विज्यङ्कृतम्भवति य ऽएवमेतद्वेद ॥ २ ॥ तदेतद्यज्ञस्यायातयाम । ओ श्राव-यास्तु श्रौषड्यज ये यजामहे वौषडिति तासां वा ऽएता-साम्पञ्चानां व्याहृतीनाᳬ सप्तदशाक्षराण्यो श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह ऽइति पञ्चाक्षरम् ॥ ३ ॥ द्व्यक्षरो वषट्कारः । स ऽएष सप्तदशः प्रजापतिरधिदेवतञ्चाध्यात्मञ्च प्रति-ष्ठितः स यो हैवमेतᳬ सप्तदशम्प्रजापतिमधिदेवतञ्चा-ध्यात्मञ्च प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया पशु-भिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ ४ ॥ ते ह देवा ऽऊचुः । उप तं यज्ञक्रतुञ्जानीत यः सहस्रसँवत्सरस्य प्रतिमा को हि तस्मै मनुष्यो यः सहस्रसँवत्सरेण समाप्नुयादिति ॥ ५ ॥ ते विश्वजितमेव सर्वपृष्ठम् । पृष्ठ्यस्य षडहस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬसि ॥ ६ ॥ पृष्ठ्यमेव षडहम् । द्वादशाहस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬसि ॥ ७ ॥ द्वाद-शाहमेव । सँवत्सरस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬसि ॥ ८ ॥ सँवत्सरमेव । तापश्चितस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि

पृष्ठ्यानि तानि च्छन्दाᳬंसि ॥ ९ ॥ तापश्चितमेव । सहस्रसँवत्सरस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठ्यानि तानि च्छन्दाᳬंसि ॥ १० ॥ स वै सँवत्सरन्दीक्षाभिरेति । सँवत्सरमुपसद्भिः सँवत्सरᳬ सुत्याभिः ॥ ११ ॥ स यत्सँवत्सरन्दीक्षाभिरेति । पूर्वार्द्धमेव तेन सहस्रसँवत्सरस्यावरुन्द्धेऽथ यत्सँवत्सरमुपसद्भिर्म्मध्यमेव तेन सहस्रसँवत्सरस्यावरुन्द्धेऽथ यत्सँवत्सरᳬ सुत्याभिरुत्तमार्द्धमेव तेन सहस्रसँवत्सरस्यावरुन्द्धे ॥ १२ ॥ स वै द्वादश मासान्दीक्षाभिरेति । द्वादशोपसद्भिर्द्द्वादश सुत्याभिस्तत्षट्त्रिᳬशत्षट्त्रिᳬशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्ग्गं लोकेऽयतन्त बृहत्या स्वर्ग्गँल्लोकमाप्नुवँस्तथो ऽएवैष ऽएतद्बृहत्यैव स्वर्ग्गे लोके यतते बृहत्या स्वर्ग्गँल्लोकमाप्नोत्यथ यो बृहत्याङ्कामस्तमेवैतेनैवंविदवरुन्द्धे ॥ १३ ॥ तद्वा ऽएतत् । त्रयᳬ सह क्रियतेऽग्निरर्क्कर्य्यम्महदुक्थᳬ स यत्सँवत्सरन्दीक्षाभिरेति सँवत्सरमुपसद्भिस्तेनास्याग्न्यर्क्कावाप्तौ भवतोऽथ यत्सँवत्सरᳬ सुत्याभिरेति तेनो ऽएवास्य महदुक्थमाप्तम्भवति स वा ऽएष ऽएव सहस्रसँवत्सरस्य प्प्रतिमा यत्तापश्चित ऽएष प्प्रजानाम्प्रजात्यै यत्तापश्चितः ॥ १४ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या १३२ ॥

[ ज्योतिष्टोमे उद्गात्राद्यन्वारम्भः ]

पुरुषꣳ ह नारायणम्प्रजापतिरुवाच । यजस्व यजस्वेति स होवाच यजस्व यजस्वेति वाव त्वम्मामात्थ त्रिरयक्षि व्वसवः प्प्रातःसवनेनागू रुद्रा माद्ध्यन्दिनेन सवनेनादित्यास्तृतीयसवनेनाथ मम यज्ञवास्त्वेव यज्ञवास्तावेवाहुमास ऽइति ॥ १ ॥ स होवाच । यजस्वैवाहं व्वै ते तद्वक्ष्यामि यथा त ऽउक्क्थानि मणिरिव सूत्र ऽओतानि भविष्ष्यन्ति सूत्रमिव वा मणाविति ॥ २ ॥ तस्म्मा ऽउ हैतदुवाच । प्प्रातःसवने बहिष्प्पवमान ऽउद्गातारमन्न्वारभासै श्श्येनोऽसि गायत्रच्छन्दा ऽअनु त्त्वारभे स्वस्ति मा सम्पारयेति ॥ ३ ॥ अथ माद्ध्यन्दिने पवमाने । उद्गातारमन्न्वारभासै सुपर्ण्णोऽसि त्रिष्टुप्प्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ४ ॥ अथ तृतीयसवन ऽआर्ब्भवे पवमाने । उद्गातारमन्न्वारभासा ऽऋभुरसि जगच्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ५ ॥ अथ सꣳस्थितेषु सꣳस्थितेषु सवनेषु जपेः । मयि भर्ग्गो मयि महो मयि यशो मयि सर्व्वमिति ॥ ६ ॥ अयं व्वै लोको भर्ग्गः । अन्तरिक्षलोको महो द्यौर्यशो येऽन्न्ये लोकास्तत्त्सर्व्वम् ॥७॥ अग्निर्व्वै भर्ग्गः । व्वायुर्म्महः ऽआदित्यो यशो येऽन्न्ये देवास्तत्त्सर्व्वम् ॥ ८ ॥ ऋग्ग्वेदो वै भर्ग्गः । यजुर्व्वेदो महः सामवेदो यशो येऽन्न्ये व्वेदास्तत्त्सर्व्वम् ॥ ९ ॥ व्वाग्वै भर्ग्गः । प्प्राणो महश्च्चक्षुर्य्यशो येऽन्न्ये प्प्राणास्तत्त्सर्व्वम् ॥ १० ॥ तद्विद्यात् । सर्व्वाँल्लोकानात्मन्नधिषि सर्व्वेषु

लोकेष्ष्वात्मानमधाꣳ सर्वान्देवानात्मन्नधिषि सर्वेषु देवेष्ष्वात्मानमधाꣳ सर्वान्वेदानात्मन्नधिषि सर्वेषु वेदेष्ष्वात्मानमधाꣳ सर्वान्प्राणानात्मन्नधिषि सर्वेषु प्प्राणेष्ष्वात्मानमधामित्यक्षिता वै लोका ऽअक्षिता देवा ऽअक्षिता वेदा ऽअक्षिताः प्प्राणा ऽअक्षितꣳ सर्वमक्षिताद्ध वा ऽअक्षितमुपसङ्क्रामत्यप पुनर्म्मृत्युञ्जयति सर्वमायुरेति य ऽएवमेतद्वेद ॥ ११ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ सोमादीनां नित्यत्वम् ]

सावित्रꣳ ह स्म्मैतम्पूर्वं पशुमालभन्ते । अथैतर्हि प्प्राजापत्यं ऽएषो ह्येव सविता स प्प्रजापतिरिति वदन्तस्तस्म्मात्सन्त्युप्प्याग्नीꣳस्तेन यजेरन्गृहपतेरेवाग्निषु ययेदञ्जाघन्न्या पत्नीः संख्याजयन्ति तस्यान्नोऽप्प्यसदिति ते ततो यदानिकामन्दीक्षन्ते ॥ १ ॥ तदु वा ऽआहुः । नानाधिष्ण्या ऽएव स्युर्य्यदि दीक्षितस्योपतपेत्पार्श्वतोऽग्निहोत्रञ्जुहुयुः स यद्यगदो भवति सꣳसृज्यैनम्पुनरुपह्वयन्ते यद्यु म्म्रियते स्वैरेव तमग्निभिर्द्दहन्त्यशवाग्निभिरितरे यजमाना ऽआसत ऽइति तदुहैवाहिताग्नेः कर्म्म समानधिष्ण्यास्त्वेव भवन्ति तस्य तदेव ब्ब्राह्मणं यत्पुरश्चरणे ॥ २ ॥ तदाहुः । यत्सꣳवत्सराय सꣳवत्सरसदो दीक्षन्ते कथमेषामग्निहोत्रमनन्तरितम्भवतीति व्रतेनेति ब्ब्रूयात् ॥ ३ ॥

तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषाम्पौर्णमासꣳ हविरनन्तरितम्भवतीत्याज्येन च पुरोडाशेन चेति ब्ब्रूयात् ॥ ४ ॥ तदाहुः यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषाम्पितृयज्ञोऽनन्तरितो भवतीत्यौपासनैरिति ब्ब्रूयात् ॥५॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषामामावास्यꣳ हविरनन्तरितम्भवतीति दद्ध्ना च पुरोडाशेन चेति ब्ब्रूयात् ॥ ६ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषामाग्ग्रयणेष्टिरनन्तरिता भवतीति सौम्म्येन चरुणेति ब्ब्रूयात् ॥ ७ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषाञ्चातुर्म्मास्यान्न्यनन्तरितानि भवन्तीति पयस्ययेति ब्ब्रूयात् ॥ ८ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषाम्पशुबन्धोऽनन्तरितो भवतीति पशुना च पुरोडाशेन चेति ब्ब्रूयात् ॥ ९ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषाꣳ सोमोऽनन्तरितो भवतीति सवनैरिति ब्ब्रूयात् ॥ १० ॥ ते वा ऽएवमेते यज्ञक्रतवः । सँवत्सरमपियन्ति स य्यो हैवमेतां य्यज्ञक्रतूनाꣳ सँवत्सरेऽपीतिं व्वेदाप्प्यस्य स्वर्ग्गे लोके भवति ॥ ११ ॥ सँवत्सरस्य समता वेदितव्व्या । एकम्पुरस्ताद्विषुवतोऽतिरात्रमुपयन्त्येकमुपरिष्टात्त्रयः पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति त्रयः पञ्चाशतमुपरिष्टाद्विꣳशतिशतम्पुरस्ताद्विषुवत ऽउक्क्थ्यान्न्यहान्न्युपयन्ति व्विꣳशतिशतमुपरिष्टादिति नु य ऽउक्क्थ्यान्त्स्वरसाम्म्न ऽउपयन्ति ॥ १२ ॥ अथ

येऽग्निष्टोमान् । षट्पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति षट्पञ्चाशतमुपरिष्टात्सप्तदशᳫं शतम्पुरस्ताद्विषुवत ऽउक्थ्यान्यहान्युपयन्ति सप्तदशमुपरिष्टात्षट् पुरस्ताद्विषुवतᳫं षोडशिन ऽउपयन्ति षडुपरिष्टात्त्रिᳫंशतम्पुरस्ताद्विषुवतᳫं षडहानुपयन्ति त्रिᳫंशतमुपरिष्टादेषा हास्य समता समेन ह वा ऽअस्याᳫंऋद्धेनान्यूनेनानतिरिक्तेनायनेनेतम्भवति य ऽएवमेतद्वेद ॥ १३ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ अग्निहोत्रप्रायश्चित्तं ब्राह्मणद्वयेन ]

दीर्घसत्रᳫं ह वा ऽएत ऽउपयन्ति । येऽग्निहोत्रञ्जुह्वत्येतद्वै जरामर्य्यᳫं सत्रं यदग्निहोत्रञ्जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा ॥ १ ॥ तदाहुः । यदेतस्य दीर्घसत्रिणोऽग्निहोत्रञ्जुह्वतोऽन्तरेणाग्नी युक्तं वा वियायात्सं वा चरेयुः किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति कुर्वीत हैव निष्कृतिमपीष्ट्या यजेत तदु तन्नाद्रियेतेमान्वा ऽएष लोकाननुवितनुते योऽग्नी ऽआधत्ते ॥ २ ॥ तस्यायमेव लोको गार्हपत्यः । अन्तरिक्षलोकोऽन्वाहार्य्यपचनोऽसौ लोक ऽआहवनीयः कामन्न्वा ऽएषु लोकेषु व्वयाᳫंसि युक्तञ्चायुक्तञ्च सञ्चरन्ति स यदि हास्याप्प्यन्तरेण ग्ग्रामोऽग्नीन्न्वियायान्नैव मे का चनार्त्तिरस्ति न रिष्टिरिति

हैव विद्यात् ॥ ३ ॥ त्रयो ह त्वाव पशवोऽमेध्याः । दुर्वराह ऽऐडकः श्वा तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित्सञ्चरेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके गार्हपत्याद्भस्मोपहृत्याहवनीयान्निवपन्तो यन्ती(१)दं विष्णुर्विचक्रम, ऽइत्येतयर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तन्मो भस्मनास्य पदमपिवपाम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयादासान्न्वा ऽअयं यजमानस्यावाप्सीत्क्षिप्रे परमासानावप्स्यते ज्येष्ठगृह्यह् रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥ इत्थमेव कुर्य्यात् । उदस्थालीं वैवोदकमण्डलुं वादाय गार्हपत्यादग्र ऽआहवनीयान्निनयन्नियादिदं विष्णुर्विचक्रम ऽइत्येतयैवर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तनोति यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयत्येतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याग्निहोत्रन्दोह्यमानं स्कन्देत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यद्यु नीची स्थाली स्याद्यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभिमृश्याद्भिरुपनिनीय यदन्यद्विन्देत्तेन जुहुयात् ॥ ६ ॥* अथ यत्र स्कन्नं स्यात् । तदभिमृशेदस्कन्नधित प्राजनीति यदा वै स्कन्दत्यथ धीयते यदा धीयतेऽथ प्रजायते योनिर्वा ऽइयं रेतः पयस्तदस्यां योनौ रेतो दधात्यनुष्ठ्या हास्य रेतः सिक्तम्प्रजायते

(१) शु० य० सं० ५. १५ । ऋ० सं० १. २. ७ । का० श्रौ० सू० २५. ४. १८ ।

* अत्र शतम् ६१०० ।

य ऽएवमेतद्वेदामुतो वै दिवो वर्षतीहौषधयो वनस्पतयः प्रजायन्ते पुरुषाद्रेत स्कन्दति पशुभ्यस्तत ऽइदꣳ सर्वं प्रजायते तद्विद्याद्भूयसी मे प्रजातिरभूद्बहुः प्रजया पशुभिर्भविष्यामि श्रेयान्भविष्यामीति ॥ ७ ॥ अथ यत्रावभिन्नꣳ स्यात् । तदुदस्थालीं वैवोदकमण्डलुं वा निनयेद्यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयति भूर्भुवः स्वरित्येताभिर्व्याहृतिभिरेता वै व्याहृतयः सर्वप्रायश्चित्तीस्तदनेन सर्वेण प्रायश्चित्तिं कुरुते तानि कपालानि सञ्चित्य यत्र भस्मोद्धृतꣳ स्यात्तन्निवपेदेतदेव तत्र कर्म्म ॥ ८ ॥ तदाहुः । यस्याग्निहोत्री दोह्यमानोपविशेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति ताꣳ हैके यजुषोत्थापयन्त्युदस्थाद्देव्यदितिरितीयं वा ऽअदितिरिमामेवास्मा ऽएतदुत्थापयाम ऽइति वदन्त ऽआयुर्यज्ञपतावधादित्यायुरेवास्मिꣳस्तद्दध्म ऽइति वदन्त ऽइन्द्राय कृण्वती भागमितीन्द्रियमेवास्मिꣳस्तद्दध्म ऽइति वदन्तो मित्राय वरुणाय चेति प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवास्मिꣳस्तद्दध्म ऽइति वदन्तस्तान्तस्यामाहुत्याम्ब्राह्मणाय दद्याद्यमनभ्यागमिष्यन्मन्न्येतार्त्तिं वा ऽएषा पाप्मानं यजमानस्य प्रतिदृश्योपाविक्षदार्त्तिमेवास्मिꣳस्तत्पाप्मानम्प्रतिमुञ्चाम ऽइति वदन्तः ॥ ९ ॥ तदुहोवाच याज्ञवल्क्यः । अश्रद्दधानेभ्यो हैभ्यो गौरपक्रामत्यार्त्यों वा ऽआहुतिं

(१) का० श्रौ० सू० २५. १. १३ ।

विद्ध्यन्तीत्थमेव कुर्य्याद्दण्डेनैवैनां विपिष्य्योत्थापयेदिति तद्यथैवादो धावयतोऽश्वो वाऽश्वतरो वा गदायेत बलीवर्द्दो वा युक्तस्तेन दण्डप्प्रजितेन तोत्त्रप्प्रजितेन यमद्ध्वानꣳ समीप्प्सति तꣳ समश्नुत ऽएवमेवैतया दण्डप्प्रजितया तोत्त्रप्प्रजितया यꣳ स्वर्ग्गँल्लोकꣳ समीप्प्सति तꣳ समश्नुते ॥ १० ॥ अथ होवाचारुणिः । द्यौर्व्वा ऽएतस्याग्निहोत्रस्याग्निहोत्र्ययमेव वत्सो योऽयम्पवत ऽइयमेवाग्निहोत्रस्थाली न वा ऽएवं विदुषोऽग्निहोत्री नश्यति क्व ह्यसौ नश्येन्नैवं विदुषोऽग्निहोत्रीवत्सो नश्यति क्व ह्येष नश्येन्नैवं विदुषोऽग्निहोत्रस्थाली भिद्यते क्व हीयम्भिद्येत श्रियो वै पर्ज्जन्न्यो वर्षति तद्दिव्याच्छ्रेमाणम्मे महिमानमधारयमाणोपाविक्षच्छ्रेयान्भविष्य्यामीति तामात्मन्न्येव कुर्व्वीतात्मन्न्येव तच्छ्रियन्धत्त ऽइति ह स्माहारुणिरेतदेव तत्र कर्म्म ॥ ११ ॥ तदाहुः । यस्याग्निहोत्री दोह्यमाना वाश्येत[१] किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति स्तम्बमाच्छिद्य ग्रासयेदेतदेव तत्र कर्म्म ॥ १२ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



तदाहुः । यस्याग्निहोत्री लोहितन्दुहीत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति व्युत्क्रामतेत्युक्त्वा[२] मेक्षणङ्स्त्वान्वाहार्य्यपचनम्परिश्रयितवै ब्रूयात्तस्मिन्नेनच्छ्रपयि-

(१) का० श्रौ० सू० २५. १. १८ । (२) का० श्रौ० सू० २५. २. २ ।

त्वा तस्मिँस्तूष्णीञ्जुहुयादनिरुक्तो वै प्प्रजापतिः प्प्राजापत्यमग्निहोत्रꣳ सर्व्वं व्वा ऽअनिरुक्तन्तदनेन सर्व्वेण प्प्रायश्चित्तिङ्कुरुते तान्तस्यामाहुत्याम्ब्राह्मणाय दद्याद्यमन-ऽभ्यागमिष्यन्म्मन्न्येतार्त्तिं व्वा ऽएषा पाप्प्मानं य्यजमानस्य प्प्रतिदृश्श्य दुहे या लोहितन्दुह ऽआर्त्तिमेवास्मिँस्तत्पा-प्प्मानम्प्रतिमुञ्चत्यथ यदन्न्यद्विन्देत्तेन जुहुयादनार्त्तेनैव तदार्त्तं य्यज्ञस्य निष्करोत्त्येतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याग्निहोत्रन्दोह्यमानममेद्ध्यमापद्येत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्धैके होतव्व्यम्मन्न्यन्ते प्प्रयतमेतन्नै-तस्याहोमोऽवकल्प्पते न वै देवाः कस्म्माच्चन बीभत्सन्ते बीभत्सन्ता३ऽइ तु देवा ऽइत्थमेव कुर्य्याद्गार्हपत्यादुष्ण-म्भस्म्म निरुह्य तस्मिन्नेनदुष्णे भस्म्मँस्तूष्णीन्निनयेदद्भि-रुपनिनयत्त्यद्भिरेनदाप्प्नोत्यथ यदन्न्यद्विन्देत्तेन जुहुयादेत-देव तत्र कर्म्म ॥ २ ॥ तदाहुः । यस्याग्निहोत्रन्दोहितम-मेद्ध्यमापद्येत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति य ऽएवै-तेऽङ्गारा निरूढा येष्ष्वधिश्श्रयिष्यन्भवति तान्प्रत्युह्य तस्मिन्नेनदुष्णे भस्म्मँस्तूष्णीन्निनयेदद्भिरुपनिनयत्त्य-द्भिरेनदाप्प्नोत्यथ यदन्न्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्याग्निहोत्रमधिश्श्रितममेद्ध्यमापद्येत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति य ऽएवैतेऽङ्गारा निरूढा येष्ष्वधिश्श्रितम्भवति तेष्ष्वेनत्तूष्णीञ्जुहुयात्तद्धुत-महुतं य्यदुहैनत्तेषु जुहोति तेन हुतं य्यद्वेनाँस्तेनैवानुगम-

(१) "०दनिरुक्तमनिरुक्तो" इति 'ग' 'ज' पुस्तकयोः ।

यति तेनाहुतमद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्न्यद्वि-
न्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ४ ॥ तदाहुः । यद्-
धिश्रितेऽग्निहोत्रे यजमानो म्म्रियेत किन्तत्र कर्म्म का
प्प्रायश्चित्तिरिति तदुवैनदभिपर्य्याधाय विष्पन्दयेदुथो
खल्वाहुरेतावती सर्वस्य हविर्य्यज्ञस्य प्प्रायश्चित्तिरित्येतदेव
तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याग्निहोत्रꣳ स्रुच्च्युन्नीतꣳ
स्कन्देत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति स्कन्नप्प्रायश्चि-
त्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यद्यु नीची
स्रुक् स्याद्यदि वा भिद्येत स्कन्नप्प्रायश्चित्तेनैवाभिमृश्या-
द्भिरुपनिनीय यत्स्थाल्ल्याम्परिशिष्टꣳ स्यात्तेन जुहुयात्
॥ ६ ॥ तद्धैके । प्प्रतिपरेत्य यत्स्थाल्ल्याम्परिशिष्टम्भवति
तेन जुह्वति तदु तथा न कुर्य्यात्स्वर्ग्ग्यं वा ऽएतद्यदग्नि-
होत्रं यो हैनन्तत्र ब्रूयात्प्रति न्वा ऽअयꣳ स्वर्ग्गाल्लोका-
दुवारुक्षन्नास्येदꣳ स्वर्ग्ग्यमिव भविष्यतीतीश्वरो ह तथैव
स्यात् ॥ ७ ॥ इत्थमेव कुर्य्यात् । तदेवोपविशेद्यत्स्थाल्ल्या-
म्परिशिष्टꣳ स्यात्तदस्म्मा ऽउन्नीयाहरेयुस्तद्धैक ऽउपव-
ल्हन्ते हुतोच्छिष्टं वा ऽएतद्यातयाम वा ऽएतन्नैतस्य होत-
व्यमिति तदु तन्नाद्रियेत यदा वा ऽएतदुयातयामाथैनद्ध-
विरातञ्चनङ्कुर्वते तस्माद्यत्स्थाल्ल्याम्परिशिष्टꣳ स्यात्त-
दस्म्मा ऽउन्नीयाहरेयुर्य्यद्यु तत्र न स्याद्यदन्न्यद्विन्देत्त-
दग्नावधिश्रित्यावज्ज्योत्यापः प्प्रत्यानीयोद्वास्य तददो
हैवोन्नेष्यामीत्युक्तम्भवत्यथात्र यथोन्नीतमेवास्म्मा ऽउन्नी-
याहरेयुस्तेन कामञ्जुहुयादेतदेव तत्र कर्म्म ॥ ८ ॥ तदाहुः ।

यस्याग्निहोत्रꣳ स्रुच्युन्नीतममेध्यमापद्येत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्न्यन्ते प्प्रयतमेतन्नैतस्याहोमोऽवकल्पते न वै देवाः कस्म्माच्चन बीभत्सन्त ऽइति तद्धैक ऽउत्सिच्च्य च्छर्दयन्ति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्ब्रूयात्परासिश्चत न्वा ऽअयमग्निहोत्रं क्षिप्प्रेऽयं य्यजमानः परासेक्ष्यत ऽइतीश्वरो ह तथैव स्यादित्थमेव कुर्य्यादाहवनीये समिधमभ्याधायाहवनीयादुवोष्णम्भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मँस्तूष्णीन्निनेयदद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ९ ॥ तदाहुः । यस्याग्निहोत्रꣳ स्रुच्युन्नीतमुपरिष्टादववर्षेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्विद्यादुपरिष्टान्मा शुक्रमागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्भविष्यामीति तेन कामञ्जुहुयादेतदेव तत्र कर्म्म ॥ १० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ गार्हपत्याद्यनुगमने प्रायश्चित्तम् ]

तदाहुः । यत्पूर्वस्यामाहुत्याꣳ हुतायामथाग्निरनुगच्छेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति यम्प्रतिवेशः शकलं विन्देत्तमभ्यस्याभिजुहुयाद्दारौ दारावग्निरिति ब्ब्रुवन्दारौ दारौ ह्येवाग्निर्य्यद्यु ऽअस्य हृदयं व्व्येव लिखेद्धिरण्ण्यमभिजुहुयादग्नेर्वा ऽएतद्रेतो यद्धिरण्ण्यं य्य ऽउ वै पुत्त्रः स पिता यः पिता स पुत्त्रस्तस्माद्धिरण्ण्यमभिजुहुयादेतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याहवनीय ऽउद्धृतः

पुराग्निहोत्रादनुगच्छेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयात्स य-
द्यपि शतमेव कृत्वः पुनः पुनरुद्धृतोऽनुगच्छेद्गार्हपत्यादेवैन-
म्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयादेतदेव तत्र कर्म्म
॥२॥ [अर्धः प्रपाठकः ४८] तदाहुः । यस्य गार्हपत्योऽनुगच्छे-
त्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तꣳ हैक ऽउल्मुकादेव
निर्म्मन्थन्ति यतो वै पुरुषस्यान्ततो नश्यति ततो वै स तस्य
प्प्रायश्चित्तिमिच्छत ऽइति वदन्तस्तदु तथा न कुर्य्यादु-
ल्मुकꣳ ह वै वादाय चरेयुरुल्मुकस्य वावव्रश्चमित्थमेव
कुर्य्यादुल्मुकादङ्गारमादाय तमरण्योरभिविमत्थ्नीयादुप ह
तङ्काममाप्नोति य ऽउल्मुकमत्थ्य ऽउपो तं य्योऽरण्योरेत
देव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्याग्नावग्निमभ्युद्ध-
रेयुः किन्तत्र कर्म्म का प्प्रायश्चित्तिरितीश्वरौ वा ऽएतौ
सम्पद्याशान्तौ यजमानस्य प्प्रजाश्च पशूँश्च निर्दहस्तद-
भिमन्त्रयेत 'समितꣳ सङ्कल्पेथाꣳ सम्प्रियौ रोचिष्णू
सुमनस्यमानौ ॥ इषमूर्जमभि संवसानौ ॥ सं वाम्मनाꣳसि
सं व्रता समु चित्तान्याकरम् ॥ अग्ने पुरीष्याधिपा भव
त्वन्न ऽइषमूर्जं य्यजमानाय धेही'ति शान्तिमेवाभ्यामेतद्व-
दति यजमानस्य प्प्रजायै पशूनामहिꣳसायै ॥ ४ ॥ यद्यु
ऽअस्य हृदयं व्व्येव लिखेत् । अग्नयेऽग्निमतेऽष्टाकपाल-
म्पुरोडाशन्निर्वपेत्तस्यावृत्सप्तदश सामिधेनीरनुब्रूयाद्वार्त्र-
घ्नावाज्यभागौ विराजौ संय्याज्ये ऽअथैते याज्यानुवाक्ये

(१) शु० य० सं० (अ० १२ क० ५७-५८)।

ऽ[1]'अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ॥ हव्यवाड्जु-
ह्वास्य' ऽइत्यथ याज्या '[2]त्वं ह्यग्ने ऽअग्निना विप्रो विप्रेण
सन्त्सता ॥ सखा सख्या समिध्यस' ऽइति शान्तिमेवाभ्या-
मेतद्वदति यजमानस्य प्रजायै पशूनामहिंसाया ऽएत-
देव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याहवनीयेऽननुगते
गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तं
हैके तत ऽएव प्राञ्चमुद्धरन्ति प्राणा वा ऽअग्नयः प्राणा-
नेवास्मा ऽएतदुद्धराम ऽइति वदन्तस्तदु तथा न कुर्याद्यो
हैनन्तत्र ब्रूयात्प्राचो न्वा ऽअयं यजमानस्य प्राणान्प्रारौ-
त्सीन्मरिष्यत्ययं यजमान ऽइतीश्वरो ह तथैव स्यात्
॥ ६ ॥ अथ हैके प्रत्यञ्चमाहरन्ति । प्राणोदानाविमाविति
वदन्तस्तदु तथा न कुर्यात्स्वर्ग्यं वा ऽएतद्यदग्निहोत्रं यो
हैनन्तत्र ब्रूयात्प्रति न्वा ऽअयं स्वर्गाल्लोकादवारुक्षन्ना-
स्येदं स्वर्ग्यमिव भविष्यतीतीश्वरो ह तथैव स्यात्
॥ ७ ॥ अथ हैकेऽन्यङ्गार्हपत्यम्मन्थन्ति । तदु तथा न
कुर्याद्यो हैनन्तत्र ब्रूयादग्नेर्न्वा ऽअयमधि द्विषन्तम्भ्रातृ-
व्यमजीजनत क्षिप्रेऽस्य द्विषद्भ्रातृव्यो जनिष्यते
प्रियतमं रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ८ ॥ अथ
हैकेऽनुगमयान्यम्मन्थन्ति । तस्याशान्नेयादपि यत्परिशि-
ष्टमभूत्तदजीजसत नास्य दायादश्चन परिशेक्ष्यत ऽइती-
श्वरो ह तथैव स्यात् ॥ ९ ॥ इत्थमेव कुर्यात् । अरण्योर-
ग्नी समारोह्योदङ्ङुदवसाय निर्म्मथ्य जुहवदसेत्तथा ह न

(१) ऋ० सं० १. १. २२ । (२) ऋ० सं० ६. ३. ३१. ।

काञ्चन परिचक्षाङ्करोति नवावसान ऽउ ऽअस्याभितोराद्ध हुतम्भवति * ॥ १० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अग्न्यन्तरसंसर्गादौ प्रायश्चित्तम् ]

अथ प्प्रातर्ब्भस्स्मादग्युद्धृत्य । गोमयेनालिप्प्यारण्योरेवाग्नी समारोह्य प्प्रत्यवस्यति मथित्वा गार्हपत्यमुद्धृत्याहवनीयमाहृत्यान्न्वाहार्य्यपचनमग्नये पथिकृतेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्ब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संय्याज्ये ऽअथैते याज्यानुवाक्क्ये 'व्वेर्थ्था हि वेधो ऽअद्ध्वनः पथश्च्च देवाञ्जसा ॥ अग्ग्ने यज्ञेषु सुक्रत'वित्यथ याज्या'देवानामपि पन्थामगन्म यच्छक्क्नवाम तदनुप्प्रवोढुम् ॥ अग्निर्व्विद्वान्त्स यजात्सेदु होता सो ऽअद्ध्वरान्त्स ऽऋतून्कल्पयाती'त्यग्निर्वै पथिकृत्पथामपिनेता स ऽएवैनं य्यज्ञपथमपिनयत्येतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याग्नयः सꣳसृज्ज्येरन्न्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति स यदि परस्तादहन्नभीयात्तद्विद्यात्परस्तान्म्मा शुक्क्रमागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्भविष्ष्यामीति यद्यु ऽअस्य हृदयं व्व्येव लिखेदग्नये विविचयेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्ब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संय्याज्ये ऽअथैते

* का० श्रौ० सू० २५. ३. ४-९।
(१) ऋ० सं० ४. ५. २१। (२) ऋ० सं० ७. ५. ३०।

याज्यानुवाक्क्ये 'वि ते विष्ष्वग्वातजूतासो ऽअग्ने भामासः शुचे शुचयश्चरन्ति ॥ तुविम्म्रक्षासो दिव्व्या नवग्वा वना वनन्ति धृषता रुजन्त' इत्त्यथ याज्या 'त्वामग्ने मानुषीरीडते विशो होत्राविदं विविचिꣳ रत्नधातमम् ॥ गुहा सन्तꣳ सुभग विश्वदर्शतन्तुविष्ष्वणसꣳ सुयजङ्घृतश्रिय'मित्त्यथो ह यो द्विषतो ब्भ्रातृव्व्याद्व्याविवृत्सेत तत्काम ऽएतया यजेत वि हैवास्म्माद्वर्त्तत ऽएतदेव तत्र कर्म्म ॥ २ ॥ यद्ययमितो दुहन्नभीयात् । तद्विद्यादभि द्विषन्तम्भ्रातृव्व्यम्भविष्ष्यामि श्श्रेयान्भविष्ष्यामीति यद्यु ऽअस्य हृदयं व्व्येव लिखेद- ग्नये संवर्ग्गायाष्ट्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्ब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ सꣳयाज्ये ऽअथैते याज्ज्यानुवाक्क्ये 'परस्या ऽअधि संवतोऽ- वराँ२॥ऽअब्भ्यातर ॥ यत्राहमस्मि ताँ२॥ ऽअवे'त्त्यथ याज्ज्या 'मा नो ऽअस्मिन्महाधने परावर्ग्भारभृद्यथा ॥ संवर्ग्गꣳ सꣳ रयिञ्जये'त्त्यथो ह यो द्विषतो ब्भ्रातृव्व्यात्सं- विवृक्षेत तत्काम ऽएतया यजेत सꣳ हैवास्म्माद्वृङ्क्त ऽएतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्य वैद्युतो दुहेत्कि- न्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्विद्यादुपरिष्ट्टान्मा शुक्र- मागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्भविष्ष्यामीति यद्यु ऽअस्य हृदयं व्व्येव लिखेदग्नयेऽप्सुमतेऽष्ट्टाकपाल- म्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनु-

(१) ऋ० सं० ४. ५. ८। (२) ऋ० सं० ३. ८. २६। (३) शु० य० सं० ११. ७१। (४) ऋ० सं० ६. ५. २६।

ब्बूयाद्वार्त्रघ्नावाज्ज्यभागौ विराजौ सँय्याज्ज्ये ऽअथैते याज्ज्यानुवाक्क्ये ‘ऽअप्स्वग्ने सधिष्ट्व सौषधीरनुरुद्ध्यसे ॥ गब्भें सञ्जायसे पुन’रित्यथ याज्ज्या ‘गब्भों ऽअस्योषधीनाङ्गब्भों व्वनस्पतीनाम् । गब्भों व्विश्वस्य भूतस्याग्ने गब्भों ऽअपामसी’ति शान्तिमेवाब्भ्यामेतद्दधाति यजमानस्य प्प्रजायै पशूनामहिंसाया ऽएतदेव तत्र कर्म्म ॥ ४ ॥ तदाहुः । यस्याग्नयोऽमेध्यैरग्निभिः सꣳसृज्ज्येरन्किन्तत्र कर्म्म का प्प्रायश्चित्तिरित्यग्नये शुचयेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्बूयाद्वार्त्रघ्नावाज्ज्यभागौ व्विराजौ संय्याज्ज्ये ऽअथैते याज्ज्यानुवाक्क्ये ‘ऽअग्निः शुचिव्रततमः शुचिर्व्विप्प्रः शुचिः कविः ॥ शुची रोचत ऽआहुत’ इत्यथ याज्ज्या ‘दग्ने शुचयस्तव शुक्रा ब्भ्राजन्त ऽईरते ॥ तव ज्ज्योतींꣳष्यर्च्चय’ ऽइति शान्तिमेवाब्भ्यामेतद्दधाति यजमानस्य प्प्रजायै पशूनामहिंसाया ऽएतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याहवनीयमनुद्धृतमादित्योऽब्भ्यस्तमियात्किन्तत्र कर्म्म का प्प्रायश्चित्तिरित्येते वै रश्मयो व्विश्वे देवास्तेऽस्मादपप्प्रयन्ति तदस्मै व्व्यृद्ध्यते यस्माद्देवा ऽअपप्प्रयन्ति तामनु व्व्यृद्धिं य्यश्च व्वेद यश्च न ता ऽउभावाहतुरनुद्धृतमस्याब्भ्यस्तमगादिति तत्रेरथङ्कुर्य्याद्धरितꣳ हिरण्यन्दब्भें प्प्रबद्ध्य पश्चाद्धर्त्तवै ब्बूयात्तदेतस्य रूपङ्क्रियते य ऽएष तपत्यहर्वा ऽएष तदुहन्नो

---

(१) ऋ० सं० ६. ३. ३०। शु० य० सं० १२. ३६। (२) शु० य० सं० १२. ३७। (३) ऋ० सं० ६. ३. ४०। (४) ऋ० सं० ६. ३. ३९।

रूपङ्क्रियते पवित्रन्दर्भाः पवयत्येवैनन्तदुथेद्धममादीप्य प्राङ्वः हर्त्तवै ब्रूयाद्ब्राह्मण ऽआर्षेय ऽउद्धरेद्ब्राह्मणो वा ऽआर्षेयः सर्वा देवताः सर्वाभिरेवैनन्तद्देवताभिः समर्द्धयति तमुपसमाधाय प्रतिपरेत्य गार्हपत्य ऽआज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य चतुर्गृहीतमाज्यङ्गृहीत्वा समिधमुपसङ्गृह्य प्राङुदाद्रवत्यथाहवनीये समिधमभ्याधाय दक्षिणञ्जान्वाच्य जुहोति विश्वेभ्यो देवेभ्यः स्वाहेति स यथा ब्राह्मणमावसथवासिनङ्क्रुद्धं यन्तमुक्षवेहतोपमन्त्रयेतैवमेवैतद्विश्वान्देवानुपमन्त्रयते जानन्ति हैनमुप हैनमावर्त्तन्त ऽएतदेव तत्र कर्म्म ॥ ६ ॥ तदाहुः । यस्याहवनीयमनुद्धृतमादित्योऽभ्युदियात्किन्तत्र कर्म्म का प्रायश्चित्तिरित्येते वै रश्मयो विश्वे देवास्तेऽस्मादृषिवाᳪंसोऽपप्रयन्ति तदस्मै व्यृध्यते यस्माद्देवा ऽअपप्रयन्ति तामनु व्यृद्धिं यश्च वेद यश्च न ता ऽउभावाहतुरनुद्धृतमस्याभ्युदगादिति तत्रेत्थङ्कुर्य्याद्रजतः हिरण्यन्दर्भे प्रबद्ध्य पुरस्ताद्धर्त्तवै ब्रूयात्तच्चन्द्रमसो रूपङ्क्रियते रात्रिर्वै चन्द्रमास्तद्रात्रे रूपङ्क्रियते पवित्रन्दर्भाः पवयत्येवैनन्तदुथेद्धममादीप्याह्वयश्वः हर्त्तवै ब्रूयाद्ब्राह्मण ऽआर्षेय ऽउद्धरेद्ब्राह्मणो वा ऽआर्षेयः सर्वा देवताः सर्वाभिरेवैनन्तद्देवताभिः समर्द्धयति तमुपसमाधाय प्रतिपरेत्य गार्हपत्य ऽआज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य यथागृहीतमाज्यङ्गृहीत्वा समिधमुपसङ्गृह्य प्राङुदाद्रवत्यथाहवनीये समिधमभ्याधाय दक्षिणञ्जान्वाच्य जुहोति

विश्श्वेब्भ्यो देवेब्भ्यः स्वाहेति सोऽसावेव बन्धुर्न्न ह वै तत्र का चनार्त्तिर्न्न रिष्टिर्ब्भवति यत्रैषा प्प्रायश्चित्तिः क्रियत ऽएतदेव तत्र कर्म्म ॥ ७ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



[ मृताग्निहोत्रनिरूपणम् ]

तदाहुः । यदेष दीर्ग्घसत्र्यग्निहोत्रञ्जुह्वत्प्रवसन्म्रियेत जुहुयुरस्माऽ३ ऽइ नाऽ३ ऽइति तद्धैके होतव्यम्मन्न्यन्त ऽआगन्तोरिति तदु तथा न कुर्य्यादुतस्त्थानो वा ऽएष तस्म्मै यदेनक्ष शवद्ह्वाया ऽइव जुहुयुर्य्यज्ञाय वा ऽएष ऽआहुतिब्भ्यस्तस्त्थानः स हैनममृष्ष्यमाणस्तृप्प्रह्ः सचते ॥ १ ॥ अथ हैक ऽआहुः । एवमेवान्न्वाहिता ऽआहूयमानाः शयीरन्निति तदु तथा न कुर्य्यादुतस्त्थानो वा ऽएष तस्म्मै यदेनक्ष शवद्ह्वाया ऽइवेन्धीरन्न्यज्ञाय वा ऽएष ऽआहुतिब्भ्यस्तस्त्थानः स हैनममृष्ष्यमाणस्तृप्प्रह्ः सचते ॥ २ ॥ अथ हैकेऽरण्ण्योः । अग्नी समारोह्य निदधति तमाह्वते निर्म्मन्थन्ति तदु तथा न कुर्य्यादुतस्त्थानो वा ऽएष तस्म्मै यदेनक्ष शवद्ह्वाया ऽइव निर्म्मन्थेयुर्य्यज्ञाय वा ऽएष आहुतिब्भ्यस्तस्त्थानः स हैनममृष्ष्यमाणस्तृप्प्रह्ः सचते ॥ ३ ॥ इत्थमेव कुर्य्यात् । निवान्न्यवत्सामेष्द्ध्वै ब्ब्रूयात्तस्यै पयसा जुहुयादार्त्तं वा

ऽएतत्पयो यन्निवान्यवत्साया * ऽआर्त्तमेतदग्निहोत्रं यदु-न्मृतस्य तदार्त्तेनैव तदार्त्तन्निष्कृत्य श्रेयान्भवति ॥ ४ ॥ तदप्युपमास्ति । यद्द्वौ रथौ मृदितौ समागच्छेतां स्यादेवान्यतरः स्यदायेति ॥ ५ ॥ तस्य वा ऽएतस्या-ग्निहोत्रस्योपचारः । प्राचीनावीती दोहयति यज्ञोपवीती वै देवेभ्यो दोहयत्यथैवम्पितृणाम् ॥६॥ नाङ्गारेष्वधिश्रयति। यद्धाङ्गारेष्वधिश्रयेद्देवत्रा कुर्य्याद्गार्हपत्यादुष्णम्भस्म दक्षिणा निरुह्य तस्मिन्नेनदधिश्रयति पितृदेवत्यमेवैनत्तत्करोति ॥७॥ नावज्ज्योतयति नापः प्रत्यानयति । यद्धावज्ज्योतये-द्यदपः प्रत्यानयेद्देवत्रा कुर्य्यान्न त्रिः प्रतिष्ठापः हरति यत्रिः प्रतिष्ठापः हरेद्देवत्रा कुर्य्यात्सकृदेव निकर्षन्हरति पितृदेवत्यमेवैनत्तत्करोति ॥ ८ ॥ नोन्नेष्यामीत्याह । न चतुरुन्नयति यद्धोन्नेष्यामीति ब्रूयाद्यच्चतुरुन्नयेद्देवत्रा कुर्य्या-त्सकृदेव तूष्णीन्न्यक्पर्य्यस्यति पितृदेवत्यमेवैनत्तत्करोति ॥ ९ ॥ नोपरिष्टात्समिधमभ्यस्य हरति । यद्धोपरिष्टा-त्समिधमभ्यस्य हरेद्देवत्रा कुर्य्यादधस्तादुपास्य हरति पितृ-देवत्यमेवैनत्तत्करोति ॥ १० ॥ नोत्तरेण गार्हपत्यमेति । यद्धोत्तरेण गार्हपत्यमियाद्देवत्रा कुर्य्याद्दक्षिणेन गार्हपत्य-मेति पितृदेवत्यमेवैनत्तत्करोति ॥ ११ ॥ अथ यान्यमू-न्न्युदीचीनाग्राणि तृणानि भवन्ति । दक्षिणाग्राणि तानि करोति पितृदेवत्यमेवैनत्तत्करोत्यथाहवनीये समिधमभ्या-धाय सव्यञ्जान्वाच्य सकृदेव तूष्णीन्न्यक्पर्य्यस्यति

* निवः पाता अन्यः परकीयवत्सो यस्याः । परकीयेण वत्सेन या मृतवत्सा गौर्दुह्यते सा निवान्यवत्सा । "अभिसृश्यार्धाः पिष्ट्वा निवान्यादुग्धे" ( का० श्रौ० सू० ५. ८. १८ ) ।

पितृदेवत्यमेवैनत्तत्करोति नोदिङ्गयति नोपमृष्टे न प्प्राश्नाति नोदुक्षति पितृदेवत्यमेवैनत्तत्करोति ॥ १२ ॥ तदाहुः । यदेष दीर्घसत्र्यग्निहोत्र्युहृद्वत्प्रवसन्म्रियेत कथमेनमग्निभिः कुर्युरिति तद्ध हैके दग्ग्ध्वाहरन्ति तमाहृतमग्निभिः सङ्क्षापयन्ति तदु तथा न कुर्य्याद्यथान्न्यस्यां य्योनौ रेतः सिक्तन्तदन्न्यस्याम्प्रजिजनयिषेत्तादृक्तदुस्थीन्न्येताम्न्याहृत्य कृष्णाजिने न्न्युप्प्य पुरुषविधिं विधायोर्णाभिः प्प्रच्छाद्याज्ज्येनाभिघार्य्य तमग्निभिः समुपोषेत्तदेनथ्ं स्वाद्योनेः प्प्रजनयतीति ॥ १३ ॥ तद्ध हैके ग्ग्रामाग्निना दहन्ति । तदु तथा न कुर्य्यादेष वै विश्वात्क्रव्व्यादग्निः स हैनमीश्वरः सपुत्रं सपशुं समन्तोः ॥ १४ ॥ अथ हैके प्प्रदव्व्येन दहन्ति । तदु तथा न कुर्य्यादेष वाऽअशान्तोऽग्निः स हैनमीश्वरः सपुत्रं सपशुम्प्रदग्ग्धोः ॥ १५ ॥ अथ हैक ऽउल्मुक्क्येन दहन्ति । तदु तथा न कुर्य्यादेष वै रुद्रियोऽग्निः स हैनमीश्वरः सपुत्रं सपशुमभिमन्तोः ॥ १६ ॥ अथ हैकेऽन्तरेणाग्नीश्चितिश्चित्त्वा । तमग्निभिः समुपोषन्त्येतद्वै यजमानस्यायतनं य्यदन्तरेणाग्ग्नीनिति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्ब्रूयान्मद्ध्ये न्वा ऽअयङ्कामस्याशासनमजीजनत क्षिप्प्रेऽस्याशासनञ्जनिष्ष्यते प्प्रियतमं रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ और्ध्वदेहिकनिरूपणम् ]

अथ ह स्माह नाको मौद्गल्ल्यः । मरिष्ष्यन्तं चेद्यजमानम्मन्न्येत यत्रैवास्मा ऽआशासनञ्जोषितं स्यात्तदरण्ण्योरग्नी समारोह्य निर्म्मथ्य जुहुवद्वसेत्स यदास्माल्लोकाद्यजमानः प्प्रेयात् ॥ १ ॥ अथैनमन्तरेणाग्नीश्चितिञ्चित्त्वा । तमग्निभिः समुपोषेदिति तदु तथा न कुर्य्यादुतस्थानो वा ऽएष तस्म्मै यदेनः शवदह्याया ऽइव जुहुयुरर्थञ्जाय वा ऽएष ऽआहुतिभ्भ्यस्तस्थानः स हैनममृष्ष्यमाणस्तृप्प्रह्वः सचते ॥ २ ॥ इत्थमेव कुर्य्यात् । तिस्र ऽएव स्थालीरेष्टवै ब्ब्रूयात्तासु गोमयानि च शुम्बलानि चावधाय नाना त्रिष्ष्वग्निषु प्प्रवृञ्ज्यात्ते ये ततः सन्तापादग्नयो जायेरँस्तैरेनन्दहेयुस्तथाह तैरेव दग्धो भवति नो प्प्रत्यक्षमिव ॥ ३ ॥ तस्म्मादुप्प्येतदृषिणाभ्भ्यनूक्तम् । 'यो ऽअग्निरग्नेरद्ध्यजायत शोकात्पृथिव्व्या ऽउत वा दिवस्प्परि ॥ येन प्प्रजा विश्श्वकर्म्मा जजान तमग्ने हेडः परि ते व्वृणक्त्विति' यथऽर्क्तथा ब्ब्राह्मणम् ॥ ४ ॥ अथैनं विपुरीषङ्कृत्त्वा । अस्याम्पुरीषम्प्रतिष्ठापयति पुरीषं व्वा ऽइयन्तत्पुरीष ऽएवैतत्पुरीषन्दधाति या ह व्वा ऽअस्यैषा व्वृकला सपुरीषा तस्यै ह विदग्धायै सृगालः सम्भवति नेत्सृगालः सम्भवदिति तदु तथा न कुर्य्याद्रक्षोधुका हास्य प्प्रजा भवति तमन्तरतः प्प्रक्षाल्ल्याज्येनान्न्वनक्ति मेद्ध्यमेवैनत्तत्करोति ॥ ५ ॥ अथास्य सप्प्तसु प्प्राणायतनेषु * ।

(१) शु० य० सं० अ० १३ क० ४५ ।

* का० श्रौ० सू० २५. ७. २०—३४ ।

सप्त हिरण्यशकलान्प्रत्यस्यति ज्योतिर्वा ऽअमृतꣳ हिरण्यञ्ज्योतिरेवास्मिँस्तदमृतन्दधाति ॥ ६ ॥ अथैनमन्तरेणाग्नीश्चितिञ्चित्वा । कृष्णाजिनमुत्तरलोम प्राचीनग्रीवम्प्रस्तीर्य्य तस्मिन्नेनमुत्तानन्निपाद्य जुहूङ्घृतेन पूर्ण्णान्दक्षिणे पाणावादधाति सव्य ऽउपभृतमुरसि ध्रुवाम्मुखेऽग्निहोत्रहवणीन्नासिकयोः स्रुवौ कर्ण्णयोः प्राशित्रहरणे शीर्षञ्चमसम्प्रणीताप्प्रणयनम्पार्श्वयोः शूर्प्पे ऽउदरे पात्रीꣳ समवत्तधानीम्पृषदाज्यवतीꣳ शिश्नस्यान्ते शम्म्यामाण्डयोरन्ते वृषारवावन्वगुलूखलञ्च मुसलञ्चान्तरेणोरू ऽअन्यानि यज्ञपात्राणि दक्षिणे पाणौ स्फ्यम् ॥ ७ ॥ स ऽएष यज्ञायुधी यजमानः । यथा बिभ्यदामोषमतीयादेवमेव योऽस्य स्वर्ग्गे लोको जितो भवति तमभ्यत्येति तमेते सन्ताप्या ऽअग्नयो यथा पुत्राः पितरम्प्रोषुषमागतꣳ शिवमुपस्पृशन्त्येवꣳ शिवꣳ हैवैनमुपस्पृशन्ति प्र हैवैनङ्कल्पयन्ति ॥ ८ ॥ तं यदि गार्हपत्यः पूर्वः प्राप्नुयात् । तद्विद्यात्प्रतिष्ठ ऽएनमग्निः पूर्वः प्रापत्प्रतिष्ठास्यति प्रत्येव तेऽस्मिँल्लोके स्थास्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ ९ ॥ अथ यद्याहवनीयः । तद्विद्यान्मुख्य ऽएनमग्निः पूर्वः प्रापन्मुखतो लोकानजैषीन्मुखमेव तेऽस्मिँल्लोके भविष्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ १० ॥ अथ यद्यन्वाहार्य्यपचनः । तद्विद्यादन्नाद ऽएनमग्निः पूर्वः प्रापदन्नमत्स्यत्यन्नमेव तेऽस्मिँल्लोकेऽत्स्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ ११ ॥ अथ यदि

सर्व्वे सकृत् । तद्विद्यात्कल्ल्याणँल्लोकमजैषीदित्त्येतान्न्यस्मिन्न्विज्ञानानि ॥ १२ ॥ तां व्वा ऽएताम् । यजमानाय्माहुतिमन्ततो जुहोति स योऽस्य स्वर्ग्गे लोको जितो भवति तत ऽआहुतिमयोऽमृतः सम्भवति ॥ १३ ॥
अथ यान्न्यश्म्ममयानि च मृन्न्मयानि च भवन्ति । तानि ब्ब्राह्मणाय ‡ दद्याच्छवोद्वहमु ह तम्मन्न्यन्ते यस्तानि प्प्रतिगृह्णणात्त्यप ऽएवैनान्न्यभ्यवहरेयुरापो व्वा ऽअस्य सर्व्वस्य प्प्रतिष्ठा तदेनमप्प्स्वेव प्प्रतिष्ठापयति ॥ १४ ॥
अथैतामाहुतिञ्जुहोति * । पुत्त्रो वा ब्भ्राता वा यो वान्न्यो ब्ब्राह्मणः स्याद्'स्म्मात्त्वमधि जातोऽसि त्त्वदयञ्जायताम्पुनः ॥ असौ स्वर्ग्गाय लोकाय स्वाहे'त्त्यनपेक्षमेत्त्याप ऽउपस्पृशन्ति † ॥ १५ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ ९५ ॥

---

‡ का० श्रौ० सू० २५. ७. ३६ ।
* का० श्रौ० सू० २५. ७. ४० ।
( १ ) शु० य० सं० ३३. २२ ।
† 'अनपेक्षमेत्योपस्पृशन्त्यपः' ( का० श्रौ० सू० २५. ७. ४१ )

[ ज्योतिष्टोमप्रायश्चित्तम् ]

सोमो वै राजा यज्ञः प्प्रजापतिः । तस्यैतास्तन्न्वो या ऽएता देवता या ऽएता ऽआहुतीर्ज्जुहोति ॥ १ ॥ स यद्य-ज्ञस्याच्छेंत् । यान्तत्प्रति देवताम्मन्न्येत तामनुसमीक्ष्य जुहु-याद्यदि दीक्षोपसत्स्वाहवनीये यदि प्प्रसुत ऽआग्नीध्रे वि वा ऽएतद्यज्ञस्य पर्व्व स्रंसते यद्ध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्देवतया यज्ञम्भिषज्ज्यति तया देवतया यज्ञम्प्रति सन्दधाति ॥ २ ॥ स यद्येनम्मनसाभि-ध्यातः । यज्ञो नोपनमेत्परमेष्ठिने स्वाहेति जुहुयात्परमेष्ठी हि स तर्हि भवत्त्यप पाप्प्मानꣳ हत ऽउपैनं य्यज्ञो नमति ॥३॥ [* काण्डस्यार्धम् २३० ] अथ यद्येनं व्वाचाभिव्व्याहृतः । यज्ञो नोपनमेत्प्रजापतये स्वाहेति जुहुयात्प्रजापतिर्हि स तर्हि भव-त्त्यप पाप्प्मानꣳ हत ऽउपैनं य्यज्ञो नमति ॥४॥ अथ यस्य राजानमच्छेत्वा । नाहरन्त ऽएयुरन्धसे स्वाहेति जुहुयादन्धो हि स तर्हि भवत्त्यप पाप्प्मानꣳ हत ऽउपैनं य्यज्ञो नमति ॥ ५ ॥ अथ यदि सातः । किञ्चिदापद्येत सवित्रे स्वाहेति जुहुयात्सविता हि स तर्हि भवत्त्यप पाप्प्मानꣳ हत ऽउपैनं य्यज्ञो नमति ॥ ६ ॥ अथ यदि दीक्षासु । किञ्चिदापद्येत विश्श्वकर्म्मणे स्वाहेति जुहुयाद्विश्श्वकर्म्मा हि स तर्हि भवत्त्यप पाप्प्मानꣳ हत ऽउपैनं य्यज्ञो नमति ॥ ७ ॥ अथ यदि सोमक्क्रयण्ण्याम् । किञ्चिदापद्येत पूष्ण्णे स्वाहेति जुहुयात्पूषा हि स तर्हि भवत्त्यप पाप्प्मानꣳ हत ऽउपैनं य्यज्ञो नमति ॥ ८ ॥ अथ यदि क्क्रयायोपोत्थितः । किञ्चि-

* इयमर्धकाण्डसंख्याऽत्र काण्डे लिखिता । सापि 'क' पुस्तक एव ।

दापद्येतेन्द्राय च मरुद्भ्यश्च स्वाहेति जुहुयादिन्द्रश्च हि स तर्हि मरुतश्च भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥९॥ अथ यदि पण्यमानः । किञ्चिदापद्येतासुराय स्वाहेति जुहुयादसुरो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १० ॥ अथ यदि क्रीतः । किञ्चिदापद्येत मित्राय स्वाहेति जुहुयान्मित्रो हि स तर्हि भवत्यप पाप्मा-नꣳ हत ऽउपैनं यज्ञो नमति ॥ ११ ॥ अथ यद्यूरावा-सन्नः । किञ्चिदापद्येत विष्णवे शिपिविष्टाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि शिपिविष्टो भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १२ ॥ अथ यदि पर्युह्य-माणः । किञ्चिदापद्येत विष्णवे नरन्धिषाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि नरन्धिषो भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १३ ॥ अथ यद्यागतः । किञ्चिदापद्येत सोमाय स्वाहेति जुहुयात्सोमो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १४ ॥ अथ यद्यासन्द्यामासन्नः । किञ्चिदापद्येत वरुणाय स्वाहेति जुहुयाद्वरुणो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १५ ॥ अथ यद्याग्नीध्रगतः । किञ्चिदा-पद्येताग्नये स्वाहेति जुहुयादग्निर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १६ ॥ अथ यदि हविर्धानगतः । किञ्चिदापद्येतेन्द्राय स्वाहेति जुहुयादिन्द्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १७ ॥ अथ यद्युपावह्रियमाणः किञ्चिदापद्येताथर्वणे

स्वाहेति जुहुयादुथर्वा हि स तर्हि भवत्युप पाप्मानꣳ हत ऽउपैनं ऽयज्ञो नमति ॥ १८ ॥ अथ यद्यꣳशुषु न्न्युप्तꣳ। किञ्चिदापद्येत विश्वेभ्यो देवेभ्यꣳ स्वाहेति जुहुयाद्विश्वे हि स तर्हि देवा भवत्युप पाप्मानꣳ हत ऽउपैनं ऽयज्ञो नमति ॥ १९ ॥ अथ यद्याप्प्याऽयमानꣳ। किञ्चिदापद्येत विष्णव ऽआप्प्रीतपाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्ह्याप्प्रीतपा भवत्युप पाप्मानꣳ हत ऽउपैनं ऽयज्ञो नमति ॥ २० ॥ अथ यद्यभिषूयमाणꣳ। किञ्चिदापद्येत यमाय स्वाहेति जुहुयाद्यमो हि स तर्हि भवत्युप पाप्मानꣳ हत ऽउपैनं ऽयज्ञो नमति ॥ २१ ॥ अथ यदि सम्भ्रियमाणꣳ। किञ्चिदापद्येत विष्णवे स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि भवत्युप पाप्मानꣳ हत ऽउपैनं ऽयज्ञो नमति ॥ २२ ॥ अथ यदि पूयमानꣳ। किञ्चिदापद्येत वायवे स्वाहेति जुहुयाद्वायुर्हि स तर्हि भवत्युप पाप्मानꣳ हत ऽउपैनं ऽयज्ञो नमति ॥ २३ ॥ अथ यदि पूतꣳ। किञ्चिदापद्येत शुक्राय स्वाहेति जुहुयाच्छुक्रो हि स तर्हि भवत्युप पाप्मानꣳ हत ऽउपैनं ऽयज्ञो नमति ॥२४॥ अथ यदि क्षीरश्रीꣳ। किञ्चिदापद्येत शुक्राय स्वाहेति जुहुयाच्छुक्रो हि स तर्हि भवत्युप पाप्मानꣳ हत ऽउपैनं ऽयज्ञो नमति ॥ २५ ॥ अथ यदि सक्तुश्रीꣳ। किञ्चिदापद्येत मन्थिने स्वाहेति जुहुयान्मन्थी हि स तर्हि भवत्युप पाप्मानꣳ हत ऽउपैनं ऽयज्ञो नमति ॥ २६ ॥ अथ यदि चमसेषून्नीतꣳ। किञ्चिदापद्येत विश्वेभ्यो देवेभ्यꣳ स्वा-

हेति जुहुयाद्विश्वे हि स तर्हि देवा भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २७ ॥ अथ यदि होमायो- द्यतः । किञ्चिदापद्येतासवे स्वाहेति जुहुयादसुर्हि स तर्हि भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २८ ॥ अथ यदि हूयमानः । किञ्चिदापद्येत रुद्राय स्वाहेति जुहुयाद्रुद्रो हि स तर्हि भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २९ ॥ अथ यद्यभ्यावृत्तः । किञ्चिदाप- द्येत वाताय स्वाहेति जुहुयाद्वातो हि स तर्हि भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥३०॥ अथ यदि प्रति- ख्यातः । किञ्चिदापद्येत नृचक्षसे स्वाहेति जुहुयान्नृचक्षा हि स तर्हि भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३१ ॥ अथ यदि भक्ष्यमाणः किञ्चिदापद्येत भक्षाय स्वाहेति जुहुयाद्भक्षो हि स तर्हि भवन्त्यप पाप्मा- नꣳ हत ऽउपैनं यज्ञो नमति ॥ ३२ ॥ अथ यदि नाराशꣳ- सेषु सन्नः । किञ्चिदापद्येत पितृभ्यो नाराशꣳसेभ्यः स्वाहेति जुहुयात्पितरो हि स तर्हि नाराशꣳसा भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३३ ॥ अथ यद्य- वभृथायोद्यतः । किञ्चिदापद्येत सिन्धवे स्वाहेति जुहुया- त्सिन्धुर्हि स तर्हि भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३४ ॥ अथ यद्यभ्यवह्रियमाणः । किञ्चिदा- पद्येत समुद्राय स्वाहेति जुहुयात्समुद्रो हि स तर्हि भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३५ ॥*

* शतम् ६२०० ।

अथ यदि प्प्रप्प्लुतः । किञ्चिदापद्येत सलिलाय स्वाहेति जुहुयात्सलिलो हि स तर्हि भवत्यप पाप्प्मानꣳ हत ऽउपैनं य्यज्ञो नमति ॥ ३६ ॥ ता वा ऽएताः । चतुस्त्रिꣳशतमाज्याहुतीर्जुहोति त्रयस्त्रिꣳशद्वै देवाः प्प्रजापतिश्चतुस्त्रिꣳश ऽएतदु सर्व्वैर्द्देवैर्य्यज्ञम्भिषज्यति सर्व्वैर्द्देवैर्य्यज्ञम्प्रति सन्दधाति ॥३७॥ ता ब्ब्रह्मैव जुहुयात् । नाब्ब्रह्मा ब्ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्ते ब्ब्रह्मा यज्ञन्दक्षिणतो गोपायति यदि तु ब्ब्रह्मा न विद्यादपि य ऽएव कश्च विद्यात्स जुहुयाद्ब्रह्माणन्त्वामन्त्र्य ब्ब्रह्मणातिसृष्टस्तासां व्वा ऽएतासां व्व्याहृतीनाम्बन्धुता व्वसिष्ठो ह विराजं विदाञ्चकार ताꣳ हेन्द्रोऽभिदध्यौ ॥ ३८ ॥ स होवाच । ऋषे विराजꣳ ह वै वेत्थ ताम्मे ब्ब्रूहीति स होवाच किम्मम ततः स्यादिति सर्वस्य च ते यज्ञस्य प्प्रायश्चित्तिम्ब्रूयाꣳ रूपञ्च त्वा दर्शयेयेति स होवाच यन्नु मे सर्व्वस्य यज्ञस्य प्प्रायश्चित्तिम्ब्रूयाः किमु स स्याद्यन्त्वꣳ रूपन्दर्शयेथा ऽइति जीवस्वर्ग्ग ऽएवास्म्माल्लोकात्प्रेयादिति ॥ ३९ ॥ ततो हैतामृषिरिन्द्राय व्विराजमुवाच । इयं व्वै व्विराडिति तस्म्माद्योऽस्यै भूयिष्ठँल्लभते स ऽएव श्श्रेष्ठो भवति ॥ ४० ॥ अथ हैतामिन्द्र ऽऋषये । प्प्रायश्चित्तिमुवाचाग्निहोत्रादुग्र ऽआ महत ऽउक्क्थात्ता ह स्म्मैताः पुरा व्व्याहृतीर्व्वसिष्ठा ऽएव विदुस्तस्म्माद्ध स्म्म पुरा व्वासिष्ठ ऽएव ब्ब्रह्मा भवति यतस्त्वेना ऽअप्प्येतर्हि य ऽएव कश्चाधीते ततोऽप्प्येतर्हि य ऽएव कश्च ब्ब्रह्मा भवति स ह वै ब्ब्रह्मा

भवितुमर्हति स वा ब्रह्मन्नित्यामन्त्रितः प्रतिशृणुयाद्य एवमेता व्याहृतीर्वेद ॥ ४१ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

---

[ * सौत्रामणीहविः ]

विश्वरूपं वै त्वाष्ट्रमिन्द्रोऽहन् । तन्त्वष्टा हतपुत्रोऽभ्यचरत्सोऽभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसङ्कृत्वा प्रासहा सोममपिबत्स विष्वङ् व्यार्च्छत्तस्येन्द्रियं वीर्यमङ्गादङ्गादस्रवत् ॥ १ ॥ तस्याक्षिभ्यामेव तेजोऽस्रवत् । सोऽजः पशुरभवद्धूम्रोऽथ यत्पक्ष्मभ्यस्ते गोधूमा यदश्रुभ्यस्तत्कुवलम् ॥ २ ॥ नासिकाभ्यामेवास्य वीर्यमस्रवत् । सोऽविः पशुरभवन्मेषोऽथ यच्छ्लेष्मणस्ता उपवाका यत्स्नीहा तद्बदरम् ॥ ३ ॥ मुखादेवास्य बलमस्रवत् । स गौः पशुरभवदृषभोऽथ ये फेनास्ते यवा यत्स्नेहस्तत्कर्कन्धु ॥ ४ ॥ श्रोत्रादेवास्य यशोऽस्रवत् । तदेकशफमभवदश्वोऽश्वतरो गर्दभः ॥ ५ ॥ स्तनाभ्यामेवास्य शुक्रमस्रवत् । तत्पयोऽभवत्पशूनाञ्ज्यो-

---

* सुष्ठु त्रायत इति सुत्रामा तस्येयं सौत्रामणी नाम पशुयागः । स च स्वतन्त्रोऽङ्गभूतश्चेति द्विविधः । चयनानन्तरं तदङ्गत्वेनानुष्ठीयमाना सौत्रामण्यङ्गभूता । स्वातन्त्र्येण विहिता च प्रधानभूता । सा नित्या काम्या नैमित्तिकी चेति त्रिविधा । तत्र फलमनुद्दिश्य विहिता नित्या हविर्यज्ञान्तर्गता । सैव च ऋद्धिफलोद्देशेन विधीयमाना काम्या । सोमवमनादिषु निमित्तेषूत्पन्नेषु तदनन्तरमनुष्ठेयतया विहिता नैमित्तिकी । स्वतन्त्रसौत्रामण्यां ब्राह्मणस्यैवाधिकारः । अङ्गभूतायां तु क्षत्रियवैश्यावप्यधिकारिणौ ।

रुरस ऽएवास्य हृदयात्त्विषिरस्रवत्स श्श्येनोऽपाष्ठिहाभवद्वयसाᳯं राजा ॥ ६ ॥ नाभ्या ऽएवास्य शुषोऽस्रवत् । तत्सीसमभवन्नायो न हिरण्ण्यᳪं रेतस ऽएवास्य रूपमस्रवत्तत्सुवर्ण्णᳪं हिरण्णयमभवच्छिश्श्नाद्देवास्य रसोऽस्रवत्सा परिस्रुद्भवत्स्फिग्गीब्भ्यामेवास्य भामोऽस्रवत्सा सुराभवदन्नस्य रसᳪं ॥ ७ ॥ मूत्राद्देवास्यौजोऽस्रवत् । स व्वृकोऽभवदारण्ण्यानाम्पशूनाञ्जूतिरूवद्ध्याद्देवास्य मन्न्युरस्रवत्स व्व्याग्घ्रोऽभवदारण्ण्यानाम्पशूनाᳯं राजा लोहितादेवास्य सहोऽस्रवत्स सिᳪहोऽभवदारण्ण्यानाम्पशूनामीशᳪं ॥ ८ ॥ लोमब्भ्य ऽएवास्य चित्तमस्रवत् । ते श्श्यामाका ऽअभवँस्त्वच ऽएवास्यापचितरस्रवत्सोऽश्श्वत्थो व्वनस्प्पतिरभवन्माᳪसेब्भ्य ऽएवास्योर्ग्गस्रवत्स ऽउदुम्बरोऽभवदस्त्थिब्भ्य ऽएवास्य स्वधास्रवत्स न्न्यग्ग्रोधोऽभवन्मज्जब्भ्य ऽएवास्य भक्षᳪं सोमपीथोऽस्रवत्ते व्व्रीहयोऽभवन्नेवमस्येन्द्रियाणि व्वीर्य्याणि व्व्युदक्क्रामन् ॥ ९ ॥ अथ ह वै तर्हि । नमुचिनैवासुरेण सह चचार स ऽऐक्षत नमुचिरपुनर्व्वा ऽअयमभूद्धन्तास्येन्द्रियं व्वीर्य्यᳪं सोमपीथमन्नाद्यᳪं हराणीति तस्यैतयैव सुरयेन्द्रियं व्वीर्य्यᳪं सोमपीथमन्नाद्यमहरत्स ह न्न्यपर्ण्णᳪं शिश्श्ये तन्देवा ऽउपसञ्जग्मिरे श्श्रेष्ठो वै नोऽयमभूत्तमिमम्पाप्माविदद्धन्तेमम्भिषज्ज्यामेति ॥ १० ॥ तेऽश्श्विनावब्ब्रुवन् । युवं व्वै ब्ब्रह्माणौ भिषजौ स्त्थो युवमिमम्भिषज्ज्यतमिति तावब्ब्रूतामस्तु नौ भाग ऽइति तेऽब्ब्रुवन्न्य ऽएषोऽजᳪं स वाम्भाग ऽइति तथेति तस्मा-

दाश्विनो धूम्म्रो भवति ॥ ११ ॥ ते सरस्वतीमब्ब्रुवन् । त्वं वै भैषज्यमसि त्वमिमम्भिषज्ज्येति साब्रवीदुस्तु मे भाग ऽइति तेऽब्ब्रुवन्य ऽएषोऽविः स ते भाग ऽइति तथेति तस्मात्सारस्वतो मेषो भवति ॥ १२ ॥ अथाब्ब्रुवन् । एतावद्वा ऽअस्मिमन्नेतर्हि यावदयमृषभोऽस्यैवायमस्त्विति तथेति तस्मादैन्द्र ऽऋषभो भवति ॥ १३ ॥ तावश्विनौ च सरस्वती च । इन्द्रियं व्वीर्य्यन्नमुचेराहृत्य तदस्मिमन्पुन-रदधुस्तम्पाप्म्मनोऽत्रायन्त सुत्रातम्बतैनम्पाप्मनोऽत्रास्म-हीति तद्वाव सौत्रामण्यभवत्तत्सौत्रामण्यै सौत्रामणी-त्वन्त्रायते मृत्योरात्मानमप पाप्मानꣳ हते य ऽएवमेत-त्सौत्रामण्यै सौत्रामणीत्त्वं व्वेद त्रयस्त्रिꣳशद्दक्षिणा भवन्ति त्रयस्त्रिꣳशद्धि तन्देवता ऽअभिषज्ज्यँस्तस्मादाहुर्भैषजन्द-क्षिणा ऽइति ॥ १४ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ सुराक्रयादि ]

अप वा ऽएतस्मात् । तेज ऽइन्द्रियं व्वीर्य्यङ्क्रामति यꣳ सोमोऽतिपवत ऽऊर्ध्वं व्वाँवाश्वं व्वा ॥ १ ॥ तदाहुः । अन्नं व्वा ऽएतद्ब्राह्मणस्य यत्सोमो न वै सोमेन ब्ब्राह्मणः सोमवामी स यो वा ऽअलम्भूत्यै सन्भूतिन्न प्प्राप्नोति यो वालम्पशुब्भ्यः सन्न्पशून्न विन्दुते स सोमवामी पशवो हि सोम ऽइति ॥ २ ॥ स ऽएतमाश्विनन्धूम्म्रमालभेत ।

(१) 'ग' 'ज' पुस्तकयोः "चा" इति ।

सारस्वतम्मेषमैन्द्रमृषभमश्विनौ वै देवानाम्भिषजौ ताभ्यामेवैनम्भिषज्यति सरस्वती भेषजन्तयैवास्मै भेषजङ्करोतीन्द्र ऽइन्द्रियं व्वीर्य्यन्तेनैवास्मिन्निन्द्रियं व्वीर्य्यन्दधाति ॥ ३ ॥ चक्षुर्व्वा ऽअश्विनौ तेजः । यदाश्विनो भवति चक्षुरेवास्मिँस्तत्तेजो दधात्यथो श्श्रोत्रꣳ समानꣳ हि चक्षुश्च श्श्रोत्रञ्च ॥४॥ प्राणः सरस्वती व्वीर्य्यम् । यत्सारस्वतो भवति प्प्राणमेवास्मिँस्तद्वीर्य्यन्दधात्यथो ऽअपानꣳ समानꣳ हि प्प्राणश्चापानश्च ॥५॥ [अर्धप्रपाठकः ६०] व्वागिन्द्रो बलम् । यदैन्द्रो भवति व्वाचमेवास्मिँस्तद्बलन्दधात्यथो मनः समानꣳ हि व्वाक्च मनश्च ॥ ६ ॥ आश्विनीरजाः । सारस्वतीरवीरैन्द्रीर्ग्गाव ऽइत्याहुर्य्यदेते पशव ऽआलभ्यन्त ऽएताभिरेव देवताभिरेतान्पशूनवरुन्द्धे ॥ ७ ॥ व्वडवानुशिशुर्भवति । यश ऽएवैकशफमवरुन्द्ध ऽआरण्यानाम्पशूनाँल्लोमानि भवन्त्यारण्यानाम्पशूनामवरुद्ध्यै व्वृकलोमानि भवन्त्योज ऽएव जूतिमारण्यानाम्पशूनामवरुन्द्धे व्व्याघ्रलोमानि भवन्ति मन्न्युमेव राज्यमारण्यानाम्पशूनामवरुन्द्धे सिꣳहलोमानि भवन्ति सह ऽएवेशामारण्यानाम्पशूनामवरुन्द्धे ॥ ८ ॥ व्व्रीहयश्च श्श्यामाकाश्च भवन्ति । गोधूमाश्च कुवलानि (A) चोपवाकाश्च[१] बदराणि (B) च यवाश्च कर्क्कन्धूनि च[२] शष्पाणि * च तोक्मानि † चोभयमेव

(A) स्थूलानि बदरीफलानि ।

(१) उपवाका इन्द्रयवाः ।

(B) सूक्ष्मबदरीफलानि ।

(२) 'ग' 'ज' पुस्तकयोः 'च' इति नास्ति ।

* विरूढा व्रीहयः शष्पाणि । † विरूढा यवाः तोक्माः ।

ग्ग्राम्म्यश्चान्नमारण्ण्यश्चावरुन्द्धेऽथो ऽउभयेनैवान्नेन यथारू-
पमिन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ ९ ॥ सीसेन शष्प्पाणि
क्क्रीणाति । ऊर्ण्णाभिस्तोक्क्मानि सूत्रैर्व्व्रीहीनुभयोर्व्वा ऽए-
तद्रूपमयसश्च हिरण्ण्यस्य च यत्सीसमुभयꣳ सौत्रा-
मणीष्टिश्च पशुबन्धश्चोभयस्यावरुद्ध्यै ॥ १० ॥ ऊर्ण्णा-
सूत्रेण क्क्रीणाति । तद्वा ऽएतत्स्त्रीणाङ्कर्म्म यदूर्ण्णासूत्रङ्कर्म्म
व्वा ऽइन्द्रियं व्वीर्य्यन्तदेतदुत्सन्नꣳ स्त्रीषु तद्यदेवेन्द्रियं व्वी-
र्य्यमुत्सन्नꣳ स्त्रीषु तदेवावरुन्द्धे ॥ ११ ॥ तद्धैतद-
न्न्येऽद्ध्वर्य्यवः । सीसेन क्लीबाच्छष्प्पाणि क्क्रीणन्ति
तत्तदिति न वा ऽएष स्त्री न पुमान्न्यत्क्लीबो नेष्टिर्न्न
पशुबन्धः सौत्रामणीति व्वदन्तस्तदु तथा न कुर्य्यादु-
भयं व्वै सौत्रामणीष्टिश्च पशुबन्धश्च व्व्यृद्धमु वा ऽएत-
न्न्मनुष्ष्येषु यत्क्लीबो यज्ञमुख ऽएव ते यज्ञस्य व्व्यृद्धिन्द-
धति ये तथा कुर्व्वन्ति सोमविक्क्रयिण ऽएव क्क्रीणीया-
त्सोमो व्वै सौत्रामणी यज्ञमुख ऽएव तत्सोमरूपङ्करोति यज्ञस्य
समृद्ध्यै ॥ १२ ॥ शतातृण्णा कुम्भी भवति । बहुधेव हि
स व्व्यस्रवदथो शतोन्मानो व्वै यज्ञो यज्ञमेवावरुन्द्धे
सतम्भवति सदेवावरुन्द्धे चप्प्यम्भवत्यन्नाद्यस्यैवावरुद्ध्यै
पवित्रम्भवति पुनन्ति ह्येनं व्वालो भवति पाप्प्मनो व्व्यावृत्त्यै
सुवर्ण्णꣳ हिरण्ण्यम्भवति रूपस्यैवावरुद्ध्यै शतमानम्भवति
शतायुर्व्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते
॥ १३ ॥ आश्वत्थम्पात्रम्भवति । अपचितिमेवावरुन्द्ध
ऽऔदुम्बरम्भवत्यूर्ज्जमेवावरुन्द्धे नैयग्ग्रोधम्भवति स्वधामेवा-

वरुन्द्धे स्स्थाल्ल्यो भवन्ति पृथिव्व्या ऽएवान्नाद्यमवरुन्द्धे ॥ १४ ॥ पालाशान्न्युपशयानि भवन्ति । ब्ब्रह्म वै पलाशो ब्ब्रह्मणैव स्वर्ग्गँल्लोकञ्जयत्त्यपाष्ट्टिहस्य पत्त्रे भवतस्त्विषिमेव राज्ज्यं व्वयसामवरुन्द्धे षट्त्रिᳬशदेतानि भवन्ति षट्त्रिᳬशदक्षरा वै बृहती बार्हताः पशवो बृहत्त्यैवास्स्मै पशूनवरुन्द्धे ॥१५॥ तदाहुः । अन्न्यदेवत्त्याः पशवो भवन्त्यन्न्यदेवत्त्याः पुरोडाशा व्विलोमैतत्क्रियते कथमेतत्सलोम भवतीत्त्यैन्द्रः पशूनामुत्तमो भवत्त्यैन्द्रः पुरोडाशानाम्प्रथम ऽइन्द्रियं वै व्वीर्य्यमिन्द्र ऽइन्द्रियेणैवास्स्मा ऽइन्द्रियं व्वीर्य्यᳬ सन्दधातीन्द्रियेणेन्द्रियं व्वीर्य्यमवरुन्द्धे ॥ १६ ॥ सावित्त्रः पुरोडाशो भवति । सवितृप्प्रसूततायै व्वारुणो भवति व्वरुणो व्वा ऽएतङ्गृह्णाति यः पाप्प्मना गृहीतो भवति व्वरुणेनैवैनं व्वरुणय्यात्प्रमुञ्चत्त्यन्त्यो भवत्त्यन्तत ऽएवैनं व्वरुणपाशात्प्रमुञ्चति ॥ १७ ॥ एकादशकपाल ऽऐन्द्रो भवति । एकादशाक्षरा वै त्रिष्टुबिन्द्रियमु वै व्वीर्य्यन्त्रिष्टुबिन्द्रियस्यैव व्वीर्य्यस्यावरुद्ध्यै ॥ १८ ॥ द्वादशकपालः सावित्त्रो भवति । द्वादश वै मासाः सँवत्त्सरस्य सँवत्त्सरं व्वा ऽअन्नाद्यमन्न्वायत्तᳬ सँवत्त्सरादेवास्स्मा ऽअन्नाद्यमवरुन्द्धे ॥ १९ ॥ दशकपालो व्वारुणो भवति । दशाक्षरा वै व्विराडन्नं व्विराड्वरुणोऽन्नपतिर्व्वरुणेनैवास्स्मा ऽअन्नमवरुन्द्धे मद्ध्यत ऽएतैः पुरोडाशैः प्प्रचरति मद्ध्यं व्वा ऽएतेषां रुयोनिः स्वादेवैनान्न्योनेः प्प्रजनयति ॥ २० ॥ व्वडवानुशिशुर्द्दक्षिणा भवति । उभयं व्वा ऽएषा जनय-

त्यश्श्वश्चाश्श्वतरश्चोभयः सौत्रामणीष्टिश्च पशुबन्धश्चो-
भयस्यैवावरुद्ध्यै ॥ २१ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सौत्रामणीग्रहग्रहणादि ]

इन्द्रस्येन्द्रियमन्नस्य रसम् । सोमस्य भक्षः सुरया-
सुरो नमुचिरहरत्सोऽश्विनौ च सरस्वतीञ्चोपाधावच्छे-
पानोऽस्मि नमुचये न त्वा दिवा न नक्तः हनानि न
दण्डेन न धन्वना न पृथेन न मुष्टिना न शुष्केण नार्द्रेणाथ
म ऽइदमहार्षीदिदम्म ऽआजिहीर्षथेति ॥ १ ॥ तेऽब्रुवन् ।
अस्तु नोऽत्राप्प्यथाहरामेति सह न ऽएतदथाहरतेत्यब्र-
वीदिति ॥ २ ॥ तावश्विनौ च सरस्वती च । अपाम्फेनं
वज्रमसिञ्चन्न शुष्को नार्द्र ऽइति तेनेन्द्रो नमुचेरासुरस्य
व्युष्टायाᳬ रात्रावनुदित ऽआदित्ये न दिवा न नक्त-
मिति शिर ऽउदवासयत् ॥ ३ ॥ तस्मादेतदृषिणाभ्यनू-
क्तम् । 'अपाम्फेनेन नमुचेः शिर ऽइन्द्रोदवर्त्तयः ॥
विश्वा यदजय स्पृध' ऽइति पाप्मा वै नमुचिः पाप्मानं
वाव तद्द्विषन्तम्भ्रातृव्यः हत्वेन्द्रियं वीर्यमस्यावृङ्क्त
स यो भ्रातृव्यवान्त्स्यात्स सौत्रामण्या यजेत पाप्मान-
मेव तद्द्विषन्तम्भ्रातृव्यः हत्वेन्द्रियं वीर्यमस्य वृङ्क्ते
तस्य शीर्षश्छिन्ने लोहितमिश्रः सोमोऽतिष्ठत्तस्मादबी-
भत्सन्त त ऽएतदन्धसोर्विपानमपश्यन्त्सोमो राजामृतः

(१) शु० य० सं० १९. ७१। (२) शु० य० सं० १९. ७२।

सुत, ऽइति तेनैनꣳ स्वदयित्वात्मन्नदधत ॥४॥ '[1]स्वाद्वीन्त्वा स्वादुने'ति सुराꣳ सन्दधाति । स्वदयत्येवैना'न्तीव्रान्तीव्रेणे'[2]तीन्द्रियमेवास्मिमन्दधात्य'[3]मृताममृतेने' त्यायुरेवास्मिमन्दधाति '[4]मधुमतीम्मधुमते'ति रसमेवास्यान्दधाति '[5]सृजामि सꣳ सोमेने'ति सोमरूपमेवैनाङ्करोति ॥ ५ ॥ 'सोमोऽस्यश्विभ्याम्पच्यस्व । सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वे'[6]त्येता वा ऽएतन्देवता ऽअग्रे यज्ञꣳ समभरँस्ताभिरेवैनꣳ सम्भरत्यथो ऽएता ऽएवैतद्देवता भागधेयेन समर्द्धयत्यासुनोति सुत्यायै तिस्रो रात्रीर्वसति तिस्रो हि रात्रीः सोमः क्रीतो वसति सोमरूपमेवैनाङ्करोति ॥ ६ ॥ द्वे वेदी * भवतः । द्वौ वाव लोकावित्याहुर्देवलोकश्चैव पितृलोकश्चेत्युत्तरान्या भवति दक्षिणान्योत्तरो वै देवलोको दक्षिणः पितृलोक ऽउत्तरयैव देवलोकमवरुन्द्धे दक्षिणया पितृलोकम् ॥ ७ ॥ पयश्च सुरा च भवतः । सोमो वै पयोऽन्नꣳ सुरा पयसैव सोमपीथमवरुन्द्धे सुरयान्नाद्यं क्षत्रं वै पयो विट् सुरा सुराम्पूत्वा पयः पुनाति विश ऽएव तत्क्षत्रञ्जनयति विशो हि क्षत्रञ्जायते ॥ ८ ॥ 'वायोः पूतः पवित्रेण । प्रत्यङ्क्सोमो ऽअतिद्रुत, ऽइति सोमातिपूतस्य † पुनाति यथारूपमेवैनम्पुनाती'न्द्रस्य

(१) शु० य० सं० १९. १। (२) शु० य० सं० १९. १। (३) शु० य० सं० १९. १। (४) शु० य० सं० १९. १। (५) शु० य० सं० १९. १। (६) शु० य० सं० १९. १।

* का० श्रौ० सू० १९. २. १।

(७) शु० य० सं० १९. ३।

† मुखेतरच्छिद्रसोमवामिन इत्यर्थः। (८) शु० य० सं० १९, ३।

युज्यः सखे'ति यद्वेवास्य तेनेन्द्रियं वीर्य्यमतिक्रान्तम्भवति तदस्मिन्पुनर्दधाति ॥ ९ ॥ 'वायोः[1] पूतः पवित्रेण । प्राङ्क्सोमो ऽअतिद्रुत' ऽइति सोमवामिनः पुनाति यथारूपमेवैनम्पुनाती'न्द्रस्य[2] युज्यः सखे'ति यद्वेवास्य तेनेन्द्रियं वीर्य्यमतिक्रान्तम्भवति तदस्मिन्पुनर्दधाति ॥ १० ॥ 'पुनाति[3] ते परिस्रुत'मिति । समृद्धिकामस्य पुनाति समृद्ध्यै 'सोमः[4] सूर्य्यस्य दुहिते'ति श्रद्धा वै सूर्य्यस्य दुहिता श्रद्धयैष सोमो भवति श्रद्धयैवैनः सोमङ्करोति 'वारेण[5] शश्वता तने'ति वालेन ह्येषा पूयते ॥ ११ ॥ 'ब्रह्म[6] क्षत्रम्पवत' ऽइति पयः पुनाति । ब्रह्मण ऽएव तत्क्षत्रञ्जनयति ब्रह्मणो हि क्षत्रञ्जायते 'तेज[7] ऽइन्द्रिय'मिति तेज ऽएवास्मिन्निन्द्रियं वीर्य्यन्दधाति 'सुरया[8] सोम' ऽइति सुरया हि सोमः 'सुत[9] ऽआसुत' ऽइत्यासुताद्धि सूयते 'मदाये[10]'ति मदाय वाव सोमो मदाय सुरो भावेव सोममदुञ्च सुरामदञ्चावरुन्द्धे 'शुक्रेण[11] देव देवताः पिपृग्धी'ति शुक्रेण देव देवताः प्रीणीहीत्येवैतदाह 'रसेनान्नं[12] यजमानाय धेही'ति रसमेवान्नं यजमाने दधाति पूर्वे पयोग्रहा गृह्यन्तेऽपरे सुराग्रहा विशन्तत्क्षत्रस्यानुवर्त्मानङ्करोति ॥ १२ ॥ 'कुविदङ्ग[13] यवमन्तो यवञ्चि'दिति । पयोग्रहान्गृह्णाति * सोमांशवो वै यवाः सोमः पयः

(१) शु० य० सं० १९. ३। (२) शु० य० सं० १९. ३। (३) शु० य० सं० १९. ४। (४) शु० य० सं० १९. ४। (५) शु० य० सं० १९. ४। (६–१२) शु० य० सं० १९. ५। (१३) शु० य० सं० १९. ६।

* का० श्रौ० सू० १९. २. १४।

सोमेनैवैनꣳ सोमङ्करोत्येकया गृह्णात्येकधैव यजमाने श्रियन्दधाति श्रीर्हि पयः ॥ १३ ॥ 'नाना[1] हि वान्देवहितꣳ सदस्कृत'मिति । सुराग्रहान्गृह्णाति नाना हि सोमश्च सुरा च देवहितमिति देवहिते ह्येते नाना सदस्कृतमिति द्वे हि वेदी भवतो 'मा[2] सꣳसृक्षाथाम्परमे व्व्योम'न्निति पाप्मनैवैनं व्व्यावर्त्तयति 'सुरा[3] त्वमसि शुष्मिणी'ति सुरामेव सुराङ्करोति 'सोम[4] ऽएष'ऽइति सोममेव सोमङ्करोति 'मा[5] मा हिꣳसीः स्वां य्योनिमाविशन्ती'ति यथायोन्येवैनां व्व्यावर्त्तयत्यात्मनोऽहिꣳसाया ऽएकया गृह्णात्येकधैव यजमाने यशो दधाति यशो हि सुरा ॥ १४ ॥ क्षत्रं व्वै पयोग्रहाः विट् सुराग्रहा यदव्व्यतिषक्तान्गृह्णीयाद्विशं क्षत्राद्व्यवच्छिन्द्यात्क्षत्रं विशः पापवस्यसङ्कुर्य्याद्यज्ञस्य व्व्यृद्धिं व्व्यतिषक्तान्गृह्णाति विशमेव क्षत्रेण सन्दधाति क्षत्रं विशा पापवस्यसस्य व्व्यावृत्त्यै यज्ञस्य समृद्ध्यै ॥ १५ ॥ प्राणा वै पयोग्रहाः । शरीरꣳ सुराग्रहा यदव्व्यतिषक्तान्गृह्णीयाच्छरीरम्प्राणेभ्यो व्व्यवच्छिन्द्यात्प्राणाञ्छरीरात्प्रमायुको यजमानः स्याद्व्यतिषक्तान्गृह्णाति शरीरमेव प्प्राणैः सन्दधाति प्प्राणाञ्छरीरेणाथो ऽआयुरेवास्मिन्दधाति तस्मात्सौत्रामण्येजानः सर्व्वमायुरेत्यथो य ऽएवमेतद्वेद ॥ १६ ॥ सोमो वै पयोग्रहाः । अन्नꣳ सुराग्रहा यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते सोमपीथञ्चैवान्नाद्यञ्चावरुन्द्धे

(१) शु० य० सं० १९. ७। (२) शु० य० सं० १९. ७। (३) शु० य० सं० १९. ७। (४) शु० य० सं० १९. ७। (५) शु० य० सं० १९. ७।

॥ १७ ॥ पशवो वै पयोग्ग्रहाः । अन्नꣳ सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्णन्ते पशूँश्चैवान्नाद्यञ्चावरुन्द्धे ॥ १८ ॥ ग्राम्म्या वै पशवः पयोग्ग्रहाः । आरण्याः सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्णन्ते ग्ग्राम्म्याँश्चैव पशूनारण्याँश्चावरुन्द्धे ग्ग्राम्म्येण चान्नेनारण्येन च पयोग्ग्रहाञ्छ्रीणाति तस्म्माद्ग्ग्राम्म्याणाम्पशूनाङ्ग्राम्म्यञ्चैवान्नाद्यमारण्यञ्चावरुद्धम् ॥ १९ ॥ तदाहुः । एतस्यै वा ऽएतदघलायै देवतायै रूपं यदेते घोरा ऽआरण्याः पशवो यदेतेषाम्पशूनाँल्लोमभिः पयोग्ग्रहाञ्छ्रीणीयाद्रुद्रस्यास्ये पशूनपिदद्ध्यादपशुर्यजमानः स्याद्यन्न श्रीणीयादुनवरुद्धा ऽअस्य पशवः स्यू रुद्रो हि पशूनामीष्ट ऽइति सुराग्ग्रहानेवैतेषाम्पशूनाँल्लोमभिः श्रीणाति सुरायामेव तद्रौद्रन्दधाति तस्म्मात्सुराम्पीत्वा रौद्रमना ऽअथो ऽआरण्येष्ष्वेव पशुषु रुद्रस्य हेतिन्दधाति ग्ग्राम्म्याणाम्पशूनामहिꣳसाया ऽअवरुद्धा ऽअस्य पशवो भवन्ति न रुद्रस्यास्ये पशूनपिदधाति ॥ २० ॥ '[1]या व्याघ्रं विषूचिका । उभौ वृकञ्च रक्षति ॥ श्येनम्पतत्रिणꣳ सिꣳहꣳ सेमम्पात्वꣳहसः' ॥ '[2]यदापिपेष मातरम्पुत्रः प्प्रमुदितो धयन् ॥ एतत्तदग्ग्ने ऽअनृणो भवाम्म्यहतौ पितरौ मये'ति ॥ २१ ॥ अद्ध्वर्युश्च प्प्रतिप्प्रस्थाता च । जघनेन वेदिम्प्राञ्चमावृत्तं यजमानꣳ श्येनपत्राभ्यामूर्द्धञ्चावाञ्चञ्च पावयतः प्प्राणोदानयोस्तद्रूपम्प्राणोदाना-

(१) शु० य० सं० १९. १०। (२) शु० य० सं० १९. ११।

वेवावरुन्द्ध ऽऊर्द्धश्च ह्ययमवाङ् च प्प्राण ऽआत्मानमनु-सञ्चरति 'सम्पृच स्स्थ सम्मा भद्रेण पृङ्क्ते'ति पयोग्ग्रहा-न्त्सम्मृशति श्रियैवैनं य्यशसा समर्द्धयति 'विपृच स्स्थ वि मा पाप्प्मना पृङ्क्ते'ति सुराग्ग्रहान्पाप्प्मनैवैनं व्व्यावर्त्त-यति ॥ २२ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥



[ ग्रहभक्षणसुरापावनादि ]

इन्द्रस्य वै यत्र । इन्द्रियाणि व्वीर्य्याणि व्व्युदक्रा-मँस्तानि देवा ऽएतेनैव यज्ञेन पुनः समदधुर्य्यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्णन्त ऽइन्द्रियाण्येवास्मिमँस्तद्वीर्य्याणि पुनः सन्दधत्युत्तरेऽग्नौ पयोग्ग्रहाञ्जुहति शुक्रेणैवैनन्तत्सो-मपीथेन समर्द्धयन्ति ॥ १ ॥ स जुहोति 'सुरावन्तम्बर्हिषदꣳ सुवीर'मिति सुरावान्न्वा ऽएष बर्हिषद्यज्ञो यत्सौत्रामणी बर्हिषैवैनं य्यज्ञेन समर्द्धयति 'यज्ञꣳ हिन्न्वन्ति महिषा नमोभि'रित्यृत्त्विजो वै महिषा यज्ञो नम ऽऋत्त्विग्भिरेव यज्ञꣳ समर्द्धयति यज्ञेन यजमान'न्दधानाः सोम'मिति सोम-पीथमेवास्मिन्दधति 'दिवि देवतास्वि'ति दिव्व्येवैनन्दे-वतासु दधति 'मदेमेन्द्र'मिति मदाय वाव सोमो मदाय सुरोभावेव सोममदश्च सुरामदश्चावरुन्द्धे 'यजमानाः

( ३ ) शु० य० सं० १९. ११ । ( ४ ) शु० य० सं० १९. ११ । ( ५ ) शु० य० सं० १९ ३२ । ( ६ ) शु० य० सं० १९. ३२ । ( ७ ) शु० य० सं० १९. ३२ । ( ८ ) शु० य० स० १९. ३२ । ( ९ ) शु० य० सं० १९. ३२ । (१०) शु० य० सं० १९. ३२ ।

स्वर्क्ता' ऽइत्यर्क्को * वै देवानामन्नमन्नं यज्ञो यज्ञेनैवैनमन्नाद्येन समर्द्धयति हुत्वा भक्षयन्ति समृद्धमेवास्य तद्वर्द्धयन्ति ॥ २ ॥ स भक्षयति । '[1]यमश्विना नमुचेरासुरादधी'त्यश्विनौ ह्येतन्नमुचेरध्याहरताथं '[2]सरस्वत्यसुनोदिन्द्रियाये'ति सरस्वती ह्येतमसुनोदिन्द्रियाये'[3]मन्तछं शुक्रम्मधुमन्तमिन्दु'मिति शुक्रो वा ऽएष मधुमानिन्दुर्यत्सोमछं '[4]सोमछं राजानमिह भक्षयामी'ति सोम ऽएवास्य राजा भक्षितो भवति दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति पाप्मनैवैनन्तद्व्यावर्त्तयन्ति ॥ ३ ॥ स जुहोति । '[5]यस्ते रसः सम्भृत ऽओषधीष्वि'त्यपाञ्च वा ऽएष ऽओषधीनाञ्च रसो यत्सुरापाञ्चैवैनमेतदोषधीनाञ्च[6] रसेन समर्द्धयति '[7]सोमस्य शुष्मछं सुरया सुतस्ये'ति य ऽएव सोमे शुष्मो यछं सुरायान्तमेवावरुन्द्धे '[8]तेन जिन्व यजमानम्मदेने'ति तेन प्रीणीहि यजमानम्मदेनेत्येवैतदाह '[9]सरस्वतीमश्विनाविन्द्रमग्नि'मिति देवताभिरेव यज्ञछं समर्द्धयति देवताभिर्यज्ञेन यजमानछं हुत्वा भक्षयन्ति व्यृद्धमेवास्य तत्समर्द्धयन्ति ॥४॥ स भक्षयति । '[10]यदत्र रिप्तछं रसिनछं सुतस्ये'ति सुतासुतयोरेव रसमवरुन्द्धे '[11]यदिन्द्रो ऽअपिबच्छचीभि'रितीन्द्रो ह्येतदपिबच्छचीभिर'[12]हन्तदस्य मनसा शिवेने'त्यशिव ऽइव वा

* 'अर्कमन्नं भवत्यर्चति भूतानि' ( निरु० नै० का० ५. ४ )।

(१) शु० य० सं १९. ३४। (२) शु० य० सं० १९. ३४। (३) शु० य० सं० १९. ३४। (४) शु० य० सं० १९. ३४। (५) शु० य० सं० १९. ३३।

( ६ ) 'सुरापाञ्चैन०' इति 'ग' 'ज' पुस्तकयोः पाठः।

( ७ ) शु० य० सं० १९. ३३।

( ८ ) शु० य० सं० १९. ३३। ( ९ ) शु० य० सं० १९. ३३। ( १० ) शु० य० सं० १९. ३५। ( ११ ) शु० य० सं० १९. ३५। ( १२ ) शु० य० सं० १९. ३५।

ऽएष भक्षो यत्सुरा ब्ब्राह्मणस्य शिवमेवैनमेतत्कृत्वात्मन्धत्ते 'सोमँ राजानमिह भक्षयामी'ति सोम ऽएवास्य राजा भक्षितो भवति ॥ ५ ॥ तद्धैतदुन्न्येऽद्ध्वर्य्यवः । राजन्न्यं व्वा व्वैश्यं व्वा परिक्क्रीणन्ति स ऽएतद्भक्षयिष्यतीति तदु तथा न कुर्य्याद्यो ह व्वा ऽएतद्भक्षयति तस्य हैव म्पितृन्न्पितामहानेष सोमपीथोऽन्न्वेति दक्षिणस्यैवाग्नेस्त्री-नङ्गारान्निर्व्वर्त्त्य बहिष्प्परिधि तदेताभिव्व्याहृतिभिर्ज्जुहुयात् ॥ ६ ॥ 'पितृब्भ्यः स्वधायिब्भ्यः स्वधा नम' ऽइति । पितृनेव पितृलोके स्वधायान्दधाति 'पितामहेब्भ्यः स्वधा-यिब्भ्यः स्वधा नम' ऽइति पितामहानेव पितामहलोके स्वधायान्दधाति 'प्प्रपितामहेब्भ्यः स्वधायिब्भ्यः स्वधा नम' ऽइति प्प्रपितामहानेव प्प्रपितामहलोके स्वधायान्द-धाति ॥ ७ ॥ अप ऽआनीय निनयति । 'अक्षन्न्पितर' ऽइत्यन्नाद्यमेवैषु दधात्य'मीमदन्त पितर' ऽइति मद-यत्त्येवैनान'तीतृपन्त पितर' ऽइति तर्प्पयत्त्येवैना'न्न्पितरः शुन्धद्ध्व'मित्यनुपूर्व्वमेवैनान्त्सर्व्वान्न्पावयति पवित्रं व्वै सौत्रा-मणी ॥ ८ ॥ त्रिभिः पवित्रैः पावयन्ति । त्रयो व्वा ऽइमे लोका ऽएभिरेवैनँल्लोकैः पुनन्ति ॥ ९ ॥ पावमानीभिः पावयन्ति । पवित्रं व्वै पावमान्न्यः पवित्रेणैवैनम्पुनन्ति ॥ १० ॥ तिसृभिस्तिसृभिः पावयन्ति । त्रयो व्वै प्प्राणाः

(१) शु० य० सं० १९. ३५। (२) शु० य० सं० १९. ३६। (३) शु० य० सं० १९. ३६। (४) शु० य० सं० १९. ३६। (५) शु० य० सं० १९. ३६। (६) शु० य० सं० १९. ३६। (७) शु० य० सं० १९. ३६। (८) शु० य० सं० १९. ३६।

प्प्राण ऽउदानो व्व्यानस्तैरेवैनम्पुनन्ति ॥ ११ ॥ नवभिः पावयन्ति । नव वै प्प्राणा प्प्राणैरेवैनम्पुनन्ति प्प्राणेषु पुनः पूतम्प्रतिष्ठापयन्ति ॥ १२ ॥ पवित्रेण पावयन्ति । अजाविकस्य वा ऽएतद्रूपं य्यत्पवित्रमजाविकेनैवैनम्पुनन्ति ॥ १३ ॥ व्वालेन पावयन्ति । गोऽश्श्वस्य वा ऽएतद्रूपं य्यद्वालो गोऽश्श्वेनैवैनम्पुनन्ति ॥ १४ ॥ हिरण्येन पावयन्ति । देवानां व्वा ऽएतद्रूपं य्यद्धिरण्यन्देवाना-मेवैनꣳ रूपेण पुनन्ति ॥ १५ ॥ सुरया पावयन्ति । सुरा हि पूता पूतयैवैनम्पुनन्ति तद्यथा सुरा पूयमाना बल्कसेन विविच्च्यत ऽएवमेवैतद्यजमानः सर्व्वस्म्मात्पाप्प्मनो निर्म्मुच्च्यते य ऽएवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं व्वेद ॥ १६ ॥ तदाहुः । याजयितव्व्यꣳ सौत्रामण्या३ न याजयितव्व्या३मित्त्यनन्तरायꣳ[1] ह्येवास्यꣳ सर्व्वम्पाप्प्मान-मपघ्नन्तीति तदु ह स्म्माह रेवोत्तरा स्त्थपतिः पाटवश्च्चा-क्क्रोऽपि प्प्रदानम्प्रदाय याजयितव्व्यमेवात्मा वै यज्ञस्य यज-मानोऽङ्गान्न्यृत्त्विजो यत्र वा ऽआत्मा पूतः पूतानि तत्रा-ङ्गान्न्युभय ऽएव पुनत ऽउभये पाप्प्मानमपघ्नते तस्म्मा-दपि प्प्रदानम्प्रदाय याजयितव्व्यमेवेति ॥ १७ ॥ पितृलोकं व्वा ऽएतेऽन्ववयन्ति । ये दक्षिणेऽग्नौ चरन्त्याज्याहुति-ञ्जुहोति यज्ञो वा ऽआज्यं य्यज्ञादेव यज्ञे प्प्रतितिष्ठन्ति ॥ १८ ॥ स जुहोति । 'ये[2] समानाः समनसः पितरो यम-राज्ये ॥ तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्प्पता'मिति

( १ ) "ह्येवास्मात्" इति 'ग' 'ज' पुस्तकयोः । ( २ ) शु० य० सं० १९. ४५ ।

पितॄनेव यमे परिददात्यथो पितृलोकमेव जयति सर्व्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायन्त्ययं व्वै लोक ऽउत्तरोऽग्निरस्मिन्नेव लोके प्प्रतितिष्ठन्त्याज्याहुतिञ्जुहोति यज्ञो वा ऽआज्यं यज्ञादेव यज्ञे प्प्रतितिष्ठन्ति ॥ १९ ॥ स जुहोति । 'ये[1] समानाः समनसो जीवा जीवेषु मामकाः ॥ तेषाᳫं श्रीर्म्मयि कल्पतामस्मिँल्लोके शतᳫं समा' ऽइति स्वानामेव श्श्रियमवरुन्द्धेऽथो ज्योग्ग्जीवातुमेवैषु दधाति पयः समन्न्वारब्धेषु जुहोति प्प्राणो वा ऽअन्नम्पयः प्प्राण ऽएवान्नाद्येऽन्ततः प्प्रतितिष्ठन्ति ॥२०॥ स जुहोति । 'द्वे[2] सृती ऽअशृणवम्पितॄणामह'मिति द्वे वाव सृती ऽइत्याहुर्द्देवानाञ्चैव पितॄणाञ्चेति 'ताभ्या[3]मिदं व्विश्वमेजत्समेती'ति ताभ्याᳫं हीदᳫं सर्व्वमेजत्समेति 'यद[4]न्तरा पितरम्मातरञ्चे'त्यसौ व्वै पितेयम्माताभ्यामेव पितॄन्देवलोकमपिनयत्येकाकी हुतोच्छिष्टम्भक्षयत्येकधैव श्श्रियमात्मन्धत्ते श्श्रीर्हि पयः ॥ २१ ॥ स भक्षयति । 'इदᳫं[5] हविः प्प्रजननम्मे ऽअस्त्वि'ति प्प्रजननᳫं हि यदि पयो यदि सोमो 'दशवीर'[6]मिति प्प्राणा व्वै दश व्वीराः प्प्राणानेवात्मन्धत्ते 'सर्व्वगण'[7]मित्यङ्गानि व्वै सर्व्वे गणा ऽअङ्गान्न्येवात्मन्धत्ते 'स्वस्तय[8] ऽआत्मसनी'[9]त्यात्मानमेव सनोति

(१) शु० य० सं० १९. ४६ । (२) शु० य० सं० १९. ४७ । (३) शु० य० सं० १९. ४७ । (४) शु० य० सं० १९. ४७ । (५) शु० य० सं० १९. ४८ । (६) शु० य० सं० १९. ४८ । (७) शु० य० सं० १९. ४८ । (८) शु० य० सं० १९. ४८ । (९) शु० य० सं० १९. ४८ ।

'प्प्रजासनी'ति प्प्रजामेव सनोति 'पशुसनी'ति पशूनेव सनोति 'लोकसनी'ति लोकाय वै यजते तमेव जयत्त्य'भयसनी'ति स्वर्ग्गो वै लोकोऽभयछं स्वर्ग्ग ऽएव लोकेऽन्ततः प्प्रतितिष्ठत्त्य'ग्निः प्प्रजाम्बहुलाम्मे करोत्त्वन्नम्पयो रेतो ऽअस्मासु धत्ते'ति तद्य ऽएवैनमेते याजयन्ति तानेतदाहैतन्मयि सर्व्वन्धत्तेति हिरण्येन मार्ज्जयन्तेऽमृतं वै हिरण्यममृत ऽएवान्ततः प्प्रतितिष्ठन्ति ॥ २२ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या १२० ॥



[ सुरानिर्माणादि ]

प्रजापतिर्य्यज्ञमसृजत । तमाहरत्तेनायजत तेनेष्ट्वा रिरिचान ऽइवामन्न्यत स ऽएतं य्यज्ञक्क्रतुमपश्श्यत्सौत्रामणीन्तेनायजत ततो वै स पुनराप्प्यायत रिच्च्यत ऽइव वा ऽएष यः सोमेन यजते व्वीव ह्यस्य व्वित्तं व्वेदो हरन्ति ॥ १ ॥ सोमेनेष्ट्वा सौत्रामण्या यजेत । यथा धेनुर्दुग्ग्धा पुनराप्प्यायेतैवछं हैव पुनराप्प्यायत ऽआ प्प्रजया पशुभिः प्प्यायते प्प्रत्त्यस्मिँल्लोके तिष्ठत्त्यभि स्वर्ग्गँल्लोकञ्जयति य ऽएवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं व्वेद ॥ २ ॥ तद्धैतत्पप्प्रच्छ । सुप्प्ला सार्ञ्जयः प्प्रतीदर्शमैभावतं य्यन्न

(१) शु० य० सं० १९. ४८। (२) शु० य० सं० १९. ४८। (३) शु० य० सं० १९. ४८। (४) शु० य० सं० १९. ४८। (५) शु० य० सं० १९. ४८।

दीक्षयेव दीक्षते न सोमाꣳशव ऽइव न्युप्यन्तेऽथ कथꣳ सौत्रामणी सोमयज्ञो भवतीति ॥ ३ ॥ स होवाच । शिरो वा ऽएतद्यज्ञस्य यद्व्रतमात्मा दीक्षैतत्खलु वै व्रतस्य रूपं यत्सत्यमेतद्दीक्षायै यच्छ्रद्धा मनो यजमानस्य रूपं वाग्यज्ञस्येति ॥ ४ ॥ स यद्वाचा व्रतमुपैति । आत्मन्न्येवैतद्यज्ञस्य शिरः प्रतिदधाति सत्यꣳ श्रद्धायान्दधाति यजमानं यज्ञे ॥ ५ ॥ तस्मादेतस्य यज्ञस्य । व्रतमेव दीक्षा वृषो वै व्रतं योषा दीक्षा वृषा सत्यं योषा श्रद्धा वृषा मनो योषा वाग्वृषा पत्न्यै यजमानस्तस्माद्यत्रैव पतिस्तत्र जायाथो यज्ञमुख ऽएव तन्मिथुनानि करोति प्रजात्यै ॥ ६ ॥ एते खलु वा ऽएतस्य यज्ञस्य । सोमाꣳशव ऽइत्याहुर्यच्छष्पाणि तोक्मानि लाजा ऽइति ॥ ७ ॥ प्रातःसवनस्यैतद्रूपम् । यच्छष्पाण्ययं वै लोकः प्रातःसवनꣳ स ऽआश्विन ऽआश्विनेन पयसा प्रथमाꣳ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण प्रातःसवनेन समर्द्धयति ॥ ८ ॥ माध्यन्दिनस्यैतत्सवनस्य रूपम् । यत्तोक्मान्यन्तरिक्षं वै माध्यन्दिनꣳ सवनन्तत्सारस्वतꣳ सारस्वतेन पयसा द्वितीयाꣳ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण माध्यन्दिनेन सवनेन समर्द्धयति ॥ ९ ॥ तृतीयसवनस्यैतद्रूपम् । यल्लाजा द्यौर्वै तृतीयसवनꣳ सैन्द्रयैन्द्रेण पयसा तृतीयाꣳ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण तृतीयसवनेन समर्द्धयति ॥ १० ॥

एकस्यै दुग्धेन । प्रथमाꣳ रात्रिम्परिषिञ्चति द्वयोर्द्दुग्धेन द्वितीयान्तिसृणान्दुग्धेन तृतीयां यथारूपमेवैनं यथा-देवतꣳ सवनैः समर्द्धयति ॥ ११ ॥ 'परीतो षिञ्चता सुत'[1]-मिति परिषिञ्चति सुत्यायै 'सोमो य ऽउत्तमꣳ हवि'[2]-रित्युत्तमं व्वा ऽएतद्धविर्य्यत्सोम ऽउत्तममेवैनꣳ हविष्क-रोति 'दधन्न्वा यो नर्य्यो ऽअप्स्वन्तरे'[3]त्यद्भिश्च ह्येषोऽ-न्तरेण च सूयते 'सुषाव सोममद्रिभि'[4]रित्यद्रिभिर्वै सोमः सूयतेऽद्रिभिरेवैनꣳ सुनोति सोमसुत्यायै ॥ १२ ॥ तदाहुः । उभयोर्व्वा ऽएतद्रूपꣳ सुतस्य चासुतस्य च यत्सौत्रामण्य-पामेष ऽओषधीनाꣳ रसो यत्पयस्तत्सुतस्य रूपमन्नस्यै-ष रसो यत्परिस्रुत्तदासुतस्य रूपमुभाभ्यामेवैनꣳ सवा-भ्याꣳ सुनोत्युभाभ्याꣳ सवाभ्यामवरुन्द्धे ॥ १३ ॥ तदाहुः । यद्ग्रावभिः सोमः सूयतेऽथ कथꣳ सौत्राम-णीति प्रैषाप्रीभिरिति ब्रूयाद्बार्हता वै प्रैषा बार्हता ग्रावाणो ग्रावभिर्वै सोमः सूयते ग्रावभिरेवैनꣳ सुनोति सोमसुत्यायै ॥ १४ ॥ सर्व्वे पयस्वन्तो भवन्ति । पयसा हि सूयते सर्व्वे सोमवन्तो भवन्ति सोमरूपतायै सर्व्वे परिस्रुन्मन्तो भवन्ति परिस्रुता हि सूयते सर्व्वे घृतवन्तो भवन्त्येतद्वै प्रत्यक्षाद्यज्ञरूपं यद्घृतम्प्रत्यक्षादेवैनं यज्ञरू-पङ्करोति सर्व्वे मधुमन्तो भवन्त्येतद्वै प्रत्यक्षात्सोमरूपं यन्मधु प्रत्यक्षादेवैनꣳ सोमरूपङ्करोति ॥ १५ ॥ *

(१) शु० य० सं० १९. २। (२) शु० य० सं० १९. २। (३) शु० य० सं० १९. २। (४) शु० य० सं० १९. २।

* शतम् ६३००।

सर्व्वे ऽआश्विना भवन्ति । भैषज्याय सर्व्वे सारस्वता ऽअन्नाद्यस्येवावरुद्ध्यै सर्व्व ऽऐन्द्रा इन्द्रियस्येव व्वीर्य्यस्या-वरुद्ध्यै ॥ १६ ॥ यद्वेव सर्व्वे ऽआश्विना भवन्ति । सर्व्वे सारस्वताः सर्व्व ऽऐन्द्रा ऽएता वा ऽएतन्देवता ऽअग्ग्रे यज्ञꣳ समभरँस्ताभिरेवैनꣳ सम्भरत्यथो ऽएता एवैतद्देवता भागधेयेन समर्द्धयति ॥ १७ ॥ सन्तता याज्यापुरोऽनु-वाक्क्या भवन्ति । समानदेवत्याः प्प्रजानाꣳ सन्तत्या ऽअव्व्यवच्छेदाय सर्व्वा ऽआश्विन्न्यो भवन्ति सर्व्वाः सार-स्वत्यः सर्व्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १८ ॥ अनुष्टुभ ऽआप्प्रियो भवन्ति । व्वाग्ग्वा ऽअनुष्टुब्व्वाचो वै सोमः सूयते व्वाचैवैनꣳ सुनोति सोमसुत्यायै सर्व्वा ऽआश्विन्न्यो भवन्ति सर्व्वाः सारस्वत्यः सर्व्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १९ ॥ जागता ऽअनुप्प्रैषा भवन्ति । इयं वै जगत्यनया वै सोमः सूयतेऽनयैवैनꣳ सुनोति सोमसुत्यायै सर्व्वे ऽआश्विना भवन्ति सर्व्वे सारस्वताः सर्व्व ऽऐन्द्राः समानी बन्धुता ॥ २० ॥ स वा ऽएष प्प्रत्यक्षात्सोमयज्ञ ऽएव यत्सौत्रामणी तं यद्येकाकी यजमानो भक्षयेदिष्टिरेवैव स्यात्पशुबन्धो वा सर्व्व ऽऋत्त्विजो भक्षयन्ति सर्व्वे वा ऽऋत्त्विजः सोमम्भक्षयन्ति सोमरूपतायै ॥ २१ ॥ आश्विव-नमद्ध्वर्य्यवो भक्षयन्ति । अश्विनौ वै देवानामद्ध्वर्य्यू स्वमेवैतद्भागधेयꣳ स्व ऽआयतने भक्षयन्ति ॥ २२ ॥ सारस्वतꣳ होता ब्ब्रह्मा मैत्रावरुणः । वाग्ग्वै यज्ञस्य होता हृदयम्ब्रह्मा मनो मैत्रावरुणः स्वमेवैतद्भागधेयꣳ स्व

ऽआयतने भक्षयन्ति ॥ २३ ॥ ऐन्द्रं य्यजमानो भक्षयति । ऐन्द्रो वा ऽएष यज्ञो यत्सौत्रामणीन्द्रायतन ऽएष ऽएतर्हि यो यजते स्वमेवैतद्भागधेयꣳ स्व ऽआयतने भक्षयति ॥२४॥ चक्षुर्व्वा ऽआश्विनो ग्ग्रहः। प्प्राणः सारस्वतो व्वागैन्द्र ऽआश्विनात्सारस्वतेऽवनयति चक्षुरेवास्य तत्प्राणैः सन्दधाति सारस्वतादैन्द्रे प्प्राणानेवास्य तद्वाचा सन्दधात्यथो प्प्राणानेवास्य तद्वाचि प्प्रतिष्ठापयति तस्मात्सर्व्वे प्प्राणा व्वाचि प्प्रतिष्ठिताः ॥२५॥ त्रय आश्विनम्भक्षयन्ति । अद्ध्वर्य्युः प्प्रतिप्प्रस्थाताग्ग्नीद्ध्रस्त्रिवृद्वा ऽइदञ्चक्षुः शुक्क्लं कृष्णङ्कनीनका यथारूपमेवास्मिँश्चक्षुर्द्दधति[1] ॥२६॥ त्रयः सारस्वतम् । होता ब्ब्रह्मा मैत्रावरुणस्त्रेधाविहितो वा ऽअयम्प्राणः प्प्राण ऽउदानो व्व्यान ऽइति यथारूपमेवास्मिन्प्राणन्दधति ॥ २७ ॥ एकाक्क्यैन्द्रं य्यजमानो भक्षयति । एकधा वा ऽएषा प्प्राणानाꣳ श्रीर्य्यद्वागेकधैव व्वाचꣳ श्रियमात्मन्धत्ते तस्मात्सौत्रामण्ण्येजान ऽएकधा स्वानाꣳ श्रेष्ठो भवत्त्यथो य ऽएवमेतद्वेद ॥ २८ ॥ ऋतवो वा ऽऋत्विजः मासा भक्षाः षड्डृत्विजो भक्षयन्ति षड्वा ऽऋतव ऽऋत्विग्भिरेवऽर्त्तूनवरुन्द्धे ॥ २९ ॥ द्वादश भक्षा भवन्ति । द्वादश वै[2] मासा भक्षैरेव मासानवरुन्द्धे पुनः पुनरभिनिवर्त्तमृत्विजो भक्षयन्ति तस्मादृतवश्च मासाश्चान्योऽन्न्यमभिनिवर्त्तन्ते ॥ ३० ॥ त्रयोदशं य्यजमानो भक्षयति । यो ह वा ऽएष त्रयोदशो मास ऽएष ऽएव प्प्रत्य-

(१) 'ग' 'ज' पुस्तकयोः 'धा' इति । (२) 'ग' 'ज' पुस्तकयोः "वै" इति नास्ति ।

क्षात्सँवत्सर ऽएतमेवाप्त्वावरुन्द्धे स वा ऽएष सँवत्सर
ऽएव यत्सौत्रामणी तेन सर्वञ्जयति सर्वमवरुन्द्धे ॥ ३१ ॥
त्रयः पशवो भवन्ति । त्रयो वा ऽइमे लोका ऽइमानेव
तैल्लोंकानवरुन्द्ध ऽइममेव लोकमाश्विनेनान्तरिक्षꣳ सार-
स्वतेन दिवमैन्द्रेण यथारूपमेव यथादेवतमिमाँल्लोकाञ्जयति
चाव च रुन्द्धे ॥ ३२ ॥ त्रयः पुरोडाशा भवन्ति । त्रयो
वा ऽऋतव ऽऋतूनेवं[1] तैरवरुन्द्धे ग्रीष्ममेवैन्द्रेण वर्षाः
सावित्रेण हेमन्तं वारुणेन यथारूपमेव यथादेवतमृतूञ्जयति
चाव च रुन्द्धे ॥ ३३ ॥ षड्ग्रहा भवन्ति । षड्वा ऽऋतव
ऽऋतूनेवं[2] तैरवरुन्द्धे वसन्तग्रीष्मावेवाश्विनाभ्यां वर्षा-
शरदौ सारस्वताभ्याꣳ हेमन्तशिशिरावैन्द्राभ्यां यथारूप-
मेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३४ ॥ सन्तता
याज्यापुरोऽनुवाक्क्या भवन्ति । समानदेवत्त्या ऽऋतूनाꣳ
सन्तत्त्या ऽअव्व्यवच्छेदाय सर्वाः पुरोऽनुवाक्क्या भवन्ति
सर्वा याज्यास्तस्मादृतवः सर्वे पराञ्चः सर्वे प्रत्यञ्चः
सर्वाः प्रथमा भवन्ति सर्वा मद्ध्यमाः सर्वा ऽउत्तमास्त-
स्मादृतवः सर्वे प्रथमाः सर्वे मद्ध्यमाः सर्व ऽउत्तमाः
सर्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्क्ये भवतोऽहोरात्र-
योस्तद्रूपमहोरात्रे ऽएवावरुन्द्धे तस्मादृतवश्च मासा-
श्चाहोरात्रयोरेव प्रतिष्ठिताः ॥ ३५ ॥ स वा ऽएष
सँवत्सर ऽएव यत्सौत्रामणी । चन्द्रमा ऽएव प्रत्यक्षादा-
दित्यो यजमानस्तस्येयमेव पृथिवी वेदिरन्तरिक्षमुत्तरवेदि-

(१-२) "ऋतूनेवैतै०" इति 'ग' 'ज' पुस्तकयोः ।

द्यौर्ब्बर्हिर्द्दिश ऽऋत्त्विजो व्वनस्प्पतय ऽइद्द्ध्म ऽआप ऽआज्यमोषधय ऽआहुतयोग्ग्निरेवाग्ग्निः सँव्वत्त्सरः सꣳस्था तद्वा ऽइदꣳ सर्व्वꣳ सँव्वत्त्सर ऽएव यदिदङ्किञ्च तस्म्मात्त्सौत्रामण्ण्येजानः सर्व्वञ्जयति सर्व्वमवरुन्द्धे ॥ ३६ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ राज्ञोऽभिषेकादि ]

त्वष्टा हतपुत्त्रः । अभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसङ्कृत्वा प्प्रासहा सोममपिबत्त्स व्विष्वङ्व्यार्च्छत्तस्य मुखात्प्राणेब्भ्यः श्रीयशसान्न्यूर्द्ध्वान्न्युदक्क्रामँस्तानि पशून्प्राविशँस्तस्म्मात्पशवो यशो यशो ह भवति य ऽएवं व्विद्वान्त्सौत्रामण्ण्याभिषिच्च्यते ॥ १ ॥ ततोऽस्म्मा ऽएतमश्श्विनौ च सरस्वती च । यज्ञꣳ समभरन्त्सौत्रामणीम्भैषज्ज्याय तयैनमब्भ्यषिञ्चँस्ततो वै स देवानाꣳ श्रेष्ठोऽभवच्छ्रेष्ठः स्वानाम्भवति य ऽएनयाभिषिच्च्यते ॥२॥ कृष्ण्णाजिनेऽभिषिञ्चति । यज्ञो वै कृष्ण्णाजिनं य्यज्ञ ऽएवैनमेतदभिषिञ्चति लोमतश्छन्दाꣳसि वै लोमानि च्छन्दःस्वेवैनमेतदभिषिञ्चति ॥ ३ ॥ आसन्द्यामभिषिञ्चति । आसन्दी सद्वै साम्म्राज्ज्यꣳ साम्म्राज्ज्येनैवैनꣳ साम्म्राज्ज्यङ्गमयति ॥ ४ ॥ औदुम्बरी भवति । ऊर्ग्वा ऽउदुम्बर ऽऊर्ज्येवाब्ध्यभिषिच्च्यते जानुसम्मिता भवति जानुसम्मितो वा ऽअयँल्लोकोऽस्म्मा ऽउ वै लोकाय क्षत्त्रियोऽभिषिच्च्यते क्षत्त्रमु

व्वा ऽएष भवति यः सौत्रामण्ण्याभिषिच्च्यते तस्स्मा-ज्ज्ञानुसम्मितापरिमिता तिरश्ची ॥ ५ ॥ राष्ट्रं व्वा ऽआ-सन्दी । अपरिमितसमृद्धमु वै राष्ट्रम्मुञ्जविवयना भवति यज्ञिया हि मुञ्जा द्वा ऽउत्तरस्यां व्वेद्याम्पादौ भवतो द्वौ दक्षिणस्यामयं व्वै लोक ऽउत्तरा व्वेदिर्द्दक्षिणा पितृलोकस्त-देनमुभयोर्ल्लोकयोरद्ध्यभिषिञ्चति ॥ ६ ॥ एतद्ध स्म वै तद्विद्वानाह । गौरीवितिः शाक्त्यः क्षत्त्रमिवाह किल वय-ममुष्मिँल्लोके भविता स्म ऽइति शश्वद्धास्मा ऽऋषभो याज्ञतुरः प्प्रोवाच श्विक्क्नानाथं राजा ॥ ७ ॥ स ऽआस-न्दीमास्तृणाति * । '[1]क्षत्त्रस्य योनिरसि क्षत्त्रस्य नाभिर-सी'ति क्षत्त्रस्य वा ऽएषा योनिः क्षत्त्रस्य नाभिः ॥८॥ अथै-नाङ्कृष्ण्णाजिनेनास्तृणाति † । '[2]मा त्वा हिꣳसीन्मा मा हिꣳसी'रिति यज्ञो वै कृष्ण्णाजिनं य्यज्ञस्य चैवात्मनश्चा-हिꣳसायै ॥ ९ ॥ अथाधिरोहति । व्वारुण्ण्यर्चा व्वरुणो वै देवानाथं राजा स्वयैवैनमेतद्देवतयाभिषिञ्चति '[3]निषसाद धृतव्व्रतो व्वरुणः पस्त्यास्वा ॥ साम्म्राज्याय सुक्रतु'रिति ॥१०॥ अथ सुवर्ण्णरजतौ रुक्क्मौ ‡ व्व्युपास्यति । '[4]मृत्योः पाहि विद्योत्पाही'ति व्वृष्टिर्व्वै विराट् तस्या ऽएते घोरे तन्वौ विद्युच्च

---

* का० श्रौ० सू० १९. ४. ७।

(१) शु० य० सं० २०. १।

† का० श्रौ० सू० १९. ४. ८।

(२) शु० य० सं० २०. १। (३) शु० य० सं० २०. २।

‡ मण्डलाकारो भूषणविशेषो रुक्मः। (म० भा०)

(४) शु० य० सं० २०. २।

ह्रादुनिश्च ततः सुवर्ण्ण ऽएव रुक्मो विद्युतो रूपᳫं रजतो ह्रादुनेस्ताभ्यामेवास्मै देवताभ्याᳫं शर्म्म यच्छति तस्मा-त्सौत्रामण्ण्येजानस्यैताभ्यान्देवताभ्यान्न शङ्का भवत्यथो य ऽएवमेतद्वेद ॥ ११ ॥ पशूनां वसयाभिषिञ्चति । श्रीर्वै पशूनां वसा * श्रियैवैनमेतत्पशूनाᳫं रसेनाभिषिञ्चत्यथो परमं वा ऽएतदन्नाद्यं यद्वसा परमेणैवैनमेतदन्नाद्येनाभि-षिञ्चति ॥ १२ ॥ शफग्ग्रहा भवन्ति । शफैर्वै पशवः प्प्रति-तिष्ठन्ति प्प्रतिष्ठामेवैनङ्गमयति त्रयस्त्रिᳫंशद्ग्रहा भवन्ति त्रयस्त्रिᳫंशद्वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवताभिरभि-षिञ्चति जगतीभिर्ज्जुहोति जागता वै पशवो जगत्यैवास्मै पशूनवरुन्द्धे षोडशभिर्ऋग्भिर्ज्जुहोति षोडशकला वै पशवोऽनु-कलमेवास्मिमञ्छ्रियन्दधाति[1] ॥ १३ ॥ 'सीसेन[2] तन्त्रम्मनसा मनीषिण' ऽइति । द्वौ द्वौ† समासᳫं हुत्वा सते सᳫंस्रवान्त्स-मवनयत्यहोरात्राण्ण्येवैतदर्द्धमासान्मासानृतून्त्सँवत्सरे प्प्र-तिष्ठापयति तानीमान्न्यहोरात्राण्ण्यर्द्धमासा मासा ऽऋतवः सँवत्सरे प्प्रतिष्ठिताः ॥ १४ ॥ वैतसः सतो भवति । अप्प्सु-योनिर्वै वेतस ऽआपो वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवता-भिरभिषिञ्चति ॥१५॥ सर्वसुरभ्युन्मर्द्दनम्भवति परमो वा ऽएष गन्धो यत्सर्वसुरभ्युन्मर्द्दनङ्गन्धेनैवैनमेतदभिषिञ्चति ॥ १६ ॥ पुरस्तात्प्रत्यङ्ङभिषिञ्चति । पुरस्ताद्धि प्प्रत्यगन्न-मद्यते शीर्षतः शीर्षतो ह्यन्नमद्यत ऽआ मुखादन्ववस्रावयति

---

* मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसाशब्देनोच्यते ।

† "द्वौ द्वौ हुत्वा शेषान्त्सते करोति" ( का० श्रौ० सू० १९. ४. १३ )

( १ ) 'ग' 'ज' पुस्तकयोः "दधति" इति । ( २ ) शु० य० सं० १९, ८० ।

मुखेन ह्यन्नमद्यते सर्वतः परिक्रामं सर्वाभ्य ऽएवास्मिन्ने-तद्दिग्भ्योऽन्नाद्यन्दधाति तस्मात्सौत्रामण्ण्येजानस्य सर्वासु दिक्ष्वन्नाद्यमवरुद्धम्भवत्यथो य ऽएवमेतद्वेद ॥ १७ ॥ आश्विनेन प्रथमेन यजुषाभिषिञ्चति । अथ सारस्वते-नाथैन्द्रेणैताभिरेवैनमेतद्देवताभिरभिषिञ्चति तं हैक ऽएता-भिश्च देवताभिरभिषिञ्चन्ति भूर्भुवः स्वरित्येताभिरु च व्याहृतिभिरेता वै व्याहृतय ऽइदं सर्वन्तदेनमनेन सर्वेणाभिषिञ्चाम ऽइति न तथा कुर्य्यादेताभिरेवैनन्देवता-भिरभिषिञ्चेदेता ऽउ ह्येव देवता इदं सर्वम् ॥ १८ ॥ पुरस्तात्स्विष्टकृतोऽभिषिञ्चति । क्षत्रं वै स्विष्टकृत्क्ष-त्रेणैवैनमेतदभिषिञ्चत्यन्तरा वनस्पतिञ्च स्विष्टकृतञ्चा-भिषिञ्चति सोमो वै वनस्पतिरग्निः स्विष्टकृदग्नीषो-माभ्यामेवैनमेतत्परिगृह्याभिषिञ्चति तस्माद्ये चैतद्विदुर्ये च न त ऽआहुः क्षत्रियो वाव क्षत्रियस्याभिषेक्तेति ॥ १९ ॥ अथैनञ्जानुमात्रे धारयन्ति । अथ नाभिमात्रेऽथ मुखमात्र ऽएष्वेवास्मा ऽएतल्लोकेष्वायतनानि कल्पयत्य-भिषेको वा ऽएष यद्राजपेयमभिषेकः सौत्रामणी तद्यथैवादो वाजपेये यूपं रोहति तदेवैतद्रूपङ्क्रियते ॥ २० ॥ [अर्धः प्रपाठकः ॥५६॥ ] तदाहुः । प्रेव वा ऽएषोऽस्माल्लोकाच्च्यवते यः सौत्रामण्ण्याभिषिच्यत ऽइति कृष्णाजिने प्रत्यवरोहति यज्ञो वै कृष्णाजिनं यज्ञ ऽएवान्ततः प्रतितिष्ठति ॥ २१ ॥ '(१)प्रति क्षत्रे प्रतितिष्ठामि राष्ट्र' ऽइति । क्षत्र

(१) शु० य० सं० २०. १० ।

ऽएव राष्ट्रे प्प्रतितिष्ठति क्षत्राद्राष्ट्राद्प्प्रभ्रꣳशाय 'प्प्रत्यश्श्वेषु[1] प्प्रतितिष्ठामि गोष्ष्वि'ति गोऽश्श्व ऽएव प्प्रतितिष्ठति गोऽश्श्वाद्प्प्रभ्रꣳशाय 'प्प्रत्यङ्गेषु[2] प्रतितिष्ठाम्म्यात्म'न्नित्यङ्गेष्ष्वेवात्मन्प्रतितिष्ठत्यङ्गेभ्य ऽआत्मनोऽप्प्रभ्रꣳशाय 'प्प्रति प्प्राणेषु[3] प्प्रतितिष्ठामि पुष्टे' ऽइति प्प्राणेष्ष्वेव पुष्टे प्प्रतितिष्ठति प्प्राणेभ्यः पुष्टाद्प्प्रभ्रꣳशाय 'प्प्रति द्यावापृथिव्व्योः[4] प्प्रतितिष्ठामि यज्ञ' ऽइति तदनयोर्द्यावापृथिव्व्योः प्प्रतितिष्ठति ययोरिदꣳ सर्व्वमधि ॥ २२ ॥ अथ साम गायति । क्षत्रं व्वै साम क्षत्रेणैवैनमेतदभिषिञ्चत्यथो साम्म्राज्यं व्वै साम साम्म्राज्येनैवैनꣳ साम्म्राज्यङ्गमयति सर्व्वेषां व्वा ऽएष व्वेदानाꣳ रसो यत्साम सर्व्वेषामेवैनमेतद्वेदानाꣳ रसेनाभिषिञ्चति ॥ २३ ॥ बृहत्याङ्गायति । बृहत्यां व्वा ऽअसावादित्यः श्रियाम्प्रतिष्ठायाम्प्रतिष्ठितस्तपति बृहत्यामेवैनमेतच्छ्रियाम्प्रतिष्ठायाम्प्रतिष्ठापयति ॥२४॥ ऐन्द्र्याम्बृहत्याङ्गायति *। ऐन्द्रो व्वा ऽएष यज्ञो यत्सौत्रामणीन्द्रायतन ऽएष ऽएतर्हि यो यजते स्व ऽएवैनमेतदायतनेऽभिषिञ्चति ॥ २५ ॥ अथ यस्म्मात्सꣳशानानि नाम । एतैर्व्वै सामभिर्द्देवा ऽइन्द्रमिन्द्रियाय व्वीर्य्याय समश्श्यँस्तथो ऽएवैतमृत्त्विजो यजमानमेतैरेव सामभिरिन्द्रियाय व्वीर्य्याय सꣳश्यन्ति सꣳश्रवसे व्विश्श्रवसे सत्य-

(१) शु० य० सं० २०. १० । (२) शु० य० सं० २०. १० । (३) शु० य० सं० २०. १० । (४) शु० य० सं० २०. १० ।

* का० श्रौ० सू० १९. ५. २ ।

श्श्रवसे श्श्रवस ऽइति सामानि भवन्त्येष्ष्वेवैनमेतल्लोकेषु श्श्रावयन्ति चतुर्न्निधनम्भवति चतस्रो वै दिशः सर्व्वास्वेवैनमेतद्दिक्षु प्प्रतिष्ठापयन्ति सर्व्वे निधनमुपावयन्ति संविदाना ऽएवास्म्मिञ्छ्रियन्दधति ॥ २६ ॥ तदाहुः । यदेतत्साम गीयतेऽथ क्वैतस्य साम्म्न ऽउक्क्थङ्का प्प्रतिष्ठा ऽव्यृद्धः हि तद्यत्स्तुतमननुशस्तमिति ॥ २७ ॥ त्रया देवा ऽएकादशेति । एतद्वा ऽएतस्य साम्म्न ऽउक्क्थमेषा प्प्रतिष्ठा ॥ २८ ॥ अथो 'त्रया[1] देवा ऽएकादशे'ति । त्रयस्त्रिंशतःशङ्ग्रहञ्जुहोति त्रया हि देवा ऽएकादश 'त्रयस्त्रिंशाः[2] सुराधस' ऽइति त्रयस्त्रिंशद्धि देवा 'बृहस्प्पतिपुरोहिता'[3] ऽइति ब्ब्रह्म वै बृहस्प्पतिर्ब्ब्रह्मपुरोहिता ऽइत्त्येवैतदाह 'देवस्य[4] सवितुः सव' ऽइति देवेन सवित्रा प्प्रसूता ऽइत्त्येवैतदाह 'देवा[5] देवैरवन्तु मे'ति देवा ह्येतन्देवैरभिषिञ्चन्ति ॥ २९ ॥ 'प्रथमा[6] द्वितीयै'रिति । प्प्रथमा ह्येतन्द्वितीयैरभिषिञ्चन्ति 'द्वितीयास्तृतीयै'[7]रिति द्वितीया ह्येतन्तृतीयैरभिषिञ्चन्ति 'तृतीयाः[8] सत्त्येने'ति तृतीया ह्येतः सत्त्येनाभिषिञ्चन्ति 'सत्त्यं[9] ऽयज्ञेने'ति सत्त्यः ह्येतं ऽयज्ञेनाभिषिञ्चति 'यज्ञो[10] यजुर्ब्भि'रिति यज्ञो ह्येतं ऽयजुर्ब्भिरभिषिञ्चति 'यजूंषि[11] सामभि'रिति यजूंषि ह्येतः साम-

(१) शु० य० सं० २०. ११। (२) शु० य० सं० २०. ११। (३) शु० य० सं० २०. ११। (४) शु० य० सं० २०. ११। (५) शु० य० सं० २०. ११। (६) शु० य० सं० २०. १२। (७) शु० य० सं० २०. १२। (८) शु० य० सं० २०. १२। (९) शु० य० सं० २०. १२। (१०) शु० य० सं० २०. १२। (११) शु० य० सं० २०. १२।

भिरभिषिञ्चन्ति 'सामान्यृग्भि'रिति सामानि ह्येतमृग्भिरभिषिञ्चन्त्यृ'चः पुरोऽनुवाक्ययाभि'रित्यृचो ह्येतम्पुरोऽनुवाक्ययाभिरभिषिञ्चन्ति 'पुरोऽनुवाक्यया याज्याभि'रिति पुरोऽनुवाक्यया ह्येतं ऽयाज्ज्याभिरभिषिञ्चन्ति 'याँज्या वषट्कारै'रिति ऽयाज्ज्या ह्येतं वषट्कारैरभिषिञ्चन्ति 'वषँट्कारा ऽआहुतिभि'रिति वषट्कारा ह्येतमाहुतिभिरभिषिञ्चन्त्या'हुतँयो मे कामान्त्समर्द्धयन्तु भूः स्वाहे'ति तदेनमेताभिर्द्देवताभिः परोऽवरमभिषिच्च्याथास्म्मा ऽआहुतिभिः सर्वान्न्कामान्त्समर्द्धयत्त्यथऽर्त्विक्षूपहवमिष्ट्वा भक्षयत्यृतवो वा ऽऋत्विज ऽऋतुष्ष्वेवैतदुपहवमिच्छते ॥ ३० ॥ स भक्षयति । 'लोमाँनि प्प्रयतिर्म्मम त्त्वङ्म ऽआनतिरागतिः ॥ माँसम्म ऽउपनतिर्वस्स्वस्थि मज्जाम ऽआनति'रिति प्प्रेव वा ऽएष लोकाँश्च देवताश्च विशति यः सौत्रामण्याभिषिच्यते तदेतदवान्तरामात्मानमुपह्वयते तथा कृत्स्न ऽएव सर्वतनूः साङ्गः सम्भवति ॥ ३१ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

—✤—

[ सौत्रामणीशेषः ]

एतस्म्माद्वै यज्ञात्पुरुषो जायते । स यद्ध वा ऽअस्मिँम्ल्लोके पुरुषोऽन्नमत्ति तदेनममुष्म्मिँल्लोके प्प्रत्त्यत्ति स

(१) शु० य० सं० २०. १२। (२) शु० य० सं० २०. १२। (३) शु० य० सं० २०. १२। (४) शु० य० सं० २०. १२। (५) शु० य० सं० २०. १२। (६) शु० य० सं० २०. १२। (७) शु० य० सं० २०. १३।

वा ऽएष परिस्रुतो यज्ञस्तायतेऽनाद्या वै ब्ब्राह्मणेन परि-स्रुत्स ऽएतस्मादनाद्याज्जायते तद्ध हामुष्मिँल्लोकेऽन्नन्न ष्प्रत्यत्ति तस्मादेष ब्ब्राह्मणयज्ञ ऽएव यत्सौत्रामणी ॥ १ ॥ तस्य लोमान्येव शष्पाणि । त्वक्तोक्मानि माꣳसँल्लाजा ऽअस्थि कारोतरो मज्जा मासरꣳ रसः परिस्रुन्नग्न्यँहुर्ल्लो-हितꣳ रेतः पयो मूत्रꣳ सुरोवध्यं बल्कसम् ॥ २ ॥ हृदय-मेवास्यैन्द्रः पुरोडाशः । यकृत्सावित्रः क्क्लोमा व्वारुणो मतस्ने ऽएवास्याश्वत्थश्च पात्रमौदुम्बरश्च पित्तन्नैयग्ग्रोध-मान्त्राणि स्थाल्ल्यो गुदा ऽउपशयानि श्श्येनपत्रे प्प्लीहा-सन्दी नाभिः कुम्भो व्वनिष्ठुः प्लाशिः शतातृण्णा तद्यत्सा बहुधा व्वितृण्णा भवति तस्मात्प्लाशिर्ब्बहुधा व्विकृत्तो मुखꣳ सतञ्जिह्वा पवित्रञ्चप्यम्पायुर्व्वस्तिर्व्वालः ॥ ३ ॥ अङ्गान्येवास्याश्विनः पशुः । आत्मा सारस्वतो रूपमैन्द्र ऽऋषभस्तस्मादाहुर्ग्गावः पुरुषस्य रूपमित्त्यायुर्हिरण्य-न्तच्छतमानम्भवति तस्माच्छतायुः पुरुषः ॥ ४ ॥ चक्षुषी ऽएवास्याश्विनौ ग्ग्रहौ । पक्ष्माणि गोधूमसक्तवश्च कुवलसक्तवश्च नासिके ऽएवास्य सारस्वतौ ग्ग्रहावथ यानि नासिकयोर्ल्लोमानि तान्युपवाकसक्तवश्च बदरसक्त-वश्च श्श्रोत्रे ऽएवास्यैन्द्रौ ग्ग्रहावथ यानि कर्ण्णयोर्ल्लोमानि यानि च ब्भ्रुवोस्तानि यवसक्तवश्च कर्क्कन्धुसक्तवश्च ॥ ५ ॥ अथ यान्न्युपस्थे लोमानि । यानि चाधस्तात्तानि

---

( १ ) 'सर्जत्वक्त्रिफलाशुण्ठीपुनर्नवाचतुर्जातकपिप्पलीगजपिप्पलीवंशावकाबृहच्छत्राचित्रकेन्द्र-वारुण्यश्वगन्धाधान्यकयवानीजीरकद्वयंहरिद्राद्वयविरूढयवव्रीहय एकीकृता नग्नहुः' (म॰भा॰) ।

व्वृकलोमान्न्यथ यान्न्युरसि लोमानि यानि च निकक्ष-योस्तानि व्व्याग्घ्रलोमानि केशाश्च श्म्मश्श्रूणि च सिᳪ-हलोमानि ॥ ६ ॥ त्रयः पशवो भवन्ति । त्रेधाविहितो वा ऽअयम्पुरुषस्यात्मात्मानमेवास्य तैः स्पृणोति यदुवाङ्नाभेस्तदाश्श्विनेन यदूर्द्ध्वन्नाभेरवाचीनᳪ शीर्ष्णस्तत्सारस्वतेन शिर ऽऐन्द्रेण यथारूपमेव यथादेवतमात्मानम्मृत्त्यो स्पृत्त्वामृतङ्कुरुते ॥ ७ ॥ त्रयः पुरोडाशा भवन्ति । त्रेधाविहितं व्वा ऽइदम्पुरुषस्य व्वयो व्वय ऽएवास्य तैः स्पृणोति पूर्व्ववयसमैन्द्रेण मद्ध्यमवयसᳪ सावित्रेणोत्तमवयसं व्वारुणेन यथारूपमेव यथादेवतं व्वयो मृत्त्यो स्पृत्त्वामृतङ्कुरुते ॥ ८ ॥ षड्ग्रहा भवन्ति । षड्वा ऽइमे शीर्षन्प्राणाः प्प्राणानेवास्य तैः स्पृणोति चक्षुषी ऽएवाश्श्विनाब्भ्यान्नासिके सारस्वताब्भ्याᳬ श्श्रोत्रे ऽऐन्द्राब्भ्यां यथारूपमेव यथादेवतम्प्राणान्मृत्त्यो स्पृत्त्वामृतान्कुरुते ॥ ९ ॥ सन्तता याज्यापुरोऽनुवाक्क्या भवन्ति । समानदेवत्त्याः प्प्राणानाᳬ सन्तत्त्या ऽअव्व्यवच्छेदाय सर्व्वाः पुरोऽनुवाक्क्या भवन्ति सर्व्वा याज्यास्तस्म्मात्प्राणाः सर्व्वे पराञ्चः सर्व्वे प्प्रत्यञ्चः सर्व्वाः प्प्रथमा भवन्ति सर्व्वा मद्ध्यमाः सर्व्वा ऽउत्तमास्तस्म्मात्प्राणाः सर्व्वे प्प्रथमाः सर्व्वे मद्ध्यमाः सर्व्वे ऽउत्तमाः सर्व्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्क्ये भवतः प्प्राणोदानयोस्तद्रूपम्प्राणोदानावेवावरुन्द्धे तस्म्मात्सर्व्वे प्प्राणाः प्प्राणोदानयोरेव प्प्रतिष्ष्ठिताः ॥ १० ॥ स वा एष ऽआ-

(१) "मात्मानम्मृत्त्यो स्पृत्त्वामृतङ्कुरुते" इति 'ग' 'ज' पुस्तकयोः ।

त्मैव यत्सौत्रामणी । मन ऽएव प्रत्यक्षाद्वाग्यजमानस्त-स्यात्मैव वेदिः प्रजोत्तरवेदिः पशवो बर्हिरङ्गान्यृत्विजो-ऽस्थीनीद्ध्म ऽआज्यम्मज्जा मुखमग्निरन्नमाहुतिर्वयः सꣳस्था तस्मात्सौत्रामण्येजानो वय ऽउपगच्छति ॥११॥ तद्यौ ह वा ऽइमौ पुरुषाविवाक्ष्योः । एतावेवाश्विनावथ यत्कृष्णन्तत्सारस्वतं यच्छुक्लन्तदैन्द्रन्तद्यदाश्विने पशौ सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्द्धङ्कृत्वात्मन्धत्ते ॥ १२ ॥ मन ऽएवेन्द्रः । वाक्सरस्वती श्रोत्रे ऽअश्विनौ यद्वै मनसा ध्यायति तद्वाचा वदति यद्वाचा वदति तत्कर्णाभ्याꣳ शृणोति तद्यत्सारस्वते पशौ सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्द्धङ्कृत्वात्मन्धत्ते ॥ १३ ॥ प्राण ऽएवेन्द्रः । जिह्वा सरस्वती नासिके ऽअश्विनौ यद्वै प्राणेनान्नमात्मन्प्रणयते तत्प्राणस्य प्राणत्वञ्जिह्वया वा ऽअन्नस्य रसं विजानाति नासिके ऽउ वै प्राणस्य पन्थास्तद्यदैन्द्रे पशौ सत्यथैता देवताः सह यजत्येता-न्येवैतत्सार्द्धङ्कृत्वात्मन्धत्ते ॥ १४ ॥ हृदयमेवेन्द्रः । यकृ-त्सविता क्लोमा वरुणस्तद्यदैन्द्रे पुरोडाशे सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्द्धङ्कृत्वात्मन्धत्ते ॥ १५ ॥ प्राण ऽएव सविता । व्यानो वरुणः शिश्नमिन्द्रो यद्वै प्राणेनान्नमत्ति तद्व्यानेन व्यनिति शिश्नेन वा ऽअन्नस्य रसꣳ रेतः सिञ्चति तद्यत्सावित्रे पुरोडाशे सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्द्धङ्कृत्वात्मन्धत्ते ॥ १६ ॥ योनिरेव वरुणः । रेत ऽइन्द्रः सवितैव रेतसः प्रजनयिता

तद्यद्वारुणे पुरोडाशे सत्त्यथैता देवताः सह यजत्येताभ्ये-वैतत्सार्द्धङ्कृत्वात्मन्धत्ते स य ऽएवमेतद्वेदैता ऽएव देवता अनुसम्भवत्त्येता देवता ऽअनु प्प्रजायत ऽआ प्प्रजया पशुभिः प्प्यायते प्प्रत्यस्मिँल्लोके तिष्ठत्त्यभि स्वर्ग्गँल्लो-कञ्जयति य ऽएवं विद्वान्त्सौत्रामण्ण्या यजते यो वैत-देवं वेद ॥ १७ ॥

## नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



### [ अवभृथेष्टिः ]

अवभृथमिष्ट्वा यन्ति । अवभृथं वै सोमनेष्ट्वा यन्ति सोम ऽएष यत्सौत्रामणी ॥ १ ॥ 'यद्देवा[1] देवहेडन'मिति । देवकृताद्वैनमेनसो मुञ्चति 'यदि दिवा[2] यदि नक्त'मिति यद्वाहोरात्राभ्यामेनः करोति तस्माद्वैनम्मुञ्चति 'यदि[3] जाग्रद्यदि स्वप्न' ऽइति मनुष्ष्या वै जागरितम्पितरः सुप्तम्मनुष्ष्यकिल्विषाच्चैवैनम्पितृकिल्विषाच्च मुञ्चति ॥ २ ॥ 'यद्ग्रामे[4] यदरण्ण्य' ऽइति । ग्ग्रामे वा ह्यरण्ण्ये वैनः क्रियते तस्माद्वैनम्मुञ्चति 'यत्सभाया'[5]मिति सब्भ्या-द्वैनमेनसो मुञ्चति 'यदिन्द्रिय'[6] ऽइति दैवाद्वैनमेनसो मुञ्चति 'यच्छूद्रे[7] यदर्य्ये यदेनश्चकृमा वयं ऽयदेकस्याधि धर्म्मणि तस्यावयजनमसी'ति सर्व्वस्माद्वैनमेतस्माद्वे-नसो मुञ्चति ॥ ३ ॥ 'यदापो[8] ऽअघ्न्न्या ऽइति । वरुणेति

(१) शु० य० सं० २०. १४। (२) शु० य० सं० २०. १५। (३) शु० य० सं० २०. १६। (४) शु० य० सं० २०. १७। (५) शु० य० सं० २०. १७। (६) शु० य० सं० २०. १७। (७) शु० य० सं० २०. १७। (८) शु० य० सं० २०. १८।

शपामहे ततो वरुण नो मुञ्चे’ति वरुण्याद्धेवैनमेनसो मुञ्चत्य- ‘वभृथ निचुम्पुण निचेरुरसि निचुम्पुण’ ऽइति यो ह वा ऽअ- यमपामावर्त्तः स हावभृथः स हैष वरुणस्य पुत्रो वा भ्राता वा तमेवैतत्स्तौत्य‘व देवैर्देवकृतमेनो यक्षी’ति देवकृतमेवैनो- ऽवयजते‘ऽव मर्त्यैर्म्मर्त्यकृत’मिति मर्त्यकृतमेवैनोऽवयजते ‘पुरुराव्णो देव रिषस्पाही’ति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाह ॥ ४ ॥ ‘समुद्रे ते हृदयमप्स्वन्त’रिति । आपो वै समुद्रो रसो वा ऽआपस्तदेनमेतेन रसेन सꣳसृजति ‘सन्त्वा विशन्त्वोषधीरुताप’ ऽइति तदेन- मेतेनोभयेन रसेन सꣳसृजति यश्चौषधिषु यश्चाप्सु द्वौ विक्रमा ऽउदङ्ङुत्क्रामत्येतावती वै मनुष्ये जूति- र्य्यावान्विक्रमस्तद्यावत्येवास्मिञ्जूतिस्तयैव पाप्मानं विज- हाति ॥ ५ ॥ ‘सुमित्रिया न ऽआप ऽओषधयः सन्त्वि’ति । अञ्जलिनाप ऽउपाचति वज्रो वा ऽआपो वज्रेणैवैतन्मि- त्रधेयङ्कुरुते ‘दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म’ ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दि- शम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ६ ॥ ‘द्रुपदादिव मुमुचानः । स्विन्नः स्नातो मलादिव ॥ पूतम्पवित्रेणेवाज्य- मापः शुन्धन्तु मैनस’ ऽइति वासोऽपप्लावयति यथे- षीकाम्मुञ्जाद्विवृहेदेवमेनꣳ सर्वस्मात्पाप्मनो विवृहति

(१) शु० य० सं० २०. १८। (२) शु० य० सं० २० १८। (३) शु० य० सं० २०. १८। (४) शु० य० २०. १८। (५) शु० य० सं० २०. १९. (६) शु० य० सं० २०. १९। (७) शु० य० सं० २०. १९। (८) शु० य० सं० २०. १९। (९) शु० य० सं० २०. २०।

स्न्नाति तम ऽएवापहते ॥ ७ ॥ 'उद्वयन्तमसस्प्परी'ति । पाप्प्मा वै तमः पाप्प्मानमेव तमोऽपहते 'स्वः पश्यन्त ऽउत्तर'मित्ययं वै लोकोऽथ ऽउत्तरोऽस्मिन्नेव लोके प्प्रतितिष्ठति 'देवन्देवत्रा सूर्य्यमगन्म ज्योतिरुत्तम'मिति स्वर्ग्गो वै लोकः सूर्य्यो ज्योतिरुत्तमथं स्वर्ग्ग ऽएव लोकेऽन्ततः प्प्रतितिष्ठत्यनपेक्षमेत्याहवनीयमुपतिष्ठते ॥ ८ ॥ 'अपो ऽअद्यान्वचारिष'मिति । अपामेव रसमवरुन्द्धे 'रसेन समसृक्ष्महि'त्यपामेव रसमात्मन्धत्ते 'पयस्वानग्न ऽआगमन्तम्मा सꣳसृज वर्च्चसा प्प्रजया च धनेन चे'त्याशिषमेवैतदाशास्ते ॥ ९ ॥ 'एधोऽस्येधिषीमही'ति समिधमादत्ते * । एधो ह वा ऽअग्नेः समि'त्समिदसि तेजोऽसि तेजो मयि धेही'त्याहवनीये समिधमभ्यादधात्यग्निमेवैतया समिन्द्धे स ऽएनꣳ समिद्धस्तेजसा समिन्द्धे ॥ १० ॥ आदित्यञ्चरुं ऽयक्ष्यमाणो निर्व्वपति । आदित्यमीजान ऽइयं वा अदितिरस्यामेव यज्ञन्तनुतेऽस्यामिष्ट्वा प्प्रतितिष्ठति धेनुर्द्दक्षिणेयं वै धेनुरिमामेव सर्व्वान्कामान्दुहे वत्सम्पूर्व्वस्यान्ददाति मातरमुत्तरस्यां ऽयदा वै वत्सो मातरन्धयत्यथ सा प्प्रत्ता दुहे प्प्रत्तामेवेमाꣳ सर्व्वान्कामान्दुहे ॥ ११ ॥ तदाहुः । प्रेव वा ऽएषोऽस्मा-

---

(१) शु० य० सं० २०. २१ । (२) शु० य० सं० २०. २१ । (३) शु० य० सं० २०. २१ । (४) शु० य० सं० २०. २२ । (५) शु० य० सं० २०. २२ । (६) शु० य० सं० २०. २२ । (७) शु० य० सं० २०. २३ । (८) शु० य० सं० २०. २३ ।

* का० श्रौ० सू० १९. ५. १९ ।

ल्लोकाच्च्यवते षोऽपोऽवभृथमभ्यवैतीत्यवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतेऽयं वै लोको मित्रोऽसौ व्वरुणो यदुवेदमन्तरेण तत्पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजत ऽएष्वेवैतल्लोकेषु प्प्रतितिष्ठति प्प्राणो वै मित्रोऽपानो व्वरुणोऽन्नमेव पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजते प्प्राण ऽएवान्नाद्येऽन्ततः प्रतितिष्ठति ॥१२॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सौत्रामण्यर्थवादः ]

दुष्टरीतुर्ह पौंसायनः । दशपुरुषः राज्यादपरुद्ध ऽआस रेवोत्तरसमु ह पाटवञ्चाक्रं स्थपतिः सृञ्जया ऽअपरुरुधुः ॥ १ ॥ स होवाच । दुष्टरीतुम्पौंसायनः सौत्रामण्या त्वा याजयानि यदिदः सृञ्जयेषु राष्ट्रन्त्वयि धास्यामीति तथेति तयैनमयाजयत् ॥ २ ॥ तदु ह बल्हिकः प्प्रातिपीयः शुश्राव । कौरव्यो राजा यो ह वा ऽअयन्दुष्टरीतुः पौंसायनो दशपुरुषः राज्यादपरुद्धोऽभूत्तमयञ्चाक्र स्थपतिः सौत्रामण्या याजयिष्यति यदिदः सृञ्जयेषु राष्ट्रन्तद्धास्मिन्धास्यतीति ॥ ३ ॥ स होवाच । तन्वा ऽअहन्तं व्वेदिष्यामि यदि स तस्मिन्राष्ट्रन्धास्यति बहिर्द्धा वैनः राष्ट्राद्धास्यतीति स ऽआजगाम यस्यां व्वेलायाङ्ग्रहा गृह्यन्ते ॥ ४ ॥ स होवाच । स्थपते चाक्र नाहवनीये सुरा होतव्येत्या-

हुर्नान्यत्राहवनीयाद्यद्याहवनीये सुराꣳ होष्ष्यसि पापवस्यसङ्करिष्ष्यसि जामि यज्ञस्य यद्यन्न्यत्राहवनीयाद्बहिर्द्धैनꣳ राष्ट्राद्धास्यसि नैनꣳ राष्ट्रे धास्यसि नास्मिन्न्राष्ट्रन्धास्यसीति ॥ ५ ॥ स होवाच। नाहवनीये सुराꣳ होष्ष्यामि नान्न्यत्राहवनीयान्न पापवस्यसङ्करिष्ष्यामि न जामि यज्ञस्य नैनम्बहिर्द्धा राष्ट्राद्धास्यामि राष्ट्र ऽएनन्धास्यामि राष्ट्रमस्मिन्धास्यामीति ॥ ६ ॥ स होवाच। कथꣳ हि करिष्ष्यसी३ ऽइति स हैतदुवाचासुरेषु वा ऽएषोऽग्ग्रे यज्ञ आसीत्सौत्रामणी स देवानुपप्प्रैत्सोऽप ऽआगच्छत्तमापः प्रत्यनन्दँस्तस्मादु श्रेयाꣳसमागतम्प्रत्येव नन्दन्ति तꣳ होचुरेह्येव भगव ऽइति ॥ ७ ॥ स होवाच। बिभेमि वै प्प्रणयत मेति कस्माद्भगवो बिभेषीत्त्यसुरेब्भ्य ऽइति तथेति तमापः प्प्राणयँस्तस्माद्यो व्यधन्नो भवति स बिब्भ्यतम्प्रणयति यद्वापः प्प्राणयँस्तस्माद्वापः प्प्रणीतास्तत्प्रणीतानाम्प्रणीतात्त्वम्प्रति ह तिष्ठति य ऽएवमेतत्प्रणीतानाम्प्रणीतात्त्वं वेद ॥ ८ ॥ तदिष्ट्वाः प्प्रयाजा ऽआसुः। अपर्य्यग्निकृतमथासुरा ऽअन्न्वाजग्मुस्ते देवाः पर्य्यग्निनैवासुरान्त्सपत्नान्भ्रातृव्व्यान्न्यज्ञादन्तरायँस्तथो ऽएवैष ऽएतत्पर्य्यग्निनैव द्विषन्तम्भ्रातृव्व्यं य्यज्ञादन्तरेति ॥ ९ ॥ देवयोनिर्व्वा ऽएष यदाहवनीयः। तस्यैतावमृतपक्षौ यावेतावभितोऽग्नी तद्यदाहवनीये यज्ञन्तन्न्वते देवयोनावेवैतद्देवेब्भ्यो यज्ञन्तन्न्वत ऽउप हैनम्पुनर्य्यज्ञो नमति नास्माद्यज्ञो

ऽव्युवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म
क्रियते ॥ १० ॥ उत्तरेऽग्नौ पयोग्ग्रहाञ्जुह्वति । उत्तरेऽग्नौ
पशूञ्छ्रपयन्ति पशूनेव तन्मर्त्त्यान्त्सतोऽमृतयोनौ दधाति
मर्त्त्यान्त्सतोऽमृतयोनेः प्प्रजनयत्त्यप ह वै पशूनाम्पुन-
र्म्मृत्त्युञ्जयति नास्म्माद्यज्ञो ऽव्युवच्छिद्यते य ऽएवमेतद्वेद
यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ ११ ॥ दक्षिणेऽग्नौ
सुराग्ग्रहाञ्जुह्वति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषं-
ऽयुक्ताभिः पितॄनेव तन्मर्त्त्यान्त्सतोऽमृतयोनौ दधाति
मर्त्त्यान्त्सतोऽमृतयोनेः प्प्रजनयत्त्यप ह वै पितॄणाम्पुनर्म्मृ-
त्त्युञ्जयति नास्म्माद्यज्ञो ऽव्युवच्छिद्यते य ऽएवमेतद्वेद
यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ १२ ॥ तद्यदेता-
वग्नी ऽआहवनीयाद्विह्रियेते । तेनाहवनीयावथ यदाहव-
नीयम्पुनर्न्नाश्नुवाते तेनानाहवनीयौ तेनोभौ होमा ऽउपा-
प्नोति यश्चाहवनीये यश्चानाहवनीये यच्च हुतं य्यच्चाहुत-
म्पुनर्हार्यमित्त्वोवाच न तदस्ति यत्सृञ्जयानाᳪं राष्ट्रन्दुष्टरी-
तोस्तदद्य तथायश्चाक्रु स्त्थपतिर्य्यज्ञेऽकरिति ॥१३॥ उत्तरेऽग्नौ
पशुभिः पुरोडाशैः पयोग्ग्रहैरिति चरन्ति । यदु चान्यत्तेन
देवानेव तद्देवलोके प्प्रीणाति त ऽएनम्प्रीताः प्प्रीणन्त्यथो
देवलोकमेव जयति ॥ १४ ॥ दक्षिणेऽग्नौ सुराग्ग्रहाञ्जु-
ह्वति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषंऽयुक्ताभिः
पितॄनेव तत्पितृलोके प्प्रीणाति त ऽएनम्प्रीताः प्प्रीण-
न्त्यथो पितृलोकमेव जयति ॥ १५ ॥ स वा ऽएष
आत्मैव यत्सौत्रामणी । तस्मात्सा निरुक्ता निरुक्तो ह्यात्मा

लोको व्वयोधास्तस्मात्सोऽनिरुक्तोऽनिरुक्तो हि लोक ऽआत्मा वै यज्ञस्य सौत्रामणी बाहू ऽऐन्द्रश्च व्वयोधाश्च तद्यदेतावभितः पशू भवतस्तस्मादिमावात्मानमभितो बाहू ग्रथो वै पशुरेवं स्थूपस्तद्यदेतᳬ सौत्रामणिकं स्थूपमेतौ यूपावभितो भवतस्तस्माद्विमावात्मानमभितो बाहू ॥ १६ ॥

नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ११२ ॥

इति नवमोऽध्यायः ॥ ९ ॥

मध्यमनाम द्वादशं काण्डं समाप्तम्* ॥ १२ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ४५९ ।

# अथाश्वमेधनाम त्रयोदशं काण्डम्

[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—अश्वमेधः, तद्गतं प्रायश्चित्तम्, पुरुषमेधः, सर्वमेधः, दशरात्रः, पितृमेधः ]

[ ब्रह्मौदनपाकः ]

॥ ॐ ॥* ब्रह्मौदनम्पचति । रेत ऽएव तद्धत्ते यदाज्यमुच्छिष्ष्यते तेन रशनामभ्यज्याद्दत्ते तेजो वा ऽआज्यम्प्राजापत्त्योऽश्श्वः प्प्रजापतिमेव तेजसा समर्द्धयत्यपूतो वा ऽएषोऽमेद्ध्यो यदश्श्वः ॥ १ ॥ दर्ब्भमयी रशना भवति । पवित्त्रं वै दर्ब्भाः पुनात्त्येवैनम्पूतमेवैनम्मेद्ध्यमालभते ॥ २ ॥ अश्श्वस्य वा ऽआलब्धस्य । रेत ऽउदक्क्रामत्तत्सुवर्ण्णः हिरण्यमभवद्यत्सुवर्ण्णः हिरण्यन्ददात्त्यश्श्वमेव रेतसा समर्द्धयति ॥ ३ ॥ † प्रजापतिर्य्यज्ञमसृजत । तस्य महिमापाक्क्रामत्स महार्त्विजः प्प्राविशत्तम्महर्त्विग्भिरन्वैच्छत्तम्महर्त्विग्भिरन्न्वविन्दद्यन्महार्त्त्विजो ब्ब्रह्मौदनम्प्राश्नन्ति महिमानमेव तद्यज्ञस्य यजमानोऽवरुन्द्धे ब्ब्रह्मौदने सुवर्ण्णः हिरण्यन्ददाति रेतो वा ऽओदनो रेतो हिरण्यः रेतसैवास्म्मिँस्तद्रेत्तो दधाति शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते चतुष्ट्वयीरपो

* ब्राह्मणेभ्य ऋत्विग्भ्यो देय ओदनः ब्रह्मौदनः ।

† अत्र शतम् ६४०० ।

( १ ) 'क' इति 'ज' पुस्तके ।

वसतीवरीर्म्मध्यमायाहे गृह्णाति ता दिग्भ्यः समाहृता भवन्ति दिक्षु वा ऽअन्नमन्नमापोऽन्नेनैवास्मा ऽअन्नमवरुन्द्धे ॥ ४ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अश्वस्य बन्धनप्रोक्षणादि ]

ऽऋद्धमु वा ऽएतद्यज्ञस्य । यद्यजुष्क्केण क्रियत 'ऽइमामगृब्भ्णन्रशनामृतस्ये'त्यश्श्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै द्वादशारत्निर्ब्भवति द्वादश मासाः सँवत्सरः सँवत्सरमेव यज्ञमाप्नोति ॥ १ ॥ तदाहुः । द्वादशारत्नी रशना कार्य्या३ त्रयोदशारत्नी३रित्यृषभो वा ऽएष ऽऋतूनां यत्सँवत्सरस्तस्य त्रयोदशो मासो विष्टप वृषभ ऽएष यज्ञानां यदश्श्वमेधो यथा वा ऽऋषभस्य विष्टपमेवमेतस्य विष्टपन्त्रयोदशमरत्निः रशनायामुपादध्यात्तद्यथर्षभस्य* विष्टपः संस्क्रियते तादृक्तत् ॥ २ ॥ 'अभिधा ऽअसी'ति । तस्मादश्श्वमेधयाजी सर्व्वा दिशोऽभिजयति 'भुवनमसी'ति भुवनन्तज्जयति 'यन्तासि धर्त्ते'ति यन्तारमेवैनन्धर्त्तारङ्करोति' 'स त्वमग्निं वैश्श्वानर'मित्यग्निमेवैनं वैश्श्वानरङ्गमयति 'सप्प्रथसङ्गच्छे'ति प्प्रजयैवैनम्पशुभिः प्प्रथयति 'स्वाहाकृत' ऽइति वषट्कार

(१) शु० य० सं० २२. २ ।

* '०थ ऽऋषभस्य' इति 'ग' 'ज' पुस्तकयोः ।

(२) शु० य० सं० २२. ३ । (३) शु० य० सं० २२. ३ । (४) शु० य० सं० २२. ३ । (५) शु० य० सं० २२. ३ । (६) शु० य० सं० २२. ३ । (७) शु० य० सं० २२. ३ ।

ऽएवास्यैष 'स्वगा[1] त्वा देवेब्भ्य' ऽइति देवेब्भ्य ऽएवै-नᳬं स्वगा करोति 'प्प्रजापतय'[2] ऽइति प्प्राजापत्त्योऽश्श्वः स्वयैवैनन्देवतया समर्द्धयति ॥ ३ ॥ ईश्श्वरो वा ऽएषः । आर्त्तिमार्त्तोर्य्यो ब्ब्रह्मणे देवेब्भ्योऽप्प्रतिप्प्रोच्च्याश्श्वम्ब-द्ध्नाति 'ब्ब्रह्मन्नश्श्वम्भन्त्स्यामि[3] देवेब्भ्यः प्प्रजापतये तेन राद्ध्यास'मिति ब्ब्रह्माणमामन्त्रयते ब्ब्रह्मण ऽएवैनम्प्रति-प्प्रोच्च्य बद्ध्नाति नार्त्तिमार्च्छति 'तम्बधान[4] देवेब्भ्यः प्प्रजापतये तेन राद्ध्नुही'ति ब्ब्रह्मा प्प्रसौति स्वयैवैनन्देवतया समर्द्धयत्त्यथ प्प्रोक्षत्त्यसावेव बन्धुः ॥ ४ ॥ स प्प्रोक्षति । 'प्प्रजापतये[5] त्वा जुष्टम्प्रोक्षामी'ति प्प्रजापतिर्व्वै देवानां व्वीर्य्य-वत्तमो व्वीर्य्यमेवास्म्मिन्दधाति तस्म्मादश्श्वः पशूनां व्वीर्य्य-वत्तमः ॥५॥ 'इन्द्राग्ग्निब्भ्यां[6]न्त्वा जुष्टम्प्रोक्षामी'ति। इन्द्राग्ग्नी वै देवानामोजस्वितमा ऽओज ऽएवास्म्मिन्दधाति तस्म्मा-दश्श्वः पशूनामोजस्वितमः ॥ ६ ॥ 'वायवे[7] त्वा जुष्टम्प्रो-क्षामी'ति । वायुर्व्वै देवानामाशिष्ठो जवमेवास्म्मिन्दधाति तस्म्मादश्श्वः पशूनामाशिष्ठः ॥ ७ ॥ 'विश्श्वेब्भ्यस्त्वा देवेब्भ्यो जुष्टम्प्रोक्षामी'ति । विश्श्वे वै देवा देवानां य्यशस्वितमा यश ऽएवास्म्मिन्दधाति तस्म्मादश्श्वः पशूनां य्यशस्वितमः 'सर्व्वेब्भ्यस्त्वा देवेब्भ्यो जुष्टम्प्रोक्षामी'ति ॥ ८ ॥ तदाहुः । यत्प्राजापत्त्योऽश्श्वोऽथ कथाप्प्यन्न्याब्भ्यो

(१) शु० य० सं० २२. ४। (२) शु० य० सं० २२. ४। (३) शु० य० सं० २२. ४। (४) शु० य० सं० २२. ४। (५) शु० य० सं० २२. ५। (६) शु० य० सं० २२. ५। (७) शु० य० सं० २२. ५। (८) शु० य० सं० २२. ५। (९) शु० य० सं० २२. ५।

देवताभ्यः प्रोक्षतीति सर्व्वा वै देवता ऽअश्वमेधेऽन्न्वायत्ता यदाह सर्व्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामीति सर्व्वा ऽएवाऽस्मिन्देवता ऽअन्न्वायातयति तस्मादश्वमेधे सर्व्वा देवता ऽअन्न्वायत्ताः पाप्प्मा वा ऽएतम्भ्रातृव्य ऽईप्प्सति योऽश्वमेधेन यजते वज्ज्रोऽश्वः 'परो मर्त्तः परः श्वे'ति श्वानञ्चतुरक्षः हत्वाधस्प्पदमश्वस्योपप्प्लावयति वज्ज्रेणैवैनमवक्क्रामति नैनम्पाप्प्मा भ्रातृव्य ऽआप्प्नोति ॥ ९ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सहस्रमाहुतयः ]

यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यन्निक्तमनालब्धमुत्सृजन्ति यत्स्तोकीया जुहोति सर्व्वहुतमेवैनञ्जुहोत्यस्कन्दायास्कन्नः हि तद्यद्धुतस्य स्कन्दति सहस्रञ्जुहोति सहस्रसम्मितो वै स्वर्ग्गो लोकः स्वर्ग्गस्य लोकस्याभिजित्यै ॥ १ ॥ तदाहुः । यन्मिता जुहुयात्परिमितमवरुन्धीतेत्यमिता जुहोत्यपरिमितस्यैवावरुद्ध्या ऽउवाच ह प्प्रजापति स्तोकीयासु वा ऽअहमश्वमेधः सꣳस्थापयामि तेन सꣳस्थितेनैवात ऽऊर्द्ध्वञ्चरामीति ॥ २ ॥ 'अग्न्नये स्वाहे'ति । अग्न्नय ऽएवैनञ्जुहोति 'सोमाय स्वाहे'ति सोमायैवैनञ्जुहो'त्यपाम्मोदाय

(१) शु० य० सं० २२. ५। (२) शु० य० सं० २२. ६। (३) शु० य० सं० २२. ६। (४) शु० य० सं० २२. ६।

स्वाहे'त्यग्नय ऽएवैनञ्जुहोति '[1]सवित्रे स्वाहे'ति सवित्र ऽएवैनञ्जुहोति '[2]वायवे स्वाहे'ति वायव ऽएवैनञ्जुहोति '[3]विष्णवे स्वाहे'ति विष्णव ऽएवैनञ्जुहोती'[4]न्द्राय स्वाहे'-तीन्द्रायैवैनञ्जुहोति '[5]बृहस्पतये स्वाहे'ति बृहस्पतय ऽएवै-नञ्जुहोति '[6]मित्राय स्वाहे'ति मित्रायैवैनञ्जुहोति '[7]वरुणाय स्वाहे'ति वरुणायैवैनञ्जुहोत्येतावन्तो वै सर्व्वे देवास्तेभ्य ऽएवैनञ्जुहोति पराचीर्ज्जुहोति पराङिव वै स्वर्ग्गो लोकः स्वर्ग्गस्य लोकस्याभिजित्यै ॥ ३ ॥ ईश्वरो वा ऽएषः । पराङ् प्रदघोऽर्य्यः पराचीराहुतीर्ज्जुहोति पुनरावर्त्ततेऽस्मि-न्नेव लोके प्रतितिष्ठत्येताᳪं ह वाव स यज्ञस्य सᳪंस्थिति-मुवाचास्कन्दायास्कन्नᳪं हि तद्यद्धुतस्य स्कन्दति ॥ ४ ॥ यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यत्प्रोक्षितमनालब्धमुत्सृजन्ति यद्रूपाणि जुहोति सर्व्व-हुतमेवैनञ्जुहोत्यस्कन्दायास्कन्नᳪं हि तद्यद्धुतस्य स्कन्दति '[8]हिङ्काराय स्वाहा हिङ्कृताय स्वाहे'त्येतानि वा ऽअश्वस्य रूपाणि तान्येवावरुन्द्धे ॥ ५ ॥ तदाहुः । अनाहुतिर्व्वै रूपाणि नैता होतव्या ऽइत्यथो खल्वाहुरत्र वा ऽअश्व-मेधः सन्तिष्ठते यद्रूपाणि जुहोति होतव्या ऽएवेति बहिर्द्धा वा ऽएतमायतनात्करोति भ्रातृव्यमस्मै जन-यति यस्यानायतनेऽन्यत्राग्नेराहुतीर्ज्जुहोति ॥ ६ ॥ सावित्र्या

(१) शु० य० सं० २२. ६ । (२) शु० य० सं० २२. ६ । (३) शु० य० सं० २२. ६ । (४) शु० य० सं० २२. ६ । (५) शु० य० सं० २२. ६ । (६) शु० य० सं० २२. ६ ।
(७) शु० य० सं० २२. ६ । (८) शु० य० सं० २२. ७ ।

ऽएवेष्टेः । पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोत्यायतन ऽएवाहुतीर्जुहोति नास्मै भ्रातृव्यञ्जनयति यज्ञमुखे यज्ञमुखे जुहोति यज्ञस्य सन्तत्या ऽअव्यवच्छेदाय ॥ ७ ॥ तदाहुः । यद्यज्ञमुखे यज्ञमुखे जुहुयात्पशुभिर्व्यृध्येत पापीयान्त्स्यात्सकृदेव होतव्या न पशुभिर्व्यृध्यते न पापीयान्भवत्यष्टाचत्वारिंशतञ्जुहोत्यष्टाचत्वारिंशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्द्ध ऽएकमतिरिक्तञ्जुहोति तस्मादेकः प्रजास्वर्द्धुकः ॥ ८ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ सावित्र्य इष्टयः ]

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत्स दिशोऽनुप्राविशत्तन्देवाः प्रैषमैच्छँस्तमिष्टिभिरनुप्रायुञ्जत तमिष्टिभिरन्वैच्छँस्तमिष्टिभिरन्वविन्दन्यदिष्टिभिर्यजतेऽश्वमेव तन्मेध्यं यजमानोऽन्विच्छति ॥ १ ॥ सावित्र्यो भवन्ति । इयं वै सविता यो वा ऽअस्यान्निलयते योऽन्यत्रेत्यस्यां वाव तमनुविन्दन्ति न वा ऽइमाङ्कश्चन तिर्यङ्नोर्ध्वोऽत्येतुमर्हति यत्सावित्र्यो भवन्त्यश्वस्यैवानुवित्त्यै ॥ २ ॥ तदाहुः । प्र वा ऽएतदश्वो मीयते यत्पराङेति न ह्येनम्प्रत्यावर्त्तयन्तीति यत्सायन्धृतीर्जुहोति क्षेमो वै धृतिः क्षेमो रात्रिः क्षेमेणैवैनन्दाधार तस्मात्सायम्मनुष्याश्च पशवश्च क्षेम्या भवन्त्यथ यत्प्रातरिष्टि-

भिर्यजत ऽइच्छन्त्येवैनन्तत्तस्माद्दिवा नष्टैष ऽएति यद्व सायन्धृतीर्जुहोति प्रातरिष्टिभिर्यजते योगक्षेममेव तद्यजमानः कल्पयते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ गाथागानम् ]

अप वा ऽएतस्मात् । श्री राष्ट्रङ्क्रामति योऽश्वमेधेन यजते यदा वै पुरुषः श्रियङ्गच्छति वीणास्मै वाद्यते ब्राह्मणौ वीणागाथिनौ सँवत्सरङ्गायतः श्रियै वा ऽएतद्रूपं यद्वीणा श्रियमेवास्मिँस्तद्धत्तः ॥ १ ॥ तदाहुः । यदुभौ ब्राह्मणौ गायेतामपास्मात्क्षत्रङ्क्रामेद्ब्रह्मणो वा ऽएतद्रूपं यद्ब्राह्मणो न वै ब्रह्मणि क्षत्रँ रमत ऽइति ॥ २ ॥ यदुभौ राजन्यौ । अपास्माद्ब्रह्मवर्चसङ्क्रामेत्क्षत्रस्य वा ऽएतद्रूपं यद्राजन्यो न वै क्षत्रे ब्रह्मवर्चसँ रमत ऽइति ब्राह्मणोऽन्यो गायति राजन्योऽन्यो ब्रह्म वै ब्राह्मणः क्षत्रँ राजन्यस्तदस्य ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवति ॥ ३ ॥ तदाहुः । यदुभौ दिवा गायेताम्प्रभ्रँशुकास्माच्छ्रीः स्याद्ब्रह्मणो वा ऽएतद्रूपं यदहर्यदा वै राजा कामयतेऽथ ब्राह्मणञ्जिनाति पापीयाँस्तु भवति ॥ ४ ॥ यदुभौ नक्तम् । अपास्माद्ब्रह्मवर्चसङ्क्रामेत्क्षत्रस्य वा ऽएतद्रूपं यद्रात्रिर्न वै क्षत्रे

ब्ब्रह्मवर्च्चसꣳ रमत ऽइति दिवा ब्ब्राह्मणो गायति नक्तꣳ राजन्न्यस्तथो हास्य ब्ब्रह्मणा च क्षत्त्रेण चोभयतः श्रीः परिगृहीता भवतीति ॥ ५ ॥ अयजतेत्यददादिति ब्ब्राह्मणो गायतीष्टापूर्त्तं वै ब्ब्राह्मणस्येष्टापूर्त्तेनैवैनꣳ स समर्द्धयतीत्ययुद्ध्यतेत्यमुꣳ सङ्ग्राममजयदिति राजन्न्यो युद्धं वै राजन्न्यस्य व्वीर्य्यं व्वीर्य्येणैवैनꣳ स समर्द्धयति तिस्रोऽन्न्यो गाथा गायति तिस्रोऽन्न्यः षट् सम्पद्यन्ते षड्ऋतवः सँव्वत्सर ऽऋतुष्ष्वेव सँव्वत्सरे प्प्रतितिष्ठति ताब्भ्याꣳ शतन्ददाति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ ६ ॥

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ अश्वकर्णे जपः, धृतिहोमश्च ]

'व्विभू[1]र्म्मात्रा प्प्रभूः पित्रे'ति। इयं वै मातासौ पिताब्भ्यामेवैनम्परिददा'त्यश्श्वो[2]ऽसि हयोऽसी'ति शास्त्येवैनन्तत्तस्माच्छिष्टाः प्प्रजा जायन्ते'ऽत्यो[3]ऽसि मयोऽसी'त्यत्येवैनन्नयति तस्मादश्श्वः पशूनत्त्येति तस्मादश्श्वः पशूनाꣳ श्रैष्ठ्यङ्गच्छ'त्यर्वासि[4] सप्तिरसि व्वाज्यसी'ति यथायजुरेवैत'द्वृ[5]षासि नृमणा ऽअसी'ति मिथुनत्त्वाय 'ययु[6]र्न्नामासि शिशुर्न्नामासी'त्येतद्वा ऽअश्श्वस्य प्प्रियन्नाम-

(१) शु० य० सं० २२. १९। (२) शु० य० सं० २२. १९। (३) शु० य० सं० २२. १९। (४) शु० य० सं० २२. १९। (५) शु० य० सं० २२. १९। (६) शु० य० सं० २२. १९।

धेयम्प्रियेणैवैनन्नाम्नाभिवदति तस्म्मादुप्प्यामित्रौ सङ्गत्य नाम्ना चेदभिवदतोऽन्न्योऽन्न्यᳯ समेव जानाते ॥ १ ॥ 'आदित्त्यानाम्पत्वान्न्विही'ति । आदित्त्यानेवैनङ्गमयति 'देवा ऽआशापाला ऽएतन्देवेब्भ्योऽश्श्वम्मेधाय प्प्रोक्षितᳯ रक्षते'ति शतं वै तल्प्या राजपुत्त्रा ऽआशापालास्तेब्भ्य ऽएवैनम्परिददाती'ह रन्तिरिह रमतामिह धृतिरिह स्वधृतिᳯ स्वाहे'ति सँव्वत्सरमाहुतीर्ज्जुहोति षोडश नवतीरेता वा ऽअश्श्वस्य बन्धनन्ताभिरेवैनम्बद्ध्नाति तस्म्मादश्श्वᳯ प्प्रमुक्तो बन्धनमागच्छति षोडश नवतीरेता वा ऽअश्श्वस्य बन्धनन्ताभिरेवैनम्बद्ध्नाति तस्म्मादश्श्वᳯ प्प्रमुक्तो बन्धनन्न जहाति ॥ २ ॥ राष्ट्रं वा ऽअश्श्वमेधᳯ । राष्ट्र ऽएते व्व्यायच्छन्ते येऽश्श्वᳯ रक्षन्ति तेषां य्य ऽउदृचङ्गच्छन्ति राष्ट्रेणैव ते राष्ट्रम्भवन्त्यथ ये नोदृचङ्गच्छन्ति राष्ट्रात्ते व्व्यवच्छिद्यन्ते तस्म्माद्राष्ट्रयश्श्वमेधेन यजेत परा वा ऽएष सिच्च्यते योऽबलोऽश्श्वमेधेन यजते यद्यमित्त्रा ऽअश्श्वं व्विन्देरन्यज्ञोऽस्य व्विच्छिद्येत पापीयान्स्याच्छतङ्कवचिनो रक्षन्ति यज्ञस्य सन्तत्या ऽअव्व्यवच्छेदाय न पापीयान्भवत्यथान्न्यमानीय प्प्रोक्षेयुᳯ सैव तत्र प्प्रायश्चित्तिᳯ ॥ ३ ॥

प्रथमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



(१) शु० य० सं० २२. १९। (२) शु० य० सं० २२. १९। (३) शु० य० सं० २२. १९।

[ औद्ग्रभणहोमः ]

प्रजापतिरकामयत । अश्वमेधेन यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य सप्तधात्मनो देवता ऽअपाक्रामन्त्सा दीक्षाभवत्स ऽएतानि वैश्वदेवान्यपश्यत्तान्यजुहोत्तैर्वै स दीक्षामवारुन्द्ध यद्वैश्वदेवानि जुहोति दीक्षामेव तैर्यजमानोऽवरुन्द्धेऽन्वहञ्जुहोत्यन्वहमेव दीक्षामवरुन्द्धे सप्त जुहोति सप्त वै ता देवता ऽअपाक्रामँस्ताभिरेवास्मै दीक्षामवरुन्द्धे ॥ १ ॥

अप वा ऽएतेभ्यः प्राणाः क्रामन्ति । ये दीक्षामतिरेचयन्ति सप्ताहम्प्रचरन्ति सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे त्रेधा विभज्य देवताञ्जुहोति त्र्यावृतो वै देवास्त्र्यावृत ऽइमे लोका ऽऋद्ध्यामेव वीर्य्य ऽएषु लोकेषु प्रतितिष्ठति ॥ २ ॥

एकविंशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविंशस्तद्दैवं क्षत्रं सा श्रीस्तदाधिपत्यन्तद्ब्रध्नस्य विष्टपन्तत्स्वाराज्यमश्नुते ॥ ३ ॥ त्रिंशतमौद्ग्रभणानि जुहोति । त्रिंशदक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै चत्वार्य्यौद्ग्रभणानि जुहोति त्रीणि वैश्वदेवानि सप्त सम्पद्यन्ते सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे पूर्णाहुतिमुत्तमाञ्जुहोति प्रत्युत्तब्ध्यै सयुक्त्वाय ॥ ४ ॥

प्रथमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

प्रजापतिरश्वमेधमसृजत । स सृष्टः प्प्रऽर्चमब्लीनात्स्र साम तं वैश्वदेवान्युदयच्छन्यद्वैश्वदेवानि जुहोत्यश्वमेधस्यैवोद्यत्यै ॥ १ ॥ '[1]काय स्वाहा । कस्मै स्वाहा कतमस्मै स्वाहे'ति प्प्राजापत्यम्मुख्यङ्करोति प्प्रजापतिमुखाभिरेवैनन्देवताभिरुद्यच्छति ॥ २ ॥ 'स्वाहा[2]धिमाधीताय स्वाहा । मनः प्प्रजापतये स्वाहा चित्तं विज्ञाताये'ति यदेव पूर्वासाम्ब्राह्मणन्तदत्र ॥ ३ ॥ 'अ[3]दित्यै स्वाहा । अदित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहे'तीयं वा ऽअदितिरनयैवैनमुद्यच्छति ॥ ४ ॥ 'सर[4]स्वत्यै स्वाहा । सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहे'ति वाग्वै सरस्वती वाचैवैनमुद्यच्छति ॥ ५ ॥ 'पू[5]ष्णे स्वाहा । पूष्णे प्प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहे'ति पशवो वै पूषा पशुभिरेवैनमुद्यच्छति ॥ ६ ॥ '[6]त्वष्ट्रे स्वाहा । त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहे'ति त्वष्टा वै पशूनाम्मिथुनानाꣳ रूपकृद्रूपैरेवैनमुद्यच्छति ॥ ७ ॥ 'वि[7]ष्णवे स्वाहा । विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहे'ति यज्ञो वै विष्णुर्यज्ञेनैवैनमुद्यच्छति '[8]विश्वो देवस्य नेतु'रिति पूर्णाहुतिमुत्तमाञ्जुहोतीयं वै पूर्णाहुतिरस्यामेवान्ततः प्प्रतितिष्ठति ॥ ८ ॥

प्रथमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥



(१) शु० य० सं० २२. २० । (२) शु० य० सं० २२. २० । (३) शु० य० सं० २२. २० । (४) शु० य० सं० २२. २० । (५) शु० य० सं० २२. २० । (६) शु० य० सं० २२. २० । (७) शु० य० सं० २२. २० । (८) शु० य० सं० २२. २१ ।

[ अध्वर्युकर्तृकजपः ]

'ओं ब्ब्रह्मन् । ब्राह्मणो ब्ब्रह्मवर्च्चसी जायता'मिति ब्ब्राह्मण ऽएव ब्ब्रह्मवर्च्चसन्दधाति तस्म्मात्पुरा ब्ब्राह्मणो ब्ब्रह्मवर्च्चसी जज्ञे ॥ १ ॥ 'ओं राष्ट्रे राजन्न्यः । शूर ऽइषव्व्योऽतिव्व्याधी महारथो जायता'मिति राजन्न्य ऽएव शौर्य्यम्महिमानन्दधाति तस्म्मात्पुरा राजन्न्यः शूर ऽइषव्व्योऽतिव्व्याधी महारथो जज्ञे ॥ २ ॥ 'दोग्ध्री धेनु'-रिति । धेन्न्वामेव पयो दधाति तस्म्मात्पुरा धेनुर्दोग्ग्ध्री जज्ञे ॥ ३ ॥ 'व्वोढानड्वा'निति । अनडुह्येव बलन्दधाति तस्म्मात्पुरानड्वान्न्वोढा जज्ञे ॥ ४ ॥ 'आशुः सप्ति'रिति । अश्श्व ऽएव जवन्दधाति तस्म्मात्पुराश्श्वः सप्तिर्ज्जज्ञे ॥ ५ ॥ 'पुरन्धिर्य्योषे'ति । योषित्येव रूपन्दधाति तस्म्मा-द्रूपिणी युवतिः प्प्रिया भावुका ॥ ६ ॥ 'जिष्णू रथेष्ठा' ऽइति । राजन्न्य ऽएव जैत्रम्महिमानन्दधाति तस्म्मात्पुरा राजन्न्यो जिष्णुर्ज्जज्ञे ॥ ७ ॥ 'सभेयो युवे'ति । एष वै सभेयो युवा यः प्प्रथमवयसी तस्म्मात्प्रथमवयसी स्त्रीणा-म्प्रियो भावुकः ॥ ८ ॥ 'आऽस्य यजमानस्य वीरो जायता'-मिति । यजमानस्यैव प्प्रजायां व्वीर्य्यन्दधाति तस्म्मात्पुरेजा-नस्य वीरो जज्ञे ॥९॥ [अर्धः प्रपाठकः ॥५४॥] 'निकामे-निकामे नः पर्ज्जन्न्यो व्वर्षत्वि'ति । निकामे-निकामे वै तत्र पर्ज्जन्न्यो

(१) शु० य० सं० २२.२२। (२) शु० य० सं० २२.२२। (३) शु० य० सं० २२.२२। (४) शु० य० सं० २२.२२। (५) शु० य० सं० २२.२२। (६) शु० य० सं० २२.२२। (७) शु० य० सं० २२.२२। (८) शु० य० सं० २२.२२। (९) शु० य० सं० २२.२२। (१०) शु० य० सं० २२.२२।

वर्षति यत्रैतेन यज्ञेन यजन्ते 'फलवत्यो न ऽओषधयः पच्यन्ता'मिति फलवत्यो वै तत्रौषधयः पच्यन्ते यत्रैतेन यज्ञेन यजन्ते 'योगक्षेमो नः कल्पता'मिति योगक्षेमो वै तत्र कल्पते यत्रैतेन यज्ञेन यजन्ते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति ॥ १० ॥

प्रथमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

[ आज्यसक्तुधानालाजहोमः ]

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स ऽआत्मन्न-श्वमेधमधत्त ते देवाः प्रजापतिमब्रुवन्नेष वै यज्ञो यद-श्वमेधोऽपि नोऽत्रास्तु भाग ऽइति तेभ्य ऽएतानन्न-होमानकल्पयद्यदन्नहोमाञ्जुहोति देवानेव तत्प्रीणाति ॥१॥ आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्मिँस्तत्तेजो दधात्याज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्य-म्प्रियेणैवैनान्धाम्ना समर्द्धयति ॥ २ ॥ सक्तुभिर्जुहोति । देवानां वा ऽएतद्रूपं यत्सक्तवो देवानेव तत्प्रीणाति ॥ ३ ॥ धानाभिर्जुहोति । अहोरात्राणां वा ऽएतद्रूपं यद्धाना ऽअहोरात्राण्येव तत्प्रीणाति ॥ ४ ॥ लाजैर्जुहोति । नक्षत्राणां वा ऽएतद्रूपं यल्लाजा नक्षत्राण्येव तत्प्रीणाति 'प्राणाय स्वाहापानाय स्वाहे'ति नामग्राहञ्जुहोति नाम-

(१) शु० य० सं० २१. २२ । (२) शु० य० सं० २२. २२ । (३) शु० य० सं० २२. २३. ।

ग्ग्राहमेवैनाँस्तत्प्रीणा'त्येकस्मै स्वाहा द्वाभ्याथं स्वाहा शताय स्वाहैकशताय स्वाहे'त्यनुपूर्व्वञ्जुहोत्यनुपूर्व्वमेवैनाँस्त- त्प्रीणात्येकोत्तरा जुहोत्येकवृद्वै स्वर्ग्गो लोक ऽएकधैवैनथं स्वर्ग्गँल्लोकङ्गमयति पराचीर्ज्जुहोति पराङिव वै स्वर्ग्गो लोकः स्वर्ग्गस्य लोकस्याभिजित्यै ॥५॥ ईश्वरो वा ऽएषः । पराङ् प्रदघोर्ष्यः पराचीराहुतीर्ज्जुहोति नैकशतमत्येति यदेक- शतमतीयादायुषा यजमानं व्यर्द्धयेदेकशतञ्जुहोति शता- युर्वै पुरुष ऽआत्मैकशत आयुष्येवात्मन्प्रतितिष्ठति 'व्युष्टयै स्वाहा स्वर्ग्गाय स्वाहे'त्युत्तमे ऽआहुती जुहोति रात्रिर्वै व्युष्टिरहः स्वर्ग्गोऽहोरात्रे ऽएव तत्प्रीणाति ॥ ६ ॥ तदाहुः । यदुभे दिवा वा नक्तं वा जुहुयादहोरात्रे मोहये- द्व्युष्टयै स्वाहेत्यनुदित ऽआदित्ये जुहोति स्वर्ग्गाय स्वा- हेत्युदितेऽहोरात्रयोरव्यतिमोहाय ॥ ७ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पर्यङ्ग्यपशुनिरूपणम् ]

राजा वा ऽएष यज्ञानां यदश्वमेधः । यजमानो वा ऽअश्वमेधो यजमानो यज्ञो यदश्वे पशून्नियुनक्ति यज्ञ ऽएव तद्यज्ञमारभते ॥ १ ॥ अश्वन्तूपरङ्गोमृगमिति । तान्मद्ध्यमे यूप ऽआलभते सेनामुखमेवास्यैतेन सथंश्यति तस्माद्राज्ञः सेनामुखम्भीष्ममम्भावुकम् ॥ २ ॥ कृष्ण- ग्ग्रीवमाग्नेयथं रराटे पुरस्तात् । पूर्वाग्निमेव तत्कुरुते

(१) शु० य० सं० २२. ३४ । (२) शु० य० सं० २२. ३४ ।

तस्माद्राजः पूर्वाग्निर्भावुकः ॥ ३ ॥ सारस्वतीम्मेषीमधस्ताद्धन्वोः । स्त्रीरेव तदनुगाः कुरुते तस्मात्स्त्रियः पुꣳसोऽनुवर्त्मानो भावुकाः ॥ ४ ॥ आश्विनावधोरामौ बाह्वोः । बाह्वोरेव बलन्धत्ते तस्माद्राजा बाहुबली भावुकः ॥ ५ ॥ सौमापौष्णꣳ श्यामन्नाभ्याम् । प्रतिष्ठामेव ताङ्कुरुत ऽइयं वै पूषास्यामेव प्प्रतितिष्ठति ॥ ६ ॥ सौर्य्ययामौ श्वेतञ्च कृष्णञ्च पार्श्वयोः । कवचे ऽएव ते कुरुते तस्माद्राजा सन्नद्धो वीर्य्यङ्करोति ॥७॥ त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । ऊर्वोरेव बलन्धत्ते तस्माद्राजोरुबली भावुकः ॥ ८ ॥ वायव्यꣳ श्वेतम्पुच्छे । उत्सेधमेव तङ्कुरुते तस्मादुत्सेधम्प्रजा भयेऽभिसꣳश्रयन्तीन्द्राय स्वपस्याय वेहतं यज्ञस्य सेन्द्रतायै वैष्णवो वामनो यज्ञो वै विष्णुर्यज्ञ ऽएवान्ततः प्प्रतितिष्ठति ॥ ९ ॥ ते वा ऽएते । पञ्चदश पर्य्यङ्ग्याः पशवो भवन्ति पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ १० ॥ पञ्चदश—पञ्चदशो ऽएवेतरेषु । पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानोऽभितः पाप्मानमपहते ॥ ११ ॥ तदाहुः । अपाहैवैतैः पाप्मानꣳ हता ऽइत्यकृत्स्नञ्च त्वै प्प्रजापतिꣳ संस्करोति न चेदꣳ सर्वमवरुन्द्धे ॥ १२ ॥ सप्तदशैव * पशून्मध्यमे यूप ऽआलभेत । सप्तदशो वै प्प्रजापतिः

---

* त्रयोऽश्वतूपरगोमृगाः द्वौ चाग्नेयावेकादशिनौ द्वादश रोहितादयः, एवं सप्तदश पशवो मध्यमे यूपे भवन्ति ।

प्प्रजापतिरश्श्वमेधोऽश्श्वमेधस्यैवाप्प्त्यै षोडश—षोडशेतरेषु षोडशकलं व्वा ऽइदꣳ सर्व्वन्तदिदꣳ सर्व्वमवरुन्द्धे ॥ १३ ॥ ताङ्कथमाप्प्रीणीयादित्त्याहुः । 'समिद्धो ऽअञ्जन्कृदरम्मतीना'मिति बार्हदुक्क्थीभिराप्प्रीणीयाद्वृहदुक्क्थो ह व्वै व्वामदेव्व्योऽश्श्वो वा सामुद्रिरश्श्वस्याप्प्रीर्हदर्श ता ऽएतास्ताभिरेवैनमेतदाप्प्रीणीम ऽइति व्वदन्तो न तथा कुर्य्याज्जामदग्ग्नीभिरेवाप्प्रीणीयात्प्रजापतिर्व्वै जमदग्ग्निः सोऽश्श्वमेधः स्वयैवैनन्देवतया समर्द्धयति तस्म्माज्जामदग्ग्नीभिरेवाप्प्रीणीयात् ॥ १४ ॥ तद्धैके । एतेषाम्पर्य्यङ्ग्याणान्नाना याज्यापुरोऽनुवाक्क्याः कुर्व्वन्ति व्विन्दाम ऽएतेषामवित्त्येतरेषान्न कुर्म्म ऽइति न तथा कुर्य्यात्क्षत्त्रं व्वा ऽअश्श्वो व्विडितरे पशवः प्प्रतिप्प्रतिनीꣳ ह ते प्प्रत्युद्यामिनीङ्क्षत्त्राय व्विशङ्कुर्व्वन्त्यथो ऽआयुषा यजमानं व्व्यर्द्धयन्ति ये तथा कुर्व्वन्ति तस्म्मात्प्राजापत्त्य ऽएवाश्श्वो देवदेवत्त्या ऽइतरे क्षत्त्रायैव तद्विशङ्कृतानुकरामनुवर्त्मानङ्करोत्त्यथो ऽआयुषैव यजमानꣳ समर्द्धयति ॥ १५ ॥ हिरण्मयोऽश्श्वस्य शासो भवति । लोहमयाः पर्य्यङ्ग्याणामायसा ऽइतरेषाञ्ज्योतिर्व्वै हिरण्यꣳ राष्ट्रमश्श्वमेधो ज्ज्योतिरेव तद्राष्ट्रे दधात्त्यथो हिरण्यज्ज्योतिषैव यजमानः स्वर्ग्गँल्लोकमेत्त्यथो ऽअनूकाशमेव तङ्कुरुते स्वर्ग्गस्य लोकस्य समष्ट्यै ॥ १६ ॥ अथो क्षत्त्रं व्वा ऽअश्श्वः । क्षत्त्रस्यैतद्रूपं यद्धिरण्यं क्षत्त्रमेव तत्क्षत्त्रेण समर्द्धयति ॥ १७ ॥ अथ

(१) शु० य० सं० २९. १ ।

यल्लोहमयाः परुर्षङ्ग्याणाम् । यथा वै राज्ञोऽराजानो राज-कृतः सूतग्रामण्य ऽएवं वा ऽएतेऽश्वस्य यत्परुर्षङ्ग्या ऽएवमु वा ऽएतद्धिरण्यस्य यल्लोहꣳ स्वेनैवैनाँस्तद्रूपेण समर्द्धयति ॥ १८ ॥ अथ यदायसा ऽइतरेषाम् । विड्वा ऽइतरे पशवो विश ऽएतद्रूपं यदयो विशमेव तद्विशा समर्द्धयति वैतस ऽइटसून ऽउत्तरतोऽश्वस्यावद्यन्त्या-नुष्टुभो वा ऽअश्व ऽआनुष्टुभैषा दिक्स्वायामेवैनन्तद्दिशि दधात्यथ यद्वैतस ऽइटसूनेऽप्सुयोनिर्वा ऽअश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्द्धयति ॥ १९ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ उद्गात्रन्वारम्भः ]

देवा वा ऽअश्वमेधे पवमानम् । स्वर्ग्गँल्लोकन्न प्प्राजानँस्तमश्वः प्प्राजानाद्यदश्वमेधेऽश्वेन पवमानाय सर्प्पन्ति स्वर्ग्गस्य लोकस्य प्प्रज्ञात्यै पुच्छमन्वारभन्ते स्वर्ग्गस्यैव लोकस्य समष्ट्यै न वै मनुष्यः स्वर्ग्गँल्लोक-मञ्जसा वेदाश्वो वै स्वर्ग्गँल्लोकमञ्जसा वेद ॥ १ ॥ यदुद्गा-तोद्गायेत् । यथाक्षेत्रज्ञोऽन्येन पथा नयेत्तादृक्तदथ यदु-द्गातारमपरुध्याश्वमुद्गीथाय व्वृणीते यथा क्षेत्रज्ञोऽञ्जसा नयेदेवमेवैतद्यजमानमश्वः स्वर्ग्गँल्लोकमञ्जसा नयति हिङ्करोति सामैव तद्धिङ्करोत्युद्गीथ ऽएव स वडवा ऽउप-

( १ ) 'व' इति 'ग' 'ज' पुस्तकयोः ।

रुन्धन्ति सꣳशिञ्जते यथोपगातार ऽउपगायन्ति तादृक्त-द्धिरण्यन्दक्षिणा सुवर्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥२॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ ग्राम्यपश्वालम्भः, आरण्यपशूनामुत्सर्गश्च ]

प्रजापतिरकामयत । उभौ लोकावभिजयेयन्देवलोकञ्च मनुष्यलोकञ्चेति स ऽएतान्पशूनपश्यद्ग्राम्म्याँश्चारण्याँश्च तानालभत तैरिमौ लोकाववारुन्ध ग्राम्म्यैरेव पशुभिरिमँल्लोकमवारुन्धारण्यैरमुमयं वै लोको मनुष्यलोकोऽथासौ देवलोको यद्ग्राम्म्यान्पशूनालभत ऽइममेव तैर्ल्लोकं यजमानोऽवरुन्द्धे यदारण्यानमुन्तैः ॥१॥ स यद्ग्राम्म्यैः सꣳस्थापयेत् । समद्धानः क्रामेयुः समन्तिकङ्ग्रामयोर्ग्रामान्तौ स्यातान्नऽर्क्षीकाः पुरुषव्याघ्राः परिमोषिण ऽआव्याधिन्न्यस्तस्करा ऽअरण्येष्वाजायेरन्यदारण्यैर्व्व्युद्धानः क्रामेयुर्व्विदूरङ्ग्रामयोर्ग्रामान्तौ स्यातामृक्षीकाः पुरुषव्याघ्राः परिमोषिण ऽआव्याधिन्न्यस्तस्करा ऽअरण्येष्वाजायेरन् ॥ २ ॥ तदाहुः । अपशुर्व्वा ऽएष यदारण्यो नैतस्य होतव्यं यज्जुहुयात्क्षिप्रं यजमानमरण्यम्मृतꣳ हरेयुररण्यभागा ह्यारण्याः पशवो यन्न जुहुयाद्यज्ञवेशसꣳ स्यादिति पर्य्यग्निकृतानेवोत्सृजन्ति तन्नैव हुतन्नाहुतन्न यजमानमरण्यम्मृतꣳ हरन्ति न यज्ञवेशसम्भवति ॥ ३ ॥ ग्राम्म्यैः सꣳस्थापयति । विपितापुत्रावुवस्यतः समद्धानः क्रामन्ति समन्तिकङ्ग्राम-

योग्ग्रामान्तौ भवतो नऽर्क्षीकाः पुरुषव्व्याग्घ्राः परिमोषिण ऽआव्व्याधिन्न्यस्तस्कराऽअरण्ण्येष्व्वाजायन्ते ॥ ४ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ पञ्चैकादशिनी ]

प्रजापतिरश्श्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत्स पङ्क्तिर्ब्भूत्त्वा सँव्वत्सरम्प्राविशत्तेऽर्द्धमासाऽअभवँस्तम्पञ्चदशिभिरनुप्प्रायुङ्क्त तमाप्नोत्तमाप्प्त्वा पञ्चदशिभिरवारुन्द्धार्द्धमासानां व्वाऽएषा प्रतिमा यत्पञ्चदशिनो यत्पञ्चदशिनऽआलभतेऽर्द्धमासानेव तैर्य्यजमानोऽवरुन्द्धे ॥ १ ॥ तदाहुः । अनवरुद्धो वाऽएतस्य सँव्वत्सरो भवति योऽन्न्यत्र चातुर्म्मास्येभ्यः सँव्वत्सरन्तनुतऽइत्त्येष वै साक्षात्सँव्वत्सरो यच्चातुर्म्मास्यानि यच्चातुर्म्मास्यान्पशूनालभते साक्षादेव तत्सँव्वत्सरमवरुन्द्धे वि वाऽएष प्रजया पशुभिर्र्ऋद्ध्यतेऽप स्वर्ग्गँल्लोकः राद्ध्नोति योऽन्न्यत्रैकादशिनेभ्यः सँव्वत्सरन्तनुतऽइत्त्येष वै सम्प्रति स्वर्ग्गो लोको यदेकादशिनी प्रजा वै पशवऽएकादशिनी यदैकादशिनान्पशूनालभते न स्वर्ग्गँल्लोकमपराद्ध्नोति न प्रजया पशुभिर्व्व्यृद्ध्यते ॥ २ ॥ प्रजापतिर्व्विराजमसृजत । सास्मात्सृष्टा पराच्च्यैत्साश्श्वम्मेद्धम्प्राविशत्तान्दशिभिरनुप्प्रायुङ्क्त तामाप्नोत्तामाप्प्त्वा दशिभिरवारुन्द्ध यद्दशिनऽआलभते विराजमेव तैर्य्यजमानोऽवरुन्द्धे शतमालभते शतायुर्वै पुरुषः शतेन्द्रियऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ ३ ॥

एकादश दशत ऽआलभते । एकादशाक्षरा वै त्रिष्टुबि-न्द्रियमु वै वीर्य्यन्त्रिष्टुबिन्द्रियस्यैव वीर्य्यस्यावरुद्ध्या ऽएकादश दशत ऽआलभते दश वै पशोः प्प्राणा ऽआत्मै-कादशः प्प्राणैरेव पशून्त्समर्द्धयति वैश्श्वदेवा भवन्ति वैश्श्वदेवो वा ऽअश्श्वोऽश्श्वस्यैव सर्व्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नाना-रूपाः पशवः ॥ ४ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ अश्श्वस्य नियोजनाञ्जनमणिबन्धनादि ]

'युञ्जन्ति ब्ब्रध्नमरुषञ्चरन्त'मिति । असौ वा ऽआ-दित्यो ब्ब्रध्नोऽरुषोऽमुमेवास्म्मा ऽआदित्यं य्युनक्ति स्वर्ग्गस्य लोकस्य समष्ट्यै ॥ १ ॥ तदाहुः । पराङ्वा ऽए-तस्माद्यज्ञ ऽएति यस्य पशुरुपाकृतोऽन्न्यत्र व्वेदेरेती'त्येतछं[2] स्तोतरनेन पथा पुनरश्श्वमावर्त्तयासि न' ऽइति व्वायुर्व्वै स्तोता तमेवास्म्मा ऽएतत्परस्ताद्दधाति तथा नात्येति ॥२॥ अप वा ऽएतस्म्मात् । तेज ऽइन्द्रियम्पशवः श्रीः क्रामन्ति योऽश्श्वमेधेन यजते ॥ ३ ॥ 'व्वसवस्त्वाञ्जन्तु[3] । गायत्रेण च्छन्दसे'ति महिष्ष्यभ्यनक्ति तेजो वा ऽआज्यन्तेजो गायत्री तेजसी ऽएवास्मिन्न्त्समीची दधाति ॥ ४ ॥ 'रुद्रास्त्वा-ञ्जन्तु । त्रैष्टुभेन च्छन्दसे'ति व्वावाता तेजो वा ऽआज्य-

(१) शु० य० सं० २३. ५। (२) शु० य० सं० २३. ७। (३) शु० य० सं० २३. ८। (४) शु० य० सं० २३. ८।

मिन्द्रियन्त्रिष्टुप्प्तेजश्चैवास्मिन्निन्द्रियञ्च समीची दधाति ॥ ५ ॥ 'आदित्यास्त्वाञ्जन्तु । जागतेन च्छन्दसे'ति परिवृक्ता तेजो वा ऽआज्यम्पशवो जगती तेजश्चैवास्मिन्पशूँश्च समीची दधाति ॥ ६ ॥ पत्न्योऽभ्यञ्जन्ति * । श्रियै वा ऽएतद्रूपं यत्पत्न्यः श्रियमेवास्मिँस्तद्दधति नास्मात्तेज ऽइन्द्रियम्पशवः श्रीरपक्रामन्ति ॥ ७ ॥ यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यस्य निक्तस्य लोमानि शीयन्ते यत्काचानावयन्ति लोमान्येवास्य सम्भरन्ति हिरण्मया भवन्ति तस्योक्तम्ब्राह्मणमेकशतमेकशतङ्काचानावयन्ति शतायुर्वै पुरुष ऽआत्मैकशत ऽआयुष्येवात्मन्प्रतितिष्ठति 'भूर्भुवः स्व'रिति प्राजापत्याभिरावयन्ति प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयन्ति 'लाजी३ञ्छाची३न्यशो ममां३' ऽइत्यतिरिक्तमन्नमश्वायोपावहरति प्रजामेवान्नादीङ्कुरुत 'ऽएतदन्नमत्त देवा ऽएतदन्नमद्धि प्रजापत' ऽइति प्रजामेवान्नाद्येन समर्द्धयति ॥ ८ ॥ अप वा ऽएतस्मात् । तेजो ब्रह्मवर्चसङ्क्रामति योऽश्वमेधेन यजते होता च ब्रह्मा च ब्रह्मोद्यं वदत ऽआग्नेयो वै होता बार्हस्पत्यो ब्रह्मा ब्रह्म बृहस्पतिस्तेजश्चैवास्मिन्ब्रह्मवर्चसञ्च समीची धत्तो यूपमभितो वदतो यजमानो वै यूपो यजमानमेवैतत्तेजसा

(१) शु० य० सं० २३. ८।
* का० श्रौ० सू० २०. ५. १५।
(२) शु० य० सं० २३. ८। (३) शु० य० सं० २३. ८। (४) शु० य० सं० २३. ८।

च ब्ब्रह्मवर्च्चसेन चोभयतः परिधत्तः ॥ ९ ॥ 'कः[1] स्विदेकाकी चरती'ति । असौ वा ऽआदित्य ऽएकाकी चरत्त्येष ब्ब्रह्मवर्च्चसम्ब्रह्मवर्च्चसमेवास्मिँस्तद्धत्तः ॥ १० ॥ 'कः[2] ऽउ स्विज्जायते पुन'रिति । चन्द्रमा वै जायते पुनरायुरेवास्मिँस्तद्धत्तः ॥ ११ ॥ 'किँ[3] स्विद्धिमस्य भेषज'मिति । अग्निर्वै हिमस्य भेषजन्तेज ऽएवास्मिँस्तद्धत्तः ॥ १२ ॥ * 'किम्[4] वावपनम्महद्'दिति । अयं वै लोक ऽआवपनम्महदस्मिन्नेव लोके प्प्रतितिष्ठति ॥ १३ ॥ 'का[5] स्विदासीत्पूर्व्वचित्ति'रिति । द्यौर्वै व्वृष्टिः पूर्व्वचित्तिर्द्दिवमेव व्वृष्टिमवरुन्द्धे ॥ १४ ॥ 'किँ[6] स्विदासीद्बृहद्वय' ऽइति । अश्वो वै बृहद्वय ऽआयुरेवावरुन्द्धे ॥ १५ ॥ 'काँ[7] स्विदासीत्पिलिप्पिले'ति । श्रीर्वै पिलिप्पिला श्रियमेवावरुन्द्धे ॥१६॥ 'का[8] स्विदासीत्पिशङ्गिले'ति अहोरात्रे वै पिशङ्गिले ऽअहोरात्रयोरेव प्रतितिष्ठति ॥ १७ ॥

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १०८ ॥



(१) शु० य० सं० २३. ९। (२) शु० य० सं० २३. ९। (३) शु० य० सं० २३. ९।

* अत्र शतम् ६५००।

(४) शु० य० सं० २३. ९। (५) शु० य० सं० २३. ११। (६) शु० य० सं० २३. ११। (७) शु० य० सं० २३. ११। (८) शु० य० सं० २३. ११।

[ अश्वस्य प्रोक्षणादि ]

नियुक्तेषु पशुषु । प्प्रोक्षणीरद्ध्वर्य्युरादत्तेऽश्श्वम्प्रोक्षिष्ष्यन्नन्न्वारब्धे यजमान ऽआद्ध्वरिकं य्यजुरनुद्रुत्याश्श्वमेधिकं य्यजुः प्प्रतिपद्यते ॥ १ ॥ 'व्वायुष्ट्वा पचतैरवत्त्वि'ति । व्वायुरेवैनम्पच'त्त्यसितग्ग्रीवश्छागै'रित्त्यग्निर्व्वा ऽअसितग्ग्रीवोऽग्निरेवैनञ्छागैः पचति ॥ २ ॥ 'न्यग्ग्रोधश्चमसै'रिति । यत्र वै देवा यज्ञेनायजन्त त ऽएताँश्चमसान्न्यौब्जँस्ते न्न्यञ्चोऽरोहँस्तस्मान्न्यञ्चो न्न्यग्ग्रोधा रोहन्ति ॥ ३ ॥ 'शल्ल्मलिर्व्वृद्ध्ये'ति । शल्म्मलौ व्वृद्धिन्दधाति तस्म्माच्छल्म्मलिर्व्वनस्प्पतीनां व्वर्षिष्ठं व्वर्द्धते ॥४॥ 'एष स्य रात्थ्यो व्वृषे'ति । अश्श्वेनैव रथः सम्पादयति तस्म्मादश्श्वो नान्यद्रथाद्वहति ॥ ५ ॥ 'पड्भिश्चतुर्भिरेदग'न्निति । तस्म्मादश्श्वस्त्रिभिस्तिष्ठँस्तिष्ठत्त्यथ युक्तः सर्व्वैः पद्भिः समम्मायुते ॥ ६ ॥ 'ब्रह्माकृष्णणश्च नोऽवत्वि'ति । चन्द्रमा वै ब्रह्माकृष्णणश्चन्द्रमस ऽएवैनम्परिददाति 'नमोऽग्नय' ऽइत्त्यग्नय ऽएव नमस्क्करोति ॥ ७ ॥ 'सँशितो रश्म्मिना रथ' ऽइति । रश्म्मिनैव रथः सम्पादयति तस्म्माद्रथः परुयुतो दर्शनीयतमो भवति ॥ ८ ॥ 'सँशितो रश्म्मिना हय' ऽइति । रश्म्मिनैवाश्श्वः सम्पादयति तस्म्मादश्श्वो रश्म्मिना प्प्रतिहतो भूयिष्ठः रोचते ॥ ९ ॥ 'सँशितो

---

(१) शु० य० सं० २३. १३ । (२) शु० य० सं० २३. १३ । (३) शु० य० सं० २३. १३ । (४) शु० य० सं० २३. १३ । (५) शु० य० सं० २३. १३ । (६) शु० य० सं० २३. १३ । (७) शु० य० सं० २३ १३ । (८) शु० य० सं० २३. १३ । (९) शु० य० २३. १४ । (१०) शु० य० सं० २३. १४ । (११) शु० य० सं० २३. १४ ।

ऽअप्स्वप्सुजा' ऽइति । अप्सुयोनिर्वा ऽअश्वः स्वयैवैनं योन्या समर्द्धयति 'ब्रह्मा सोमपुरोगव' ऽइति सोमपुरोगवमेवैनꣳ स्वर्गँल्लोकङ्गमयति ॥१०॥ 'स्वयं वाजिँस्तन्वङ्कल्पयस्वे'ति । स्वयꣳ रूपङ्कुरुष्व यादृशमिच्छसीत्येवैनन्तदाह 'स्वयं यजस्वे'ति स्वाराज्यमेवास्मिन्दधाति 'स्वयञ्जुषस्वे'ति स्वयँल्लोकꣳ रोचयस्व यावन्तमिच्छसीत्येवैनन्तदाह 'महिमा तेऽन्येन न सन्नश' ऽइत्यश्वमेव महिम्ना समर्द्धयति ॥११॥ 'न वा ऽउ ऽएतन्म्रियसे न रिष्यसी'ति । प्राश्वासयत्येवैनन्त'न्देवाँ२॥ ऽइदेषि पथिभिः सुगेभि'रिति देवयानानेवैनम्पथो दर्शयति 'यत्रासते सुकृतो यत्र ते ययु'रिति सुकृद्भिरेवैनꣳ सलोकङ्करोति 'तत्र त्वा देवः सविता दधात्वि'ति सवितैवैनꣳ स्वर्गे लोके दधाति 'प्रजापतये त्वा जुष्टम्प्रोक्षामी'त्युपाꣳश्वथोपगृह्णाति ॥ १२ ॥ 'अग्निः पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्नग्निः स ते लोको भविष्यति तञ्जेष्यसि पिबैता ऽअप' ऽइति यावानग्नेर्विजयो यावाँल्लोको यावदैश्वर्यन्तावाँस्ते विजयस्तावाँल्लोकस्तावदैश्वर्यम्भविष्यतीत्येवैनन्तदाह ॥ १३ ॥ 'वायुः पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्वायुः स ते लोको भविष्यति तञ्जेष्यसि पिबैता

(१) शु० य० सं० २३. १४। (२) शु० य० सं० २३. १५। (३) शु० य० सं० २३. १५। (४) शु० य० सं० २३. १५। (५) शु० य० सं० २३. १५। (६) शु० य० सं० २३. १६। (७) शु० य० सं० २३. १६। (८) शु० य० सं० २३. १६। (९) शु० य० सं० २३. १६। (१०) शु० य० सं० २२. ५। (११) शु० य० सं० २३. १७। (१२) शु० य० सं० २३. १७।

ऽअप' ऽइति यावान्वायोर्व्विजयो यावाँल्लोको यावदैश्वर्य्यं-
न्तावाँस्ते विजयस्तावाँल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्त्ये-
वैनन्तदाह ॥ १४ ॥ 'सूर्य्यः[1] पशुरासीत् । तेनायजन्त स
ऽएतँल्लोकमजयद्यस्मिन्त्सूर्य्यः स ते लोको भविष्यति
तञ्जेष्यसि पिबैता ऽअप' ऽइति यावान्त्सूर्य्यस्य विजयो
यावाँल्लोको यावदैश्वर्य्यन्तावाँस्ते विजयस्तावाँल्लोकस्ता-
वदैश्वर्य्यम्भविष्यतीत्त्येवैनन्तदाह तर्प्पयित्वाऽश्वम्पुनः सं-
स्कृत्य प्प्रोक्षणीरितरान्पशून्प्प्रोक्षति तस्यातः ॥ १५ ॥

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ मृतस्याऽश्वस्य परिक्रमणादि ]

देवा वा ऽउदश्वः । स्वर्ग्गँल्लोकन्न प्प्राजानँस्तमश्वः
प्प्राजानाद्यदश्वेनोदञ्चो यन्ति स्वर्ग्गस्य लोकस्य प्प्रज्ञात्त्यै
व्वासोऽधिवासः हिरण्यमित्त्यश्वायोपस्तृणन्ति यथा
नान्न्यस्मै पशवे तस्मिन्नेनमधि संज्ञपयन्त्त्यन्न्यैरेवैनन्तत्पशु-
भिर्व्व्याकुर्व्वन्ति ॥१॥ घ्नन्ति वा ऽएतत्पशुम् । यदेनः संज्ञपय-
न्ति 'प्प्राणाय[2] स्वाहापानाय स्वाहा व्व्यानाय स्वाहे'ति संज्ञ-
प्प्यमान ऽआहुतीर्ज्जुहोति प्प्राणानेवास्मिन्नेतद्दधाति तथो
हास्यैतेन जीवतैव पशुनेष्टम्भवति ॥२॥ 'अम्बे[3] * ऽअम्बिकेऽ-
म्बालिके । न मा नयति कश्चने'ति पत्नीरुदानयत्त्यहूतै-

(१) शु० य० सं० २३. १७ । (२) शु० य० सं० २३. १८ । (३) शु० य० सं० २३. १८ ।

* 'आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालिकेऽम्बिके पूर्वे' (पा० सू० ६. १. ११८) इति प्रकृतिभावः ।

वैना ऽएतद्दुथो मेखल्या ऽएवैनाः करोति ॥ ६ ॥ 'गणाना-न्त्वा गणपतिꣳ हवामह' ऽइति । पत्न्यः परियन्त्यपह्नुवत ऽएवास्मा ऽएतद्दतो न्न्येवास्म्मै ह्नुवतेऽथो धुवत ऽएवैनन्त्रिः परियन्ति त्रयो वा ऽइमे लोका ऽएभिरेवैनँ-ल्लोकैर्द्धुवते त्रिः पुनः परियन्ति षट् सम्पद्यन्ते षड्वा ऽऋतव ऽऋतुभिरेवैनन्धुवते ॥ ४ ॥ अप वा ऽएतेब्भ्यः प्प्राणाः क्क्रामन्ति । ये यज्ञे धुवनन्तन्न्वते नव कृत्वः परि-यन्ति नव वै प्प्राणाः प्प्राणानेवात्मन्दधते नैब्भ्यः प्प्राणा ऽअपक्क्रामन्त्या'हमजानि गब्भधमात्वमजासि गब्भध'मिति प्प्रजा वै पशवो गब्भः प्प्रजामेव पशूनात्मन्धत्ते 'तौ ऽउभौ चतुरः पदः सम्प्रसारयावे'ति मिथुनस्यावरुद्ध्यै 'स्वर्ग्गे लोके प्प्रोर्ण्णुवाथा'मित्येष वै स्वर्ग्गो लोको यत्र पशुꣳ संज्ञपयन्ति तस्म्मादेवमाह 'व्वृषा वाजी रेतोधा रेतो दधात्वि'ति मिथुनस्यैवावरुद्ध्यै ॥ ५ ॥

द्वितीयाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

[ संवादः ]

अप वा ऽएतस्म्मात् । श्री राष्ट्रङ्क्रामति योऽश्श्वमेधेन यजते ॥ १ ॥ 'ऊर्द्ध्वामेनामुच्छ्रापये'ति । श्श्रीर्वै राष्ट्रमश्श्व-मेधः श्रियमेवास्म्मै राष्ट्रमूर्द्ध्वमुच्छ्रयति ॥ २ ॥ 'गिरौ

(१) शु० य० सं० २३. १९ । (२) शु० य० सं० २३. १९ । (३) शु० य० सं० २३. २० । (४) शु० य० सं० २३. २० । (५) शु० य० सं० २३. २० । (६) शु० य० सं० २३, २६ । (७) शु० य० सं० २३. २६ ।

भारꣳ हरन्निवे'ति । श्रीर्वै राष्ट्रस्य भारः श्रियमेवास्मै राष्ट्रꣳ सन्नह्यत्यथो श्रियमेवास्मिन्नराष्ट्रमधिनिदधाति ॥ ३ ॥ '[1]अथास्यै मद्ध्यमेधता'मिति । श्रीर्वै राष्ट्रस्य मद्ध्यꣳ श्रियमेव राष्ट्रे मद्ध्यतोऽन्नाद्यन्दधाति ॥ ४ ॥ 'शीते [2]वाते पुनन्निवे'ति । क्षेमो वै राष्ट्रस्य शीतं क्षेममेवास्मै करोति ॥ ५ ॥ '[3]यकासकौ शकुन्तिके'ति । विड्वै शकुन्तिका'[4]हलगिति वञ्चती'ति विशो वै राष्ट्राय वञ्चन्त्या'[5]हन्ति गभे पसो निगल्गलीति धारके'ति विड्वै गभो राष्ट्रम्पसो † राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ६ ॥ '[6]माता च ते पिता च त' ऽइति । इयं वै मातासौ पिताभ्यामेवैनꣳ स्वर्ग्गँल्लोकङ्गमयत्य'[7]ग्रं वृक्षस्य रोहत' ऽइति [8]श्रीर्वै राष्ट्रस्याग्रꣳ श्रियमेवैनꣳ राष्ट्रस्याग्रङ्गमयति '[9]प्रतिलामीति ते पिता गभे मुष्टिमतꣳसय'दिति विड्वै गभो राष्ट्रम्मुष्टी राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ७ ॥ '[10]यद्धरिणो यवमत्ती'ति विड्वै यवो राष्ट्रꣳ हरिणो विशमेव राष्ट्रायाद्याङ्करोति तस्माद्राष्ट्री विशमत्ति 'न [11]पुष्टम्पशु मन्न्यत' ऽइति तस्माद्राजा पशून्न पुष्यति 'शूद्रा यदर्य्यजारा *

(१) शु० य० सं० २३. २६ । (२) शु० य० सं० २३. २६ । (३) शु० य० सं० २३. २२ । (४) शु० य० सं० २३. २२ । (५) शु० य० सं० २३. २२ ।

† 'पस इति पसतेः स्पृशतिकर्मणः' ( निरु० ५. १६ ) इति यास्कः ।

(६) शु० य० सं० २३. २४ । (७) शु० य० सं० २३. २४ । (८) शु० य० सं० २३. २४ । (९) शु० य० सं० २३. ३० ।

(१०) शु० य० सं० २३. ३० । (११) शु० य० सं० २३. ३० ।

* 'अर्यः स्वामिवैश्ययोः' ( पा० ३. १. १०३ ) इति निपातनादर्यो वैश्यो जार उपपतिर्यस्याः सा अर्यजारा ।

न पोषाय धनायती'ति तस्माद्वैशीपुत्रन्नाभिषिञ्चति ॥ ८ ॥ अप वा ऽएतेब्भ्यः प्प्राणाः क्क्रामन्ति । ये यज्ञेऽपूतां व्वाचं व्वदन्ति 'दधिक्क्राव्णो ऽअकारिष'मिति सुरभिमतीमृचमन्ततोऽन्वाहुर्व्वाचमेव पुनते नैब्भ्यः प्प्राणा ऽअपक्क्रामन्ति ॥ ९ ॥

द्वितीयाध्याये नवमं ब्राह्मणम् ॥ ९ ॥



[ अश्वशरीरे सूचीभिर्वितोदः ]

यदसिपथान्न्कल्प्पयन्ति । सेतुमेव तत् सङ्क्क्रमणं य्यजमानः कुरुते स्वर्ग्गस्य लोकस्य समष्ट्यै ॥१॥ सूचीभिः कल्प्पयन्ति । व्विशो वै सूच्च्यो राष्ट्रमश्श्वमेधो व्विशञ्चैवास्मिन्राष्ट्रञ्च समीची दधति हिरण्मय्यो भवन्ति तस्योक्तम्ब्राह्मणम् ॥ २ ॥ त्रय्यः सूच्च्यो भवन्ति । लोहमय्यो रजता हरिण्ण्यो दिशो वै लोहमय्योऽवान्तरदिशो रजता ऽऊर्द्ध्वा हरिण्ण्यस्ताभिरेवैनङ्कल्प्पयन्ति तिरश्चीभिश्चोर्द्ध्वाभिश्च बहुरूपा भवन्ति तस्माद्बहुरूपा दिशो नानारूपा भवन्ति तस्मान्नानारूपा दिशः ॥ ३ ॥

द्वितीयाध्याये दशमं ब्राह्मणम् ॥ १० ॥



(३) शु० य० सं० २३. ३२।
(४) 'ग' 'ज' पुस्तकयोः "हिरण्यमय्यो" इति पाठः ।

[ परिपशव्याहुती ]

प्रजापतिरकामयत । महान्भूयान्त्स्यामिति स ऽएतावश्श्वमेधे महिमानौ ग्ग्रहावपश्श्यत्तावजुहोत्ततो वै स महान्भूयानभवत्स यः कामयेत महान्भूयान्त्स्यामिति स ऽएतावश्श्वमेधे महिमानौ ग्ग्रहौ जुहुयान्महान्हैव भूयान्भवति ॥ १ ॥ वपामभितो जुहोति । यजमानो वा ऽअश्श्वमेधो राजा महिमा राज्ज्येनैवैनमुभयतः परिगृह्णाति पुरस्तात्स्वाहाकृतयो वा ऽअन्न्ये देवा ऽउपरिष्टात्स्वाहाकृतयोऽन्न्ये तानेवैतत्प्रीणाति 'स्वाहा देवेब्भ्यो देवेब्भ्यः स्वाहे'ति राज्ञा वपाम्परियजति ये चैवास्मिँल्लोके देवा य ऽउ चामुष्मिँस्तानेवैतत्प्रीणाति त ऽएनमुभये देवाः प्प्रीताः स्वर्ग्गँल्लोकमभिवहन्ति ॥ २ ॥

द्वितीयाध्याये एकादशं ब्राह्मणम् ॥ ११ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ अश्वस्यावदानम् ]

प्रजापतेरक्ष्यश्श्वयत् । तत्परापतत्ततोऽश्श्वः समभवद्यदश्श्वयत्तदश्श्वस्याश्श्वत्त्वन्तद्देवा ऽअश्श्वमेधेनैव प्प्रत्यदधुरेष ह वै प्प्रजापतिः सर्वङ्करोति योऽश्श्वमेधेन यजते सर्व ऽएव भवति सर्वस्य वा ऽएषा प्प्रायश्चित्तिः सर्वस्य भेषजं सर्वं वा ऽएतेन पाप्पमानन्देवा ऽअतरन्नपि वा ऽएतेन ब्रह्महत्यामतरँस्तरति सर्वम्पाप्पमानन्तरति ब्रह्महत्यां

(१) शु० य० सं० ६. ११ ।

स्योऽश्वमेधेन यजते ॥ १ ॥ उत्तरं वै तत्प्रजापतेरक्ष्य-श्वयत् । तस्मादुत्तरतोऽश्वस्यावद्यन्ति दक्षिणतोऽन्येषा-म्पशूनाम् ॥ २ ॥ वैतसः कटो भवति । अप्सुयोनिर्वा ऽअश्वोऽप्सुजा वेतसः स्वयैवैनं स्योन्या समर्द्धयति ॥ ३ ॥ चतुष्टोम स्तोमो भवति । सरङ्घा ऽअश्वस्य सक्क्थ्याबृहत्तद्देवाश्चतुष्टोमेनैव स्तोमेन प्रत्यदधुर्यच्च-तुष्टोम स्तोमो भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमोऽति-रात्र ऽउत्तममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्व-मश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ वपाप्रचारः ]

परमेण वा ऽएष स्तोमेन जित्वा । चतुष्टोमेन कृते-नायानामुत्तरेऽहन्नेकविꣳशे प्रतिष्ठायाम्प्रतितिष्ठत्येकविꣳ-शात्प्रतिष्ठाया ऽउत्तरमहर्ऋतूनन्वारोहत्यृतवो वै पृष्ठा-न्यृतवः सँवत्सर ऽऋतुष्वेव सँवत्सरे प्रतितिष्ठति ॥ १ ॥ शाक्वर्यः पृष्ठम्भवन्ति । अन्यदन्यच्छन्दोऽन्येऽन्ये वा ऽअत्र पशव ऽआलभ्यन्त ऽउतेव ग्राम्या ऽउतेवारण्या यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वायान्ये पशव ऽआलभ्यन्तेऽन्येऽन्ये हि स्तोमाः क्रियन्ते ॥ २ ॥ तदाहुः । नैते सर्वे पशवो यदजावयश्चारण्याश्चैते वै सर्वे पशवो यद्गव्या ऽइति गव्यानुत्तमेऽहन्नालभत

(१) "गव्या ऽउत्तमे०" इति 'ग' 'ज' पुस्तकयोः पाठः ।

ऽएते वै सर्वे पशवो यद्गव्याः सर्वानेव पशूनालभते वैश्वदेवा भवन्ति वैश्वदेवो वा ऽअश्वोऽश्वस्यैव सर्वत्त्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः ॥ ३ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ यूपैकविंशतिः ]

यत्तिस्रोऽनुष्टुभो भवन्ति । तस्मादश्वस्त्रिभिस्तिष्ठँस्तिष्ठति यच्चतस्रो गायत्र्यस्तस्मादश्वः सर्वैः पद्भिः प्रतिदधत्पलायते परमं वा ऽएतच्छन्दो यदनुष्टुप्परमोऽश्वः पशूनाम्परमश्चतुष्टोम स्तोमानाम्परमेणैवैनम्परमताङ्गमयति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति । अन्यदन्यच्छन्दोऽन्येऽन्ये हि स्तोमाः क्रियन्ते यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्त्वाय ॥ १ ॥ एकविंशम्मध्यममहर्भवति । असौ वा ऽआदित्य ऽएकविंशः सोऽश्वमेधः स्वेनैवैनथं स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति ॥ ३ ॥ वामदेव्यम्मैत्रावरुणसाम भवति । प्रजापतिर्वै वामदेव्यम्प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयति ॥४॥ पार्थुरश्मम्ब्रह्मसाम भवति । रश्मिना वा ऽअश्वो यत ऽईश्वरो वा ऽअश्वोऽयतोऽधृतोऽप्रतिष्ठितः परान्परावतङ्गन्तोर्यत्पार्थुरश्मम्ब्रह्मसाम भवत्यश्वस्यैव धृत्यै ॥ ५ ॥ सङ्कृत्यच्छावाकसाम भवति । उत्सन्नयज्ञ ऽइव वा ऽएष यदश्वमेधः किं वा ह्येतस्य क्रियते किं वा न यत्स-

ङ्क्त्यच्छावाकसाम भवत्यश्श्वस्यैव सर्वत्त्वाय सर्वस्तोमोऽ-
तिरात्र ऽउत्तममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः
सर्वमश्श्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ६ ॥ एक-
विꣳशोऽग्निर्भवति । एकविꣳश स्तोम ऽएकविꣳशति-
र्यूपा यथा वा ऽऋषभा वा वृषाणो वा सꣳस्फुरेरन्नेव-
मेते स्तोमाः समृच्छन्ते यदेकविꣳशास्तान्न्यत्समर्प्पयेदा-
र्त्तिमार्च्छेद्यजमानो हन्न्येतास्य यज्ञः ॥ ७ ॥ द्वादश ऽए-
वाग्निः स्यात् । एकादश यूपा यद्द्वादशोऽग्निर्भवति द्वादश
मासाः सँवत्सरः सँवत्सरमेव यज्ञमाप्नोति यदेकादश
यूपा विराड्वा ऽएषा सम्मीयते यदेकादशिनी तस्यै य
ऽएकादश स्तन ऽएवास्यै स दुह ऽएवैनान्तेन ॥ ८ ॥
तदाहुः । यद्द्वादशोऽग्निः स्यादेकादश यूपा यथा स्थूरिणा
यायात्तादृक्तदित्येकविꣳश ऽएवाग्निर्भवत्येकविꣳश स्तोम
ऽएकविꣳशतिर्यूपास्तद्यथा प्रष्टिभिर्यायात्तादृक्तत् ॥ ९ ॥
शिरो वा ऽएतद्यज्ञस्य यदेकविꣳशः । यो वा ऽअश्श्वमेधे
त्त्रीणि शीर्षाणि वेद शिरो ह राज्ञाम्भवत्येकविꣳशोऽग्नि-
र्भवत्येक विꣳश स्तोम ऽएकविꣳशतिर्यूपा ऽएतानि वा
ऽअश्श्वमेधे त्त्रीणि शीर्षाणि तानि य ऽएवं वेद शिरो
ह राज्ञाम्भवति यो वा ऽअश्श्वमेधे तिस्त्रः ककुदो वेद
ककुद्ध राज्ञाम्भवत्यकविꣳशोऽग्निर्भवत्येकविꣳश स्तोम
ऽएकविꣳशतिर्यूपा ऽएता वा ऽअश्श्वमेधे तिस्त्रः ककुदस्ता
य ऽएवं वेद ककुद्ध राज्ञाम्भवति ॥ १० ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अश्वस्य लोहितश्रपणादि ]

सर्वाभ्यो वै देवताभ्योऽश्व ऽआलभ्यते । यत्प्राजापत्यङ्कुर्य्याद्या देवता ऽअपिभागास्ता भागधेयेन व्यर्द्धये 'च्छादन्दद्भिरवकान्दन्तमूलै'रित्याज्यमवदाना कृत्वा प्रत्याख्यायन्देवताभ्य ऽआहुतीर्ज्जुहोति या ऽएव देवता ऽअपिभागास्ता भागधेयेन समर्द्धयत्यरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिञ्जुहोति द्यावापृथिव्योर्वै सर्वा देवताः प्रतिष्ठितास्ता ऽएवैतत्प्रीणाति देवासुराः संयत्ता ऽआसन् ॥ १ ॥ तेऽब्रुवन् । अग्नयः स्विष्टकृतोऽश्वस्य वयमुद्धारमुद्धरामहै तेनासुरानभिभविष्याम ऽइति ते लोहितमुदहरन्त भ्रातृव्याभिभूत्यै यत्स्विष्टकृद्भ्यो लोहितञ्जुहोति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य ऽएवं वेद ॥ २ ॥ गोमृगकण्ठेन प्रथमामाहुतिञ्जुहोति । पशवो वै गोमृगा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्द्दधाति तस्माद्यत्रैषाऽश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ३ ॥ अश्वशफेन द्वितीयामाहुतिञ्जुहोति । पशवो वा ऽएकशफा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्द्दधाति तस्माद्यत्रैषाऽश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ४ ॥ अयस्मयेन चरुणा तृतीयामाहुतिञ्जुहोति । आयस्या[2] वै प्रजा रुद्रः स्विष्टकृत्प्रजा ऽएव रुद्रादन्तर्द्दधाति तस्माद्य-

---

( १ ) शु० य० सं० २५. १ ।
( २ ) "आयस्यो" इति 'ग' 'ज' पुस्तकयोः पाठः ।

त्रैषाऽश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः प्रजा ऽअभि-मन्न्यते ॥ ५ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

—०—

[ अश्वमेधेनापमृत्युनिरासः ]

सर्वेषु वै लोकेषु । मृत्यवोऽन्न्वायत्तास्तेब्भ्यो यदा-हुतीर्न्न जुहुयाल्लोके लोक ऽएनम्मृत्युर्विन्देद्यन्न्मृत्युब्भ्य ऽआहुतीर्ज्जुहोति लोके लोक ऽएव मृत्युमपजयति ॥ १ ॥

तदाहुः । यदमुष्म्मै स्वाहामुष्म्मै स्वाहेति जुह्वत्सञ्चक्षीत बहुम्मृत्युममित्रङ्कुर्वीत मृत्यव ऽआत्मानमपिदद्ध्यादिति 'मृत्यवे स्वाहे'त्येकस्म्मा ऽएवैकामाहुतिञ्जुहोत्येको ह वा ऽअमुष्मिँ-ल्लोके मृत्युरशनायैव तमेवामुष्मिँल्लोकेऽपजयति ॥२॥ [ अर्धः प्रपाठकः कण्डिकाः ५९ ] 'ब्रह्महत्यायै स्वाहे'ति द्वितीयामाहुति-ञ्जुहोति । अमृत्युर्ह वा ऽअन्न्यो ब्ब्रह्महत्यायै मृत्युरेष ह वै साक्षान्न्मृत्युर्यद्ब्रह्महत्या साक्षादेव मृत्युमपजयति ॥ ३ ॥

एताᳬ ह वै मुण्डिभ ऽऔदन्न्यः । ब्रह्महत्यायै प्प्रायश्चित्तिं विदाञ्चकार यद्ब्रह्महत्याया ऽआहुतिञ्जुहोति मृत्युमेवाहुत्या तर्प्पयित्वा परिपाणङ्कृत्वा ब्ब्रह्मघ्ने भेषजङ्करोति तस्म्मा-द्यस्यैषाश्श्वमेध ऽआहुतिर्हूयतेऽपि योऽस्यापरीषु प्प्रजाया-म्ब्राह्मणᳬ हन्ति तस्म्मै भेषजङ्करोति ॥ ४ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

—०—

(१) शु० य० सं० ३९.१३ । (२) शु० य० सं० ३९.१३ ।

[ अश्वस्तोमीयहोमः ]

अश्श्वस्य वा ऽआलब्धस्य । मेध ऽउदक्क्रामत्तदश्श्वस्तोमीयमभवद्यदश्श्वस्तोमीयञ्जुहोत्यश्श्वमेव मेधसा समर्द्धयति ॥ १ ॥ आज्येन जुहोति । मेधो वा ऽआज्यम्मेधोऽश्श्वस्तोमीयम्मेधसैवास्मिँमस्तन्मेधो दधात्याज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्यम्प्रियेणैवैनान्धाम्ना समर्द्धयति ॥ २ ॥ अश्श्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति । अश्श्वो वा ऽअश्श्वस्तोमीयम्पुरुषो द्विपदा द्विपाद्वै पुरुषो द्विप्प्रतिष्ठस्तदेनम्प्रतिष्ठया समर्द्धयति ॥ ३ ॥ तदाहुः । अश्श्वस्तोमीयम्पूर्वꣳ होतव्व्यां३ द्विपदा३ ऽइति पशवो वा ऽअश्श्वस्तोमीयम्पुरुषो द्विपदा यदश्श्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति तस्मात्पुरुष ऽउपरिष्टात्पशूनधितिष्ठति ॥ ४ ॥ षोडशाश्श्वस्तोमीया जुहोति । षोडशकला वै पशवः सा पशूनाम्मात्रा पशूनेव मात्रया समर्द्धयति यत्कनीयसीर्व्वा भूयसीर्व्वा जुहुयात्पशूश्मात्रया व्व्यर्द्धयेत्षोडश जुहोति षोडशकला वै पशवः सा पशूनाम्मात्रा पशूनेव मात्रया समर्द्धयति नान्न्यामुत्तमामाहुतिञ्जुहोति यदन्न्यामुत्तमामाहुतिञ्जुहुयात्प्रतिष्ठायै च्च्यवेत द्विपदा ऽउत्तमा जुहोति प्प्रतिष्ठा वै द्विपदाः प्प्रत्येव तिष्ठति 'जुम्बकाय स्वाहे'[1]त्यवभृथ ऽउत्तमामाहुतिञ्जुहोति वरुणो वै जुम्बकः साक्षादेव वरुणमवयजते शुक्क्लस्य खलतेर्व्विक्लिधस्य पिङ्गाक्षस्य मूर्द्धनि जुहोत्येतद्वै वरुणस्य रूपꣳ

(१) शु० य० सं० २५. ९।

रूपेणैव व्वरुणमवयजते ॥ ५ ॥ द्वादश ब्ब्रह्मौदनानुत्थाय निर्व्वपति । द्वादशभिर्व्वेष्टिभिरर्यजते तदाहुर्य्यज्ञस्य वा ऽएतद्रूपं ऽयदिष्टयो यदिष्टिभिर्य्यजेतोपनामुक ऽएनं ऽयज्ञः स्यात्पापीयाँस्तु स्याद्यातयामानि वा ऽएतदीजानस्य च्छन्दाᳬसि भवन्ति तानि किमेतावदाशु प्प्रयुञ्जीत सर्व्वा वै सᳬस्थिते यज्ञे व्वागाप्प्यते सात्राप्ता यातयाम्म्नी भवति क्क्रूरीकृतेव हि भवत्यरुष्कृता वाग्ग्वै यज्ञस्तस्मान्न प्प्रयुञ्जीतेति ॥ ६ ॥ द्वादशैव ब्ब्रह्मौदनानुत्थाय निर्व्वपेत् । प्रजापतिर्व्वा ऽओदनः प्प्रजापतिः सँव्वत्सरः प्प्रजापतिर्य्यज्ञः सँव्वत्सरमेव यज्ञमाप्नोत्युपनामुक ऽएनं ऽयज्ञो भवति न पापीयान्भवति ॥ ७ ॥

तृतीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

—०—

[ अश्वमेधमहिमा ]

एष वै प्प्रभूर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव प्प्रभूतम्भवति ॥ १ ॥ एष वै विभूर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्विभूतम्भवति ॥ २ ॥ एष वै व्व्यष्टिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्व्यष्टम्भवति ॥ ३ ॥ एष वै व्विधृतिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्विधृतम्भवति ॥ ४ ॥ एष वै व्व्यावृत्तिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्व्यावृत्तम्भवति ॥ ५ ॥ एष वा ऽऊर्ज्जस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेवोर्ज्जस्वद्भवति ॥ ६ ॥ एष वै

पयस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव पयस्वद्भवति ॥ ७ ॥ एष वै ब्ब्रह्मवर्च्चसी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ ब्ब्राह्मणो ब्ब्रह्मवर्च्चसी जायते ॥ ८ ॥ एष वा ऽअतिव्व्याधी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ राजन्न्योऽतिव्व्याधी जायते ॥ ९ ॥ एष वै दीर्ग्घो नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ दीर्ग्घारण्ण्यञ्जायते ॥ १० ॥ एष वै क्क्लृप्तिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव क्क्लृप्तम्भवति ॥ ११ ॥ एष वै प्प्रतिष्ठा नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव प्प्रतिष्ठितम्भवति ॥ १२ ॥

तृतीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

[ अश्वमेधप्रायश्चित्तम् ]

अथातः प्प्रायश्चित्तीनाम् । यद्यश्वो वडवाꣳ स्कन्देद्वायव्व्यम्पयोऽनुनिर्व्वपेद्वायुर्व्वै रेतसां विकर्त्ता प्प्राणो वै वायुः प्प्राणो हि रेतसां विकर्त्ता रेतसैवास्मिँस्तद्रेतो दधाति ॥ १ ॥ अथ यदि स्रामो विन्देत् । पौष्णञ्चरुमनुन्निर्व्वपेत्पूषा वै पशूनामीष्टे स यस्यैव पशवो यः पशूनामीष्टे तमेवैतत्प्रीणात्यगदो हैव भवति ॥ २ ॥ अथ यद्यक्षतामयो विन्देत् । वैश्वानरन्द्वादशकपालम्भूमिकपालम्पुरोडाशमनुनिर्व्वपेदियं वै वैश्वानर ऽइमामेवैतत्प्रीणात्यगदो हैव भवति ॥ ३ ॥ अथ यद्यक्ष्यामयो विन्देत् । सौर्य्यञ्चरुमनुनिर्व्वपेत्सूर्य्यो वै प्प्रजानाञ्चक्षुर्यदा ह्येवैष ऽउ-

देत्यथेदꣳ सर्वञ्चरति चक्षुषैवास्मिँस्तच्चक्षुर्दधाति स यच्च-रुर्भवति चक्षुषा ह्ययमात्मा चरति ॥ ४ ॥ अथ यद्युदके म्म्रियेत । व्वारुणं यवमयञ्चरुमनुनिर्व्वपेद्वरुणो वा ऽएत-ङ्गृह्णाति यो ऽप्सु म्म्रियते सा यैवैनन्देवता गृह्णाति तामे-वैतत्प्रीणाति सास्मै प्प्रीताऽयमालम्भायानुमन्यते तया-नुमतमालभते स यद्यवमयो भवति व्वरुण्या हि यवाः ॥ ५ ॥ अथ यदि नश्श्येत् । त्रिहविषमिष्टिमनुनिर्व्वपेद्-द्यावापृथिव्व्यमेककपालम्पुरोडाशं व्वायव्व्यम्पयः सौर्य्यञ्चरुं यद्वै किञ्च नश्श्यत्यन्तरैव तद्द्यावापृथिवी नश्श्यति तद्वायुरुपवात्यादित्योऽभितपति नैताभ्यो देवताभ्य ऽऋते किञ्चन नश्श्यति सैषा पृथगेव नष्टवेदनी स यद्यस्याप्य-न्यन्नश्श्येदेतयैव यजेतानु हैवैनद्विन्दत्यथ यद्यमित्रा ऽअश्श्वं विन्देरन्यदि वा म्म्रियेत यदि वाप्स्वन्यमानीय प्प्रोक्षेयुः सैव तत्र प्प्रायश्चित्तिः ॥ ६ ॥

तृतीयाध्याये ऽष्टमं ब्राह्मणम् ॥ ८ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

—०—

[ अश्वमेधारम्भकालादि ]

प्रजापतिरकामयत । सर्व्वान्कामानाप्नुयाꣳ सर्व्वा व्व्यष्टीर्व्व्यश्नुवीयेति स ऽएतमश्श्वमेधन्त्रिरात्रं यज्ञ-क्रतुमपश्श्यत्तमाहरत्तेनायजत तेनेष्ट्वा सर्व्वान्कामानाप्नो-त्सर्व्वा व्व्यष्टीर्व्व्याश्नुत सर्व्वान्ह वै कामानाप्नोति सर्व्वा व्व्यष्टीर्व्व्यश्नुते यो ऽश्श्वमेधेन यजते ॥ १ ॥ तदाहुः ।

कस्मिन्नृतावभ्यारम्भ ऽइति ग्ग्रीष्म्मेऽभ्यारभेतेत्त्यु हैक ऽआहुर्ग्ग्रीष्म्मो वै क्षत्रियस्यऽर्त्तुः क्षत्रिययज्ञ ऽउ वा ऽएष यदश्श्वमेध ऽइति ॥ २ ॥ तद्वै वसन्त ऽएवाब्भ्यारभेत । वसन्तो वै ब्ब्राह्मणस्यऽर्त्तुर्य्य ऽउ वै कश्च यजते ब्ब्राह्मणी-भूयेवैव यजते तस्म्माद्वसन्त ऽएवाब्भ्यारभेत ॥ ३ ॥ सा यासौ फाल्गुनी पौर्णमासी भवति । तस्यै पुरस्तात्षडहे वा सप्ताहे वऽर्त्विज ऽउपसमायन्त्यद्ध्वर्य्युश्च होता च ब्ब्रह्मा चोद्गाता चैतान्न्वा ऽअन्न्वन्न्य ऽऋत्विजः ॥ ४ ॥ तेब्भ्योऽद्ध्वर्य्युश्चातुष्प्राश्श्यम्ब्रह्मौदनन्निर्वपति । तस्योक्तम्ब्रा-ह्मणश्चतुरः पात्त्राँश्चतुरोऽञ्जलीँश्चतुरः प्प्रसृतान्द्वादशविध-न्द्वादश मासाः सँवत्त्सरः सर्व्वꣳ सँवत्त्सरः सर्व्वमश्श्वमेधः सर्व्वस्याप्प्त्यै सर्व्वस्यावरुद्ध्यै ॥ ५ ॥ तमेते चत्त्वार ऽऋत्विजः प्प्राश्श्नन्ति । तेषामुक्तम्ब्राह्मणन्तेब्भ्यश्चत्त्वारि सहस्राणि ददाति सर्व्वं वै सहस्रꣳ सर्व्वमश्श्वमेधः सर्व्वस्याप्प्त्यै सर्व्वस्यावरुद्ध्यै चत्त्वारि च सुवर्ण्णानि शतमानानि हि-रण्ण्यानि तस्यो ऽएवोक्तम् ॥ ६ ॥ अथास्म्मा ऽअद्ध्वर्य्यु-र्न्निष्क्कम्प्रतिमुञ्चन्न्वाचयति * । 'तेजोऽसि शुक्क्रममृत'[1]-मिति तेजो वै शुक्क्रममृतꣳ हिरण्ण्यन्तेज ऽएवास्मि-ञ्छुक्क्रममृतन्दधा'त्यायुष्प्पा ऽआयुर्म्मे पाही'[2]त्यायुरेवा-स्मिन्दधात्यथैनमाह व्वाचं य्यच्छेति व्वाग्वै यज्ञो यज्ञस्यै-

* 'निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति' (का० श्रौ० सू० २०. १. ९)। चतुःसुवर्ण-निर्मित आभरणविशेषो निष्कः।

(१) शु० य० सं० २२. १। (२) शु० य० सं० २२. १।

वाऽभ्यारम्भाय ॥७॥ चतस्रो जाया ऽउपक्लृप्ता भवन्ति ।
महिषी[१] वावाता परिवृक्ता पालागली सर्वा निष्किण्ण्यो[२]ऽल-
ङ्कृता मिथुनस्यैव सर्वत्त्वाय ताभिः सहाग्न्यगारम्प्रपद्यते
पूर्व्वया द्वारा यजमानो दक्षिणया पत्न्यः ॥ ८ ॥ साय-
माहुत्याᳫं हुतायाम् । जघनेन गार्हपत्यमुदङ्वावातया
सह संविशति तदेवापीतराः संविशन्ति सोऽन्तरोरू ऽअसं-
वर्त्तमानः शेतेऽनेन तपसा स्वस्ति सँवत्सरस्योदृचः सम-
श्नवा ऽइति ॥ ९ ॥ प्रातराहुत्याᳫं हुतायाम् । अध्वर्युः
पूर्ण्णाहुतिञ्जुहोति सर्व्वं वै पूर्ण्णᳫं सर्व्वमश्वमेधः सर्व्व-
स्याप्त्यै सर्व्वस्यावरुद्ध्यै तस्यां वरेण वाचं विसृजते * वर-
न्ददामि ब्रह्मण ऽइति सर्व्वं वै वरः सर्व्वमश्वमेधः सर्व्व-
स्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ १० ॥ † अथ योऽस्य निष्कः
प्रतिमुक्तो भवति । तमध्वर्यवे ‡ ददात्यध्वर्यवे ददमृत-
मायुरात्मन्धत्तेऽमृतᳫं ह्यायुर्हिरण्यम् ॥ ११ ॥ अथाग्ने-
यीमिष्टिन्निर्वपति । पथश्च कामाय यज्ञमुखस्य चाच्छ-
म्बट्कारायाथो ऽअग्निमुखा ऽउ वै सर्वा देवताः सर्वे
कामा ऽअश्वमेधे मुखतः सर्वान्देवान्प्रीत्वा सर्वान्कामाना-
प्नवानीति ॥ १२ ॥ तस्यै पञ्चदश सामिधेन्यो भवन्ति ।
पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानः

---

(१) महिषी = प्रथमपरिणीता स्त्री । वावाता = वल्लभा । परिवृक्ता=अवल्लभा । पालागली=दूतपुत्री

(२) 'निष्किन्न्यो०' इति 'ग' 'ज' पुस्तकयोः पाठः ।

* तथा चोक्तं सूत्रकृता—'आ वरदानाद्वाग्यमनम्' ( का० श्रौ० सू० २०।१।११ )।

† शतम् ६६०० ।

‡ 'अध्वर्यवे च प्रतिमुक्तं निष्कम्' ( का० श्रौ० सू० २०।१।२० )।

पुरस्तात्पाप्मानमपहते वार्त्रघ्नावाज्यभागौ पाप्मा वै व्वृत्रः पाप्मनोऽपहत्त्या 'ऽअग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या ऽअयम् ... 'रजसश्च नेते'त्युपाꣳशु हविषो याज्यानुवाक्क्ये मूर्द्धन्न्वत्यन्न्या भवति सद्वत्यद्ध्येष वै मूर्द्धा य ऽएष तपत्येतस्यैवावरुद्ध्या ऽअथ यत्सद्वती सदेवावरुन्द्धे विराजौ सँय्याज्ज्ये सर्व्वदेवत्त्यं व्वा ऽएतच्छन्दो यद्विराट् सर्व्वे कामा ऽअश्श्वमेधे सर्व्वान्देवान्प्रीत्त्वा सर्व्वाङ्कामानाप्नवानीति हिरण्यन्दक्षिणा सुवर्ण्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३ ॥ अथ पौष्णीन्निर्व्वपति । पूषा वै पथीनामधिपतिरश्श्वायैवैतत्स्वस्त्ययनङ्करोत्त्यथो ऽइयं व्वै पूषेमामेवास्म्मा ऽएतद्गोप्त्रीङ्करोति तस्य हि नार्त्तिरस्ति न ह्वला यमियमद्भ्द्गोपायतीमामेवास्म्मा ऽएतद्गोप्त्रीङ्करोति ॥ १४ ॥ तस्यै सप्तदश सामिधेन्न्यो भवन्ति । सप्तदशो वै प्प्रजापतिः प्प्रजापतिरश्श्वमेधोऽश्श्वमेधस्यैवाप्त्त्यै व्वृधन्न्वन्तावाज्यभागौ यजमानस्यैव व्वृद्ध्यै 'पूषँस्तव व्रते वयम्पथस्प्पथः परिपतिं व्वचस्ये'त्युपाꣳशु हविषो याज्यानुवाक्क्ये व्रतवत्यन्न्या भवति पथन्न्वत्यन्न्या व्वीर्य्यं वै व्रतं व्वीर्य्यस्याप्त्त्यै व्वीर्य्यस्यावरुद्ध्या ऽअथ यत्पथन्न्वत्यश्श्वायैवैतत्स्वस्त्ययनङ्करोत्त्यनुष्टुभौ सँय्याज्ज्ये व्वाग्वा ऽअनुष्टुब्वाग्वै प्प्रजापतिः प्प्रजापतिरश्श्वमेधोऽश्श्वमेधस्यैवाप्त्त्यै व्वासः शतन्दक्षिणा रूपं व्वा ऽएतत्पुरुषस्य यद्वासस्तस्म्माद्यमेव कञ्च सुवाससमाहुः को न्न्वयमिति रूपसमृद्धो हि भवति रूपेणैवैनꣳ

(१) शु० य० सं० १३. १४-१५। (२) शु० य० सं० ३४. ४१-४२।

समर्द्धयति शतम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयु-
रेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ १५ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ ब्राह्मणद्वयेन सावित्र्य इष्टयः, पारिप्लवाशंसनादि च निरूप्यन्ते ]

एतस्यान्तायमानायाम् । अश्श्वन्निक्त्वोदानयन्ति य-
स्मिन्त्सर्वाणि रूपाणि भवन्ति यो वा जवसमृद्धः सह-
स्राईम्पूर्व्व्यं स्यो दक्षिणायान्धुर्य्यप्रतिधुरः ॥ १ ॥ तद्य-
त्सर्वरूपो भवति । सर्वं व्वै रूपः सर्वमश्श्वमेधः सर्वस्याप्त्यै
सर्वस्यावरुद्ध्या ऽअथ यज्जवसमृद्धो व्वीर्य्यं व्वै जवो व्वीर्य्य-
स्याप्त्यै व्वीर्य्यस्यावरुद्ध्या ऽअथ यत्सहस्राईः सर्वं व्वै
सहस्रः सर्वमश्श्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या ऽअथ
यत्पूर्व्व्यं ऽएष वा ऽअपरिमितं व्वीर्य्यमभिवर्द्धते यत्पूर्व्व्योऽ-
परिमितस्यैव व्वीर्य्यस्यावरुद्ध्या ऽअथ यद्दक्षिणायान्धुर्य्य-
प्प्रतिधुर ऽएष वा ऽएष य ऽएष तपति न वा ऽएतङ्कश्चन
प्प्रतिप्रतिरेतस्यैवावरुद्ध्यै ॥ २ ॥ तदु होवाच भाल्लवेयः ।
द्विरूप ऽएवैषोऽश्श्वः स्यात्कृष्णसारङ्गः प्प्रजापतेर्व्वा ऽएषोऽ-
क्ष्णः समभवद्द्विरूपं व्वा ऽइदश्चक्षुः शुक्लञ्चैव कृष्णञ्च
तदेनꣳ स्वेन रूपेण समर्द्धयतीति ॥ ३ ॥ अथ होवाच
सात्ययज्ञिः । त्रिरूप ऽएवैषोऽश्श्वः स्यात्तस्य कृष्णः
पूर्वार्द्धः शुक्लोऽपरार्द्धः कृत्तिकाञ्जिः पुरस्तात्तद्यत्कृष्णः
पूर्वार्द्धो भवति यदेवेदङ्कृष्णमक्ष्णस्तदस्य तदुथ यच्छु-
क्लोऽपरार्द्धो यदेवेदꣳ शुक्लमक्ष्णस्तदस्य तदुथ यत्कृत्ति-

काशिः पुरस्तात्सा कनीनका स एव रूपसमृद्धोऽतो यतमोऽस्योपकल्पेत बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिस्तमालभेत जवेन त्वेव समृद्धः स्यात् ॥ ४ ॥ तस्यैते पुरस्ताद्रक्षितार उपक्लृप्ता भवन्ति । राजपुत्राः कवचिनः शतꣳ राजन्न्या निषङ्गिणः शतꣳ सूतग्राम-ण्ण्याम्पुत्रा इषुपर्षिणः शतं क्षात्रसङ्ग्रहीतॄणाम्पुत्रा द-ण्डिनः शतमश्वशतन्निरष्टन्निरमणं यस्मिन्नेनमपिसृज्य रक्षन्ति ॥ ५ ॥ अथ सावित्रीमिष्टिन्निर्वपति । सवित्रे प्प्रसवित्रे द्वादशकपालम्पुरोडाशꣳ सविता वै प्प्रसविता सविता म इमं यज्ञम्प्रसुवादिति ॥ ६ ॥ तस्यै पञ्चदश सा-मिधेन्यो भवन्ति । वार्त्रघ्नावाज्यभागौ 'य इमा विश्वा जातान्या देवो यातु सविता सुरत्न' इत्युपांशु हविषो याज्यानुवाक्क्ये विराजौ सꣳयाज्ये हिरण्यन्दक्षिणा सुव-र्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ तस्यै प्प्रयाजेषु तायमानेषु । ब्ब्राह्मणो वीणागाथी दीक्षणत उत्तरम-न्द्रामुदाघ्नँस्तिस्रः स्वयꣳ सम्भृता गाथा गायतीत्ययजते-त्यददादिति तस्योक्तम्ब्राह्मणम् ॥८॥ अथ द्वितीयान्निर्वपति । सवित्र आसवित्रे द्वादशकपालम्पुरोडाशꣳ सविता वा आ-सविता सविता म इमं यज्ञमासुवादिति [ * काण्डस्यार्धम् २१६]॥९॥ तस्यै सप्तदश सामिधेन्यो भवन्ति । सद्वन्तावा-ज्यभागौ सदेवावरुन्द्धे 'विश्वानि देव सवितः' 'स घा नो

(१) ऋ० सं० ४. ४. २६ ।
* इयं काण्डार्धसंख्याऽत्र 'क' पुस्तक एवास्ति ।
(२) ऋ० सं० ४. ४. २६ । (३) ऋ० सं० ५. ४. १२ ।

देवꣳ सविता सहावेत्युपाꣳशु हविषो याज्यानुवाक्ये ऽअनुष्टुभौ सꣳयाज्ये रजतꣳ हिरण्यन्दक्षिणा नानारूपताया ऽअथो ऽउत्क्रमायानपक्रमाय शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ॥१०॥ तस्यै प्रयाजेषु तायमानेषु । ब्राह्मणो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नꣳस्तिस्रः स्वयꣳ सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ ११ ॥ अथ तृतीयान्निर्वपति । सवित्रे सत्यप्रसवाय द्वादशकपालम्पुरोडाशमेष ह वै सत्यः प्रसवो यः सवितुः सत्येन मे प्रसवेनेमं यज्ञम्प्रसुवादिति ॥ १२ ॥ तस्यै सप्तदशैव सामिधेन्यो भवन्ति । रयिमन्तावाज्यभागौ वीर्यं वै रयिर्वीर्यस्याप्त्यै वीर्यस्यावरुद्ध्या 'ऽआ[1] विश्वदेवꣳ सत्पति'न्न प्रेमिये[2] सवितुर्दैव्यस्य तदित्युपाꣳशु हविषो याज्यानुवाक्ये नित्ये सꣳयाज्ये नेद्यज्ञपथादयानीति क्लृप्त ऽएव यज्ञेऽन्ततः प्रतितिष्ठति त्रिष्टुभौ भवत ऽइन्द्रियं[3] वै वीर्यन्त्रिष्टुबिन्द्रियस्यैव वीर्यस्यावरुद्ध्यै हिरण्यन्दक्षिणा सुवर्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३ ॥ तस्यै प्रयाजेषु तायमानेषु । ब्राह्मणो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नꣳस्तिस्रः स्वयꣳ सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ १४ ॥ एतस्याꣳ सꣳस्थितायाम् । उपोत्थायाद्ध्वर्युश्च यजमानश्चाश्वस्य

(१) ऋ० सं० ४. ४. २६ । (२) ऋ० सं० ३. ८. ५ । (३) 'ग' 'ज' पुस्तकयोः 'इन्द्रे वै' इति पाठः ।

दक्षिणे कर्णे ऽआजपतो 'विभूर्म्मात्रा प्रभूः पित्रेति तस्योक्तम्ब्राह्मणमथैनमुदञ्चम्प्राञ्चम्प्रसृजत ऽएषा होभये-षान्देवमनुष्याणान्दिग्ग्यदुदीची प्राची स्वायामेवैनन्तद्दिशि धत्तो न वै स्व ऽआयतने प्रतिष्ठितो रिष्यत्यरिष्ट्यै ॥ १५ ॥ स ऽआह 'देवा ऽआशापालाः। एतन्देवेभ्योऽ-श्वम्मेधाय प्रोक्षितᳫं रक्षते'त्युक्त्वा मानुषा ऽआशापाला ऽअथैते देवा ऽआप्याः साध्या ऽअन्वाध्या मरुतस्तमेत ऽउभये देवमनुष्याः संविदाना ऽअप्रत्यावर्त्तयन्तः संव-त्सरᳫं रक्षन्ति तद्यन्न प्रत्यावर्त्तयन्त्येष वा ऽएष य ऽएष तपति क ऽउ ह्येतमर्हति प्रत्यावर्त्तयितुं यद्ध्येनम्प्रत्याव-र्त्तयेयुः परागेवेदᳫं सर्वᳪं स्यात्तस्मादप्रत्यावर्त्तयन्तो रक्षन्ति ॥ १६ ॥ स ऽआहाशापालाः। ये वा ऽएतस्योदृचङ्गमि-ष्यन्ति राष्ट्रन्ते भविष्यन्ति राजानो भविष्यन्त्यभिषे-चनीया ऽअथ य ऽएतस्योदृचन्न गमिष्यन्त्यराष्ट्रन्ते भवि-ष्यन्त्यराजानो भविष्यन्ति राजन्या विशोऽनभिषेचनी-यास्तस्मान्मा प्रमदत स्नात्वाचैवैनमुदकान्निरुन्धीद्ध्वं बडवाभ्यश्च ते यद्यद्ब्राह्मणजातमुपनिगच्छेत तत्तत्पृच्छेत ब्राह्मणाः कियद्यूयमश्वमेधस्य वित्थेति ते ये न विद्युर्जिनी-यात तान्सर्वं वा ऽअश्वमेधः सर्वस्यैष न वेद यो ब्राह्मणः सन्नश्वमेधस्य न वेद सोऽब्राह्मणो ज्येय ऽएव स पानङ्क-रवाथ खादन्निवपाथाथ यत्किञ्च जनपदे कृतान्नᳫं सर्वं

(१) शु० य० सं० २२. १९। (२) शु० य० सं० २२. १९।

वस्तत्सुतन्तेषाᳬं रथकारकुल * ऽएव वो वसतिस्तद्ध्यश्व-स्यायतनमिति ॥ १७ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ ११७ ॥

प्रमुच्यमानाश्वन्दक्षिणेन वेदिम् । हिरण्मयङ्कशिपूप-स्तृणाति तस्मिन्होतोपविशति दक्षिणेन होतारᳬं हिर-ण्मये कूर्चे † यजमानो दक्षिणतो ब्रह्मा चोद्गाता च हिरण्मयोः कशिपुनोः ‡ पुरस्तात्प्रत्यङ्ङध्वर्युर्हिरण्मये वा कूर्चे हिरण्मये वा फलके ॥ १ ॥ समुपविष्टेष्वध्व-र्युः सम्प्रेष्यति । होतर्भूतान्याचक्ष्व भूतेष्विमं यज-मानमध्यूहेति सम्प्रेषितो होताध्वर्युमामन्त्रयते पारिप्ल-वमाख्यानमाख्यास्यन्नध्वर्यविति हवै होतरित्यध्वर्युः ॥ २ ॥ मनुर्वैवस्वतो राजेत्याह । तस्य मनुष्या विशस्त ऽइम ऽआसत ऽइत्यश्रोत्रिया गृहमेधिन ऽउपसमेता भवन्ति तानुपदिशत्यृचो वेदः सोऽयमित्यृचाᳬं सूक्तं व्याचक्षाण ऽइवानुद्रवेद्वीणागणगिन ऽउपसमेता भवन्ति तानध्वर्युः सम्प्रेष्यति वीणागणगिन ऽइत्याह पुराणैरिमं यजमानᳬं राजभिः साधुकृद्भिः सङ्गायतेति तन्ते तथा सङ्गायन्ति तद्यदेनमेवᳬं सङ्गायन्ति पुराणैरेवैनन्तद्राजभिः साधुकृद्भिः

* 'रथकारगृहवासाश्च' ( का० श्रौ० सू० २०।२।१६ )

† सपादमासनं कूर्चः ।

‡ कशिपुशब्देन मृद्वासनं मसूरक उच्यते ।

सलोकङ्कुर्वन्ति ॥ ३ ॥ सम्प्रेष्याद्ध्वर्युः प्प्रक्रमाञ्जुहोति। अन्न्वाहार्य्यपचने वाश्वस्य वा पदुम्परिलिख्य यतरथास्य तत्रावृद्भवति पूर्वा त्त्वेव स्त्थितिः ॥ ४ ॥ सावित्र्या ऽएवेष्टेः। पुरस्तादनुद्रुत्य सकृदेव रूपाण्ण्याहवनीये जुहोत्त्यथ साय-न्धृतिषु हूयमानासु राजन्न्यो वीणागाथी दक्षिणत ऽउत्तरम-न्द्रामुदाग्घ्नँस्तिस्रः स्वयंः सम्भृता गाथा गायतीत्त्ययुद्ध्यते-त्त्यमुं सङ्ग्राममजयदिति तस्योक्तम्ब्राह्मणम् ॥ ५ ॥ अथ श्वोभूते द्वितीयेऽहन्। एवमेवैतासु साविञ्जीष्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्यविति हवै होतरित्त्येवाद्ध्वर्युरर्य्यमो वैवस्वतो राजेत्त्याह तस्य पितरो विशस्त ऽइम ऽआसत ऽइति स्त्थविरा ऽउपसमेता भवन्ति तानुपदिशति यजूꣳषि वेदः सोऽयमिति यजुषामनुवाकं व्व्याचक्षाण ऽइवानुद्रवे-देवमेवाद्ध्वर्युः सम्प्रेष्ष्यति न प्प्रक्रमाञ्जुहोति ॥ ६ ॥ अथ तृतीयेऽहन्। एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्य-विति हवै होतरित्त्येवाद्ध्वर्युर्व्वरुण ऽआदित्त्यो राजेत्त्याह तस्य गन्धर्वा विशस्त ऽइम ऽआसत ऽइति युवानः शोभना ऽउप-समेता भवन्ति तानुपदिशत्त्यथर्वाणो वेदः सोऽयमित्त्यथर्व-णामेकम्पर्व व्व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्युः सम्प्रे-ष्ष्यति न प्प्रक्रमाञ्जुहोति ॥ ७ ॥ अथ चतुर्त्थेऽहन्। एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्यविति हवै होतरित्त्येवाद्ध्वर्युः सोमो वैष्णवो राजेत्त्याह तस्याप्सरसो विशस्ता ऽइमा ऽआसत ऽइति युवतयः शोभना ऽउप-समेता भवन्ति ता ऽउपदिशत्त्यङ्गिरसो वेदः सोऽयमि-

त्यङ्गिरसामेकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्य्युः सम्प्रेष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ८ ॥ अथ पञ्चमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युरर्ब्बुदः काद्रवेयो राजेत्त्याह तस्य सर्प्पा विशस्त ऽइम ऽआसत ऽइति सर्प्पाश्च सर्प्पविदश्चोपसमेता भवन्ति तानुपदिशति सर्प्पविद्या वेदः सोऽयमिति सर्प्पविद्याया ऽएकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्य्युः सम्प्रेष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ९ ॥ अथ षष्ठेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युः कुबेरो वैश्रवणो राजेत्त्याह तस्य रक्षाꣳसि विशस्तानीमान्न्यासत ऽइति सेलगाः पापकृत ऽउपसमेता भवन्ति तानुपदिशति देवजनविद्या वेदः सोऽयमिति देवजनविद्याया ऽएकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्य्युः सम्प्रेष्यति न प्प्रक्क्रमाञ्जुहोति ॥ १० ॥ अथ सप्तमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युरसितो धान्न्वो राजेत्त्याह तस्यासुरा विशस्त ऽइम ऽआसत ऽइति कुसीदिन ऽउपसमेता भवन्ति तानुपदिशति माया वेदः सोऽयमिति काञ्चिन्मायाङ्कुर्य्यादेवमेवाद्ध्वर्य्युः सम्प्रेष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ११ ॥ अथाष्टमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युर्म्मत्स्यः साम्मदो राजेत्त्याह तस्योदकेचरा विशस्त ऽइम ऽआसत ऽइति मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशतीति-

हासो व्वेदः सोऽयमिति कञ्चिदितिहासमाचक्षीतैवमेवा-
ध्वर्युः सम्प्रेष्यति न प्प्रक्क्रमाञ्जुहोति ॥ १२ ॥ अथ
नवमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्य्य-
विति हवै होतरित्त्येवाध्वर्युस्ताक्ष्यों व्वैपश्यतो राजेत्याह
तस्य व्वयाꣳसि व्विशस्तानीमान्यासत ऽइति व्वयाꣳसि
च वायोविद्यिकाश्चोपसमेता भवन्ति तानुपदिशति पुराणं
व्वेदः सोऽयमिति किञ्चित्पुराणमाचक्षीतैवमेवाध्वर्युः स-
म्प्रेष्यति न प्प्रक्क्रमाञ्जुहोति ॥ १३ ॥ अथ दशमेऽहन् ।
एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्य्यविति हवै हो-
तरित्त्येवाध्वर्युर्द्धर्म्म ऽइन्द्रो राजेत्त्याह तस्य देवा व्विशस्त
ऽइम ऽआसत ऽइति श्श्रोत्त्रिया अप्प्रतिग्ग्राहका ऽउप-
समेता भवन्ति तानुपदिशति सामानि व्वेदः सोऽयमिति
साम्म्नान्दशतम्ब्रूयादेवमेवाध्वर्युः सम्प्रेष्यति न प्प्रक्क्रमा-
ञ्जुहोतीति ॥ १४ ॥ एतत्पारिप्लवम् । सर्व्वाणि राज्यान्न्या-
चष्टे सर्व्वा व्विशः सर्व्वान्न्वेदान्त्सर्व्वान्देवान्त्सर्व्वाणि भूतानि
सर्व्वेषाꣳ ह वै स ऽएतेषाꣳ राज्यानाꣳ सायुज्यꣳ सलो-
कतामश्नुते सर्व्वासां विशामैश्वर्य्यमाधिपत्त्यङ्गच्छति सर्व्वा-
न्न्वेदानवरुन्द्धे सर्व्वान्देवान्प्रीत्त्वा सर्व्वेषु भूतेष्वन्ततः प्प्र-
तितिष्ठति यस्यैवंविदेतद्धोता पारिप्लवमाख्यानमाचष्टे
यो वैतदेवं व्वेदैतदेव समानमाख्यानम्पुनः पुनः सँवत्सर-
म्परिप्प्लवते तद्यत्पुनः पुनः परिप्प्लवते तस्मात्पारिप्लवꣳ
षट्त्रिꣳशतन्दशाहानाचष्टे षट्त्रिꣳशदक्षरा बृहती बार्हताः
पशवो बृहत्त्यैवास्म्मै पशूनवरुन्द्धे ॥ १५ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ यूपकाष्ठादि ]

सँवत्सरे पर्य्यवेते दीक्षा । प्प्राजापत्त्यमालब्भ्योत्सी- दन्तीष्ट्वयः पुरोहितस्याग्निषु यजेतेत्त्यु हैक ऽआहुः किमु दीक्षितो यजेत द्वादश दीक्षा द्वादशोपसदस्तित्त्वः सुत्त्या- स्तत्त्रिणवमभिसम्पद्यते व्वज्रो वै त्त्रिणवः क्षत्रमश्श्वः क्षत्रꣳ राजन्न्यो व्वज्जेण खलु वै क्षत्रꣳ स्पृतन्तद्व्वज्जेणैव क्षत्रꣳ स्पृणोति ॥ १ ॥ दीक्षणीयायाꣳ सꣳस्थितायाम् । सायं व्वाचि व्विसृष्टायां व्वीणागणगिन ऽउपसमेता भवन्ति तानद्ध्वर्य्युः सम्प्रेष्ष्यति व्वीणागणगिन ऽइत्त्याह देवैरिमं ऽयजमानꣳ सङ्गायतेति तन्ते तथा सङ्गायन्ति ॥ २ ॥ अह- रहर्व्वाचि व्विसृष्टायाम् । अग्नीषोमीयाणामन्ततः सꣳस्थाया- म्परिहृतासु व्वसतीव्वरीषु तद्यदेनन्दैवैः सङ्गायन्ति देवैरे- वैनन्तत्सलोकङ्कुर्व्वन्ति ॥ ३ ॥ प्रजापतिना सुत्त्यासु । एव- मेवाहरहः परिहृतास्वेव व्वसतीव्वरीषूदवसानीयायामन्ततः सꣳस्थितायां तद्यदेनम्प्रजापतिना सङ्गायन्ति प्प्रजापति- नैवैनन्तदन्ततः सलोकङ्कुर्व्वन्ति ॥ ४ ॥ एकविꣳशतिर्य्यूपाः । सर्व्वे ऽएकविꣳशत्त्यरत्नयो राज्जुदालोऽग्निष्ठो भवति पैतु- दारवावभितः षड्वैल्वास्त्रय ऽइत्थास्त्रय ऽइत्थात्षट् खादि- रास्त्रय ऽएवेत्थास्त्रय ऽइत्थात्षट् पालाशास्त्रय ऽएवेत्थास्त्रय ऽइत्थात् ॥ ५ ॥ तद्यदेत ऽएवं य्यूपा भवन्ति । प्प्रजापतेः प्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमद्ध्रियत तस्य यः श्लेष्ष्मासीत्ससार्द्धꣳ समवद्रुत्त्य मद्ध्यतो नस्त ऽउदभि- नत्स ऽएष व्वनस्प्पतिरभवद्राज्जुदालस्तस्मात्स श्लेष्ष्मणः

श्लेष्मणो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-त्सोऽग्निष्ठो भवति मद्ध्यं वा ऽएतद्यूपानां यदग्निष्ठो* मद्ध्यमेतत्प्राणानां यन्नासिके स्व ऽएवैनन्तदायतने दधाति ॥ ६ ॥ अथ यदापोमयन्तेज ऽआसीत्। यो गन्धः स सार्द्धं समवद्रुत्य चक्षुष्ट ऽउदभिनत्स ऽएष वनस्पति-रभवत्पीतुदारुस्तस्मात्स सुरभिर्गन्धाद्धि समभवत्तस्मादु ज्वलनस्तेजसो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-त्तावभितोऽग्निष्ठम्भवतस्तस्मादिमे ऽअभितो नासिकाञ्च-क्षुषी स्व ऽएवैनौ तदायतने दधाति ॥ ७ ॥ अथ यत्कु-न्तापमासीत्। यो मज्जा स सार्द्धं समवद्रुत्य श्श्रोत्रत ऽउदभिनत्स ऽएष वनस्पतिरभवद्बिल्वस्तस्मात्तस्यान्तरतः सर्वमेव फलमाद्यम्भवति तस्मादु हारिद्र ऽइव भवति हारिद्र ऽइव हि मज्जा तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे पैतुदा-रवौ[1] भवतो बाह्ये बैल्वा ऽअन्तरे हि चक्षुषी बाह्ये श्श्रोत्रे स्व ऽएवैनाँस्तदायतने दधाति ॥ ८ ॥ अस्थिभ्य ऽएवास्य खदिरः समभवत्। तस्मात्स दारुणो बहुसारो दारुणमिव ह्यस्थि तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे बैल्वा भवन्ति बाह्ये खादिरा ऽअन्तरे हि मज्जानो बाह्यान्यस्थीनि स्व ऽएवैनाँस्तदायतने दधाति ॥ ९ ॥ माꣳसेभ्य ऽएवास्य पलाशः समभवत्। तस्मात्स बहुरसो लोहितरसो लोहि-तमिव हि माꣳसन्तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे खादिरा भवन्ति बाह्ये पालाशा ऽअन्तराणि ह्यस्थीनि बाह्यानि

---

* अग्निसमीपे तिष्ठतीति-अग्निष्ठः=मध्यमो यूप इत्यर्थः।

(१) 'पैतुदारुवौ' इति 'ग' 'ज' पुस्तकयोः पाठः।

माᳬंसानि स्व ऽएवैनाँस्तदायतने दधाति ॥ १० ॥ अथ यदेकविᳬंशतिर्भवन्ति । एकविᳬंशत्यरत्नय ऽएकविᳬंशो वा ऽएष य ऽएष तपति द्वादश मासाः पञ्चऽर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविᳬंशः सोऽश्वमेध ऽएष प्प्रजापतिरेवमेतम्प्रजापतिं व्यज्ञङ्कृत्स्नᳬं संस्कृत्य तस्मिन्नेकविᳬंशतिमग्नीषोमीयान्पशूनालभते तेषाᳬं समानङ्कर्म्मेंत्येतत्पूर्वेद्युः कर्म्म ॥ ११ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

---

[ सवनीयाः पशवः ]

अथ प्प्रातर्ग्गोतमस्य । चतुरुत्तर स्तोमो भवति तस्य चतसृषु बहिष्प्पवमानमष्टास्वष्टास्वाज्यानि द्वादशसु माध्यन्दिनᳬं पवमानः षोडशसु पृष्ठानि विᳬंशत्यामार्भवᳬं पवमानश्चतुर्विᳬंशत्यामग्निष्टोमसाम* ॥ १ ॥ तस्य हैके । अग्निष्टोमसाम चतुःसाम कुर्वन्ति नाग्निष्टोमो नोक्थ्य ऽइति वदन्तस्तद्यदि तथा कुर्य्युः सार्द्धᳬं स्तोत्रियᳬं शस्त्वा सार्द्धमनुरूपᳬं शᳬंसेद्रथन्तरम्पृष्ठᳬं राथन्तरᳬं शस्त्रमग्निष्टोमो यज्ञस्तेनेमँल्लोकमृद्ध्नोति ॥ २ ॥ एकविᳬंशतिᳬं सवनीयाः पशवः । सर्व्वे ऽआग्नेयास्तेषाᳬं समानङ्कर्म्मेंत्यु हैक ऽआहुर्द्वे त्वेवैते ऽएकादशिन्यावालभेत य ऽएवैकाद-

---

* येन साम्ना अग्निष्टोमसंस्था सामाप्यते तदग्निष्टोमसाम ।

शिनेषु कामस्तस्य कामस्याप्त्यै ॥ ३ ॥ सᳬस्थिते ऽग्निष्टोमे । परिहृतासु वसतीवरीष्ववद्भृथेषुरन्नहोमाञ्जुहोति तेषामुक्तम्ब्राह्मणं '[1]प्राणाय स्वाहापानाय स्वाहे'ति द्वादशभिरनुवाकैर्द्वादश मासाः संवत्सरः सर्वᳬ संवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥ एकविᳬशम्मध्यमम्महर्भवति । असौ वा ऽआदित्य ऽएकविᳬशः सोऽश्वमेधः स्वेनैवैनᳬ स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति तस्मादेकविᳬशम् ॥ ५ ॥ यद्वेवैकविᳬशम् । एकविᳬशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविᳬशस्तदनेनैकविᳬशेनात्मनैतस्मिन्नेकविᳬशे प्रतिष्ठायाम्प्रतितिष्ठति तस्मादेकविᳬशम् ॥ ६ ॥ यद्वेवैकविᳬशम् । एकविᳬशो वै स्तोमानाम्प्रतिष्ठा बहु खलु वा ऽएतदेतस्मिन्नहन्युच्चावचमिव कर्म्म क्रियते तद्यदेतदेतस्मिन्नहन्युच्चावचम्बहु कर्म्म क्रियते तदेतस्मिन्नेकविᳬशे प्रतिष्ठायाम्प्रतिष्ठितङ्क्रियाता ऽइति तस्माद्वेवैतदेकविᳬशमहः ॥ ७ ॥ तस्य प्रातःसवनम् । '[2]अग्निन्तम्मन्ये यो वसु'रिति होता पाङ्क्तमाज्यᳬ शस्त्वैकाहिकमुपसᳬशᳬसति बार्हतञ्च प्रऽउगम्माधुच्छन्दसञ्च त्रिचश ऽउभे सᳬशᳬसति यश्च बार्हते प्रऽउगे कामो य ऽउ च माधुच्छन्दसे तयोरुभयोः कामयोराप्त्यै क्लृप्तम्प्रातःसवनम् ॥ ८ ॥ अथातो माध्यन्दिनᳬ सवनम् । अतिच्छन्दाः प्रतिपन्मरुत्वतीयस्य '[3]त्रिकं-

---

(१) शु० य० सं० २२. २३ । (२) शु० य० सं० १५. ४१ । (३) ऋ० सं० २. ६. २८ ।

द्रुकेषु महिषो यवाशिर'मित्यतिष्ठा वा ऽएषा च्छन्दसां ञ्यदुतिच्छन्दा ऽअतिष्ठा ऽअश्श्वमेधो यज्ञानामश्श्वमेधस्यै-वाप्प्त्यै सैषैव त्रिꣳ शस्ता त्रिचꣳ सम्पद्यते तेनो तङ्काममा-प्प्नोति यत्त्रिच 'ऽइदं[1] वसो सुतमन्ध' ऽइत्यनुचर ऽएष ऽएव नित्य ऽएकाहातान 'ऽइत्था[2] हि सोम ऽइन्मदे'ऽवि-तां[3]सि सुन्वतो व्वृक्तबर्हिष' ऽइति पङ्क्तीश्च षट्पदाश्च शस्त्वैकाहिके निविदन्दधातीति मरुत्वतीयम् ॥ ९ ॥ अथातो निष्क्केवल्ल्यम् । महानाम्न्न्यꣳ पृष्ठम्भवन्ति सानुरूपाꣳ सप्प्रगाथाꣳ शꣳसति सर्व्वे वै कामा महानाम्न्नीषु सर्व्वे कामा ऽअश्श्वमेधे सर्व्वेषाङ्कामानामाप्प्त्या 'ऽइन्द्रो[4] मदाय व्वावृधे' 'प्प्रेदम्[5]ब्रह्म व्वृत्रतूर्य्येष्ष्वाविथे'ति पङ्क्तीश्च षट्-पदाश्च शस्त्वैकाहिके निविदन्दधाति क्क्लृप्तम्माद्ध्यन्दि-नꣳ सवनम् ॥ १० ॥ अथातस्तृतीयसवनम् । अतिच्छन्दा ऽएव प्प्रतिपद्वैश्श्वदेवस्या'भि त्यं[6]न्देवꣳ सवितारमो-ण्ण्यो'रिति तस्या ऽएतदेव ब्ब्राह्मणं ञ्यत्पूर्व्वस्या 'ऽअभि त्वां[7] देव सवित'रित्यनुचरोऽभिवानभिभूत्यै रूप'मुदु ष्य देवꣳ सविता दमूना' ऽइति सावित्रꣳ शस्त्वैकाहिके निविदन्दधाति 'मही[8] द्यावापृथिवी ऽइह ज्ज्येष्ठे' ऽइति चतुर्ऋचन्द्यावापृथिवीयꣳ शस्त्वैकाहिके निविदन्दधा'त्यृभु-र्व्विभ्वा[9] व्वाज ऽइन्द्रो नो ऽअच्छे'त्यार्ब्भवꣳ शस्त्वैकाहिके

(१) ऋ० सं० ५. ७. १७। (२) ऋ० सं० १. ५. २९। (३) ऋ० सं० ६. ३. १८। (४) ऋ० सं० १. ६. ११। (५) ऋ० सं० ६. ३. १६। (६) शु० य० सं० ४. २५। (७) ऋ० सं० १. २. १३। (८) ऋ० सं० ५. ४. ५। (९) ऋ० सं० ३. ८. ८। (१०) ऋ० सं० ३. ७. ३।

निविदन्दधाति 'को नु[1] वाम्मित्रावरुणावृताय'न्निति वैश्वदेवꣳ शस्त्वैकाहिके निविदन्दधातीति वैश्वदेवम् ॥ ११ ॥

अथात ऽआग्निमारुतम् । 'मूर्द्धानन्दिवो[2] ऽअरतिम्पृथिव्या' ऽइति वैश्वानरीयꣳ शस्त्वैकाहिके निविदन्दधा'त्यो[3] रुद्रास ऽइन्द्रवन्तः सजोषस' ऽइति मारुतꣳ शस्त्वैकाहिके निविदन्दधाती'मम्[4] षु वो ऽअतिथिमुषर्बुध'मिति नवर्च्चञ्जातवेदसीयꣳ शस्त्वैकाहिके निविदन्दधाति तद्यदैकाहिकानि निविद्धानानि भवन्ति प्रतिष्ठा वै ज्योतिष्टोमः प्रतिष्ठाया ऽअप्रच्युत्यै ॥ १२ ॥

तस्यैते पशवो भवन्ति । 'अश्वस्तूपरो* गोमृग,[5]† ऽइति पञ्चदश पर्य्यङ्ग्यास्तेषामुक्तम्ब्राह्मणमथैत ऽआरण्या 'वसन्ताय[6] कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्वर्षाभ्यस्तित्तिरी'निति तेषाम्वेवोक्तम् ॥ १३ ॥

अथैतानेकविꣳशतये । चातुर्म्मास्यदेवताभ्य ऽएकविꣳशतिमेकविꣳशतिम्पशूनालभत ऽएतावन्तो वै सर्वे देवा यावन्तश्चातुर्म्मास्यदेवताः सर्वे कामा ऽअश्वमेधे सर्वान्देवान्प्रीत्वा सर्वान्कामानाप्नवानीति न तथा कुर्य्यात् ॥ १४ ॥

सप्तदशैव पशून्मध्यमे यूप ऽआलभेत । प्रजापतिः सप्तदशः सर्वꣳ सप्तदशः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै षोडश षोडशेतरेषु षोडशकलं वा ऽइदꣳ सर्वꣳ

(१) ऋ० सं० ४. २. १३ । (२) ऋ० सं० ४. ५. ९ । शु० य० सं० ७. २४।३३. ८ । (३) ऋ० सं० ४. ३. २१ । (४) ऋ० सं० ४. ५. १७ । (५) शु० सं० य० २४. १ ।

* 'शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनश्छागः = तूपरः ।

† गोमृगः = गवयः ।

(६) शु० य० सं० २४. २० ।

सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै त्रयोदश त्रयोदशारण्यानाकाशेष्वालभते त्रयोदश मासाः संवत्सरः सर्वꣳ संवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १५ ॥ अथ पुरा बहिष्पवमानात् । अश्वन्निक्त्वोदानयन्ति तेन पवमानाय सर्पन्ति तस्योक्तम्ब्राह्मणꣳ स्तुते बहिष्पवमानेऽश्वमास्तावमाक्रमयन्ति स यद्यव वा जिघ्रेद्वि वा वर्त्तेत समृद्धो मे यज्ञ इति ह विद्यात्तमुपाकृत्याद्ध्वर्युराह होतरभिष्टुहीति तमेकादशभिर्होताभिष्टौति ॥ १६ ॥ 'यदक्रन्दः[1] प्रथमञ्जायमान' इति । त्रिः प्रथमया त्रिरुत्तमया ताः पञ्चदश सम्पद्यन्ते पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते तद्वै यजमानायैव वज्रः प्रदीयते योऽस्य स्तृत्यस्तꣳ स्तृत्वैव उप प्रागाच्छसनं वाज्यर्वोप प्रागात्परमं यत्सधस्थमिति ॥ १७ ॥ एत उद्धृत्य । 'मा नो[2] मित्रो वरुणो अर्यमायु'रित्येतत्सूक्तमध्रिगावावपति 'चतु[3]स्त्रिꣳशद्वाजिनो देवबन्धो'रित्यु हैक एतां वङ्क्रीणाम्पुरस्ताद्दधति नेदनायतने प्राणवन्दधामेत्यथो नेदेकवचनेन बहुवचनं व्यवायामेति न तथा कुर्यात्सार्द्धमेव सूक्तमावपे'दुप[4] प्रागाच्छसनं वाज्यर्वो'[5]प प्रागात्परमं यत्सधस्थ'मिति ॥ १८ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

(१) शु० य० सं० २९. १२ । (२) शु० य० सं० २५. २४ । (३) शु० य० सं० २५. ४१ । (४) शु० य० सं० २९. २३ । (५) शु० य० सं० २९. २४ ।

[ संवादः ]

एते ऽउक्त्वा । यदुद्विगोः परिशिष्टम्भवति तदाह व्वासोऽधिवासः हिरण्यमित्यश्वायोपस्तृणन्ति तस्मि-न्नेनमधि संज्ञपयन्ति संज्ञप्तेषुः पशुषु पत्न्यः पान्नेजनैरुदा-यन्ति चतस्रश्च जायाः कुमारी पञ्चमी चत्वारि च शता-न्न्यनुचरीणाम् ॥ १ ॥ निष्ठितेषु पान्नेजनेषु । महिषीम-श्वायोपनिपादयन्त्यथैनावधिवासेन * सम्प्रोर्ण्णुवन्ति † '[1]स्व-र्ग्गे लोके प्प्रोर्ण्णुवाथा'मित्येष वै स्वर्ग्गो लोको यत्र पशुः संज्ञपयन्ति निरायत्याश्वस्य शिश्नम्महिष्युपस्थे निधत्ते ‡ '[2]वृषा व्वाजी रेतोधा रेतो दधात्वि'ति मिथुनस्यैव सर्व-त्वाय ॥ २ ॥ तयोः शयानयोः । अश्वं य्यजमानोऽभि-मेथ'[3]त्युत्सक्थ्या ऽअव गुदन्धेही'ति तन्न कश्चन प्प्रत्य-भिमेथति नेद्यजमानम्प्रतिप्प्रतिः कश्चिदसदिति ॥ ३ ॥ अथाद्ध्वर्युः कुमारीमभिमेथति । कुमारि हये हये कुमारि '[4]यकासकौ शकुन्तिके'ति तङ्कुमारी प्प्रत्यभिमेथत्यद्ध्वर्य्यो हये हयेऽद्ध्वर्य्यो '[5]यकोऽसकौ शकुन्तक' ऽइति ॥ ४ ॥ अथ ब्ब्रह्मा महिषीमभिमेथति । महिषि हये हये महिषि '[6]माता च ते पिता च तेऽग्ग्रं व्वृक्षस्य रोहत' ऽइति तस्यै शतः राजपुत्र्योऽनुचर्य्यो भवन्ति ता ब्ब्रह्माणम्प्रत्यभिमेथ-

---

* अध उपरिष्टाच्चाच्छादनक्षमं वासोऽधिवासः ।

† का० श्रौ० सू० २०. ६. १५ ।

(१) शु० य० सं० २३. २० ।

‡ 'अश्वशिश्नमुपस्थे कुरुते' ( का० श्रौ० सू० २०. ६. १६ ) ।

(२) शु० य० सं० २२ २० । (३) शु० य० सं० २३. २१ । (४) शु० य० सं० २३. २२ । (५) शु० य० सं० २३, २३ । (६) शु० य० सं० २३. २४ ।

न्ति ब्ब्रह्मन्न्हुये हये ब्ब्रह्म'न्न्माता च ते पिता च तेऽग्ग्रे व्वृक्षस्य क्क्रीडत' ऽइति ॥ ५ ॥ अथोद्गाता व्वावातामभिमेथति । व्वावाते हुये हये व्वावात 'ऽऊर्द्ध्वामेनामुच्छ्रापये'ति तस्यै शतꣳ राजन्न्या ऽअनुचर्य्यो भवन्ति ता ऽउद्गातारम्प्रत्यभिमेथन्त्युद्गातर्हुये हय ऽउद्गात'रूर्द्ध्वमेनमुच्छ्रयता'दिति ॥ ६ ॥ अथ होता परिवृक्तामभिमेथति । परिवृक्ते हुये हये परिवृक्ते 'यद्दस्या अꣳहुभेद्या' ऽइति तस्यै शतꣳ सूतग्ग्रामण्ण्यान्दुहितरोऽनुचर्य्यो भवन्ति ता होतारम्प्रत्यभिमेथन्ति होतर्हुये हये होत'र्य्यद्देवासो ललामगु'मिति ॥ ७ ॥ अथ क्षत्ता पालागलीमभिमेथति । पालागलि हुये हये पालागलि 'यद्धरिणो यवमत्ति न पुष्ट्टम्पशु मन्न्यत' ऽइति तस्यै शतङ्क्षात्रसङ्ग्रहीतॄणान्दुहितरोऽनुचर्य्यो भवन्ति ताः क्षत्तारम्प्रत्यभिमेथन्ति क्षत्तर्हुये हये क्षत्त'र्य्यद्धरिणो यवमत्ति न पुष्ट्टम्बहु मन्न्यत' ऽइति ॥ ८ ॥ सर्व्वाप्तिर्व्वा ऽएषा व्वाचः । यदभिमेथिकाः सर्व्वे कामा ऽअश्श्वमेधे सर्व्वया व्वाचा सर्व्वान्न्कामानाप्नवामेत्युत्थापयन्ति महिषीन्ततस्ता यथेतम्प्रातिपरायन्त्यथेतरे सुरभिमतीमृचमन्ततोऽन्न्वाहु'र्द्दधिक्क्राव्व्णो ऽअकारिष'मिति ॥ ९ ॥ [अर्धप्रपाठकः ॥५३॥] अप व्वा ऽएतेभ्य ऽआयुर्द्देवताः क्क्रामन्ति । ये यज्ञेऽपूतां व्वाचं व्वदन्ति व्वाचमेवैतत्पुनते देवयज्ज्यायै देवतानामनपक्क्रमाय या च गोमृगे व्वपा भवति या चाजे तूपरे

(१) शु० य० सं० २३. २५। (२) शु० य० सं० २३. २६। (३) शु० य० सं० २३. २७। (४) शु० य० सं० २३. २८। (५) शु० य० सं० २३. २९। (६) शु० य० सं० २३. ३०। (७) शु० य० सं० २३. ३१। (८) शु० य० सं० २३. ३२।

ते ऽअश्श्वे प्प्रत्यवधायाहरन्ति नाश्श्वस्य व्वपास्तीति व्वदन्तो न तथा कुर्य्यादश्श्वस्यैव प्प्रत्यक्षम्मेद ऽआहरेत्प्रज्ञाता ऽह्रुतराः ॥ १० ॥ शृतासु व्वपासु । स्वाहाकृतिभिश्चरित्त्वा प्प्रत्यञ्चः प्प्रतिपरेत्त्य सदसि ब्ब्रह्मोद्यं वदन्ति पूर्व्वया द्वारा प्प्रपद्य यथाधिष्ण्ण्यं व्व्युपविशन्ति ॥ ११ ॥ स होताद्ध्वर्य्युम्पृच्छति । 'कः[1] स्विदेकाकी चरती'ति तम्प्रत्याह 'सूर्य्य ऽएकाकी[2] चरती'ति ॥ १२ ॥ अथाद्ध्वर्य्युर्होतारम्पृच्छति । 'किंस्[3] स्विंत्सूर्य्यसमञ्ज्योति'रिति तम्प्रत्याह ब्ब्रह्म 'सूर्य्य-[4]समञ्ज्योति'रिति ॥ १३ ॥ अथ ब्ब्रह्मोद्गातारम्पृच्छति । 'पृच्छामि[5] त्त्वा चितये देवसखे'ति तम्प्रत्याहा'पि तेषु[6] त्रिषु पदेष्ष्वस्म्मी'ति ॥ १४ ॥ अथोद्गाता ब्ब्रह्माणम्पृच्छति । 'केष्ष्वँन्तः[7] पुरुष ऽआविवेशे'ति तम्प्रत्याह 'पञ्च्स्वन्तः[8] पुरुष ऽआविवेशे'ति ॥ १५ ॥ एतस्यामुक्तायामुत्थाय । सदसोऽधि प्प्राञ्चो यजमानमब्भ्यायन्त्यग्ग्रेण हविर्द्धाने ऽआसीनमेत्त्य यथायतनम्परर्य्युपविशन्ति ॥ १६ ॥ स होता-द्ध्वर्य्युम्पृच्छति । 'का[9] स्विदासीत्पूर्व्वचित्ति'रिति तम्प्रत्याह 'द्यौरा[10]सीत्पूर्व्वचित्ति'रिति ॥ १७ ॥ अथाद्ध्वर्य्युर्होतारम्पृच्छ-ति । 'का[11] ऽईमरे पिशङ्गिले'ति तम्प्रत्याहा'जारे[12] पिशङ्गि-ले'ति ॥ १८ ॥ अथ ब्ब्रह्मोद्गातारम्पृच्छति । 'कत्[13]यस्य

(१) शु० य० सं० २३. ४५। (२) शु० य० सं० २३. ४६। (३) शु० य० सं० २३. ४७। (४) शु० य० सं० २३. ४८। (५) शु० य० सं० २३. ४९। (६) शु० य० सं० २३. ५०। (७) शु० य० सं० २३. ५१। (८) शु० य० सं० २३. ५२। (९) शु० य० सं० २३. ५३। (१०) शु० य० सं० २३. ५४। (११) शु० य० सं० २३. ५५। (१२) शु० य० सं० २३. ५६। (१३) शु० य० सं० २३. ५७।

विष्ट्टाः कत्यक्षराणी'ति तम्प्रत्याह 'षडस्य विष्ट्ठाः शतमक्षराणी'ति ॥ १९ ॥ अथोद्गाता ब्ब्रह्माणम्पृच्छति । 'को ऽअस्य व्वेद भुवनस्य नाभि'मिति तम्प्रत्याह 'व्वेदाहमस्य भुवनस्य नाभि'मिति ॥ २० ॥ अथाद्ध्वर्युं य्यजमानः पृच्छति । 'पृच्छामि त्वा परमन्तम्पृथिव्व्या' ऽइति तम्प्रत्याहे'यं व्वेदिः परो ऽअन्तः पृथिव्व्या' ऽइति ॥ २१ ॥ सर्व्वाप्प्तिर्व्वा ऽएषा व्वाचः । यद्ब्रह्मोद्यꣳ सर्व्वे कामा ऽअश्श्वमेधे सर्व्वया व्वाचा सर्व्वान्क्कामानाप्नवामेति ॥ २२ ॥ उदिते ब्ब्रह्मोद्ये । प्प्रपद्याद्ध्वर्य्युर्हिरण्णमयेन पात्रेण प्प्राजापत्यम्महिमानङ्ग्रहङ्गृह्णाति तस्य पुरो'र्ग्घिरण्ण्यगर्ब्भः समवर्त्तताग्ग्र' ऽइत्यथास्य पुरोऽनुवाक्क्या 'सुभूः स्वयम्भूः प्प्रथम' ऽइति 'होर्ता यक्षत्प्रजापति'मिति प्प्रैषः 'प्प्रजापते न त्वदेतान्न्यन्न्य' ऽइति होता यजति व्वषट्कृते जुहोति 'यस्तेऽहन्त्सँव्वत्सरे महिमा सम्बभूवे'ति नानुव्वषट्करोति सर्व्वहुतꣳ हि जुहोति ॥ २३ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ वपाहोमः ]

अथातो व्वपानाꣳ होमः । नानैव चरेयुरा व्वैश्श्वदेवस्य व्वपायै व्वैश्श्वदेवस्य व्वपायाꣳ हुतायान्तदन्न्वितरा

(१) शु० य० सं० २३. ५८. । (२) शु० य० सं० २३. ५९ । (३) शु० य० २३. ६० । (४) शु० य० सं० २३. ६१ । (५) शु० य० सं० २३. ६२ । (६) शु० य० सं० २३. १ । (७) शु० य० सं० २३. ६३ । (८) शु० य० सं० २३. ६४ । (९) शु० य० सं० २३. ६५ । (१०) शु० य० सं० २३. २

जुहुयुरिति ह स्माह सत्यकामो जाबालो विश्वे वै सर्वे देवास्तदेनान्यथादेवतम्प्रीणातीति ॥ १ ॥ ऐन्द्राग्नस्य वपायाᳬं हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माहतुः सौमापौ मानुतन्तव्याविन्द्राग्नी वै सर्वे देवास्तदुवेनान्यथादेवतम्प्रीणातीति ॥ २ ॥ कायस्य वपायाᳬं हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माह शैलालिः प्रजापतिर्वै कः प्रजापतिमु वा ऽअनु सर्वे देवास्तदुवेनान्यथादेवतम्प्रीणातीति ॥ ३ ॥ एकविᳬंशतिश्चातुर्मास्यदेवता ऽअनुद्रुत्य । एकविᳬंशतिधा कृत्वा प्रचरेयुरिति ह स्माह भाल्लबेय ऽएतावन्तो वै सर्वे देवा यावत्यश्चातुर्मास्यदेवतास्तदुवेनान्यथादेवतम्प्रीणातीति ॥ ४ ॥ नानैव चरेयुः । इतीन्द्रोतः शौनकः किमुत स्वरेरँस्तदुवेनान्यथादेवतम्प्रीणातीत्येतदुह तेषां वचोऽन्या त्वेवात स्थितिः ॥ ५ ॥ अथ होवाच याज्ञवल्क्यः । सकृदेव प्राजापत्याभिः प्रचरेयुः सकृद्देवदेवत्याभिस्तदुवेनान्यथादेवतम्प्रीणात्यञ्जसा यज्ञस्य सᳬंस्थामुपैति न ह्वलतीति ॥ ६ ॥ हुतासु वपासु । प्रपद्याद्ध्वर्यू रजतेन पात्रेण प्राजापत्यम्महिमानमुत्तरङ्गृह्णाति तस्य पुरोरुग्यः [1]'प्राणतो निमिषतो महित्वे'ति विपर्यस्ते याज्यानुवाक्ये ऽअयातयामताया ऽएष ऽएव प्रैषो वषट्कृते जुहोति [2]'यस्ते रात्रौ सँवत्सरे महिमा सम्बभूवे'ति नानुवषट्करोति तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ नान्येषाम्पशूनान्तेदन्या ऽअवद्यन्ति । अवद्यन्त्यश्वस्य

(१) शु० य० सं० २३. ३। (२) शु० य० सं० २३. ४।

दक्षिणतोऽन्न्येषाम्पशूनामवद्यन्त्युत्तरतोऽश्वस्य प्लक्षशाखास्वन्न्येषाम्पशूनामवद्यन्ति वेतसशाखास्वश्वस्य ॥ ८ ॥ तदु होवाच सात्ययज्ञिः । इतरथैव कुर्य्युः पथ ऽएव नापोदित्यमिति पूर्वां त्वेव स्थितिरुक्तथ्यो यज्ञस्तेनान्तरिक्षलोकमृद्ध्नोति सर्वस्तोमोऽतिरात्र ऽउत्तममहर्ब्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ९ ॥ तस्य त्रिवृद्बहिष्पवमानम् *। पञ्चदशान्न्याज्यानि सप्तदशो माद्ध्यन्दिनः पवमान ऽएकविंशानि पृष्ठानि त्रिणवस्तृतीयः पवमानस्त्रयस्त्रिंशमग्निष्टोमसामैकविंशान्न्युक्क्थान्न्येकविंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरर्थ्यद्द्वितीयस्याह्नः पृष्ठ्यस्य षडहस्य तच्छत्रमतिरात्रो यज्ञस्तेनामुँल्लोकमृद्ध्नोति ॥ १० ॥ एकविंशतिः सवनीयाः पशवः । सर्वे ऽआग्नेयास्तेषां समानङ्कर्म्मेत्यु हैक ऽआहुश्चतुर्विंशतिन्त्वेवैतान्न्गव्यानालभेत द्वादशभ्यो देवताभ्यो द्वादश मासाः सँवत्सरः सर्वं सँवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ११ ॥ †

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—०—

* सामगानामुत्तरार्चिके तृचात्मकानि सूक्तान्याम्नातानि ( साम० उ० १. १. १–९ )। तत्र 'उपास्मै' इत्याद्यं सूक्तम् । 'देवि द्युतत्या' इति द्वितीयम् । 'पवमानस्य ते' इति तृतीयम् । प्रातःस्वनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गीयते । तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते । तत्र स्थितानामृचां पवमानार्थत्वाद्बहिःसम्बन्धाच्च ।

† शतम् ६७०० ।

[ प्रत्यृतु पश्वालम्भः ]

एतेन हेन्द्रोतो दैवापः शौनकः। जनमेजयम्पारिक्षितं स्याजयाञ्चकार तेनेष्ट्वा सर्वाम्पापकृत्त्याꣳ सर्वाम्ब्रह्महत्त्यामपजघान सर्वाꣳ ह वै पापकृत्त्याꣳ सर्वाम्ब्रह्महत्त्यामपहन्ति योऽश्वमेधेन यजते ॥ १ ॥ तदेतद्गाथयाभिगीतम्। आसन्दीवति धान्न्यादꣳ रुक्मिणꣳ हरितस्रजम् ॥ अबद्ध्नादश्वꣳ सारङ्गन्देवेभ्यो जनमेजय ऽइति ॥ २ ॥ एते ऽएव पूर्व्वे ऽअहनी। ज्योतिरतिरात्रस्तेन भीमसेनमेते ऽएव पूर्व्वे ऽअहनी गौरतिरात्रस्तेनोग्रसेनमेते ऽएव पूर्व्वे ऽअहनी ऽआयुरतिरात्रस्तेन श्श्रुतसेनमित्येते पारिक्षितीयास्तदेतद्गाथयाभिगीतम्पारिक्षिता यजमाना ऽअश्वमेधैः परोऽवरम् ॥ अजहुः कर्म्म पापकम्पुण्ण्याः पुण्ण्येन कर्म्मणेति ॥ ३ ॥ एते ऽएव पूर्व्वे ऽअहनी। अभिजिदतिरात्रस्तेन ह पर ऽआट्णार ऽईजे कौसल्ल्यो राजा तदेतद्गाथयाभिगीतमट्णारस्य परः पुत्रोऽश्वम्मेध्यमबन्धयत् ॥ हैरण्ण्यनाभः कौसल्ल्यो दिशः पूर्ण्णा अमꣳहतेति ॥ ४ ॥ एते ऽएव पूर्व्वे ऽअहनी। विश्वजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्ग्गहेणेज ऽऐक्ष्वाको राजा तस्मादेतदृषिणाभ्यनूक्त'मस्माकमत्र पितरस्त ऽआसन्त्सप्त ऽऋषयो दौर्ग्गहे बद्ध्यमान' ऽइति ॥ ५ ॥ एते ऽएव पूर्व्वे ऽअहनी। महाव्रतमतिरात्रस्तेन ह मरुत्त ऽआविक्षित ऽईज ऽआयोगवो राजा तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः

(१) ऋ० सं० ३. ७. १८।

सभासदो बभूवुस्तदेतद्गाथयाभिगीतम्मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे ॥ आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासद ऽइति मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो भवन्ति योऽश्वमेधेन यजते ॥ ६ ॥ एते ऽएव पूर्वे ऽअहनी । अप्तोर्यामोऽतिरात्रस्तेन हैतेन क्रैव्य ऽईजे पाञ्चालो राजा क्रिवय ऽइति ह वै पुरा पञ्चालानाचक्षते तदेतद्गाथयाभिगीतमश्वम्मेध्य-मालभत क्रिवीणामतिपूरुषः ॥ पाञ्चालः परिवक्रायाꣳ सहस्रशतदक्षिणमिति ॥ ७ ॥ अथ द्वितीयया । सहस्रमास-न्नयुता शता च पञ्चविꣳशतिः ॥ दिक्कोदिक्कः पञ्चालाना-म्ब्राह्मणा या विभेजिर ऽइति ॥ ८ ॥ त्रिवृदग्निष्टोमः । पञ्चदश ऽउक्थ्यः सप्तदशन्तृतीयमहः सोक्थकमेकविꣳ-शः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरित्येषोऽनुष्टुप्सम्प-न्नस्तेन हैतेन ध्वसा द्वैतवन ऽईजे मात्स्यो राजा यत्रैत-द्द्वैतवनꣳ सरस्तदेतद्गाथयाभिगीतञ्चतुर्दश द्वैतवनो राजा सङ्ग्रामजिद्धयान् ॥ इन्द्राय वृत्रघ्नेऽबद्ध्नात्तस्माद्द्वैतवनꣳ सर ऽइति ॥ ९ ॥ चतुर्विꣳशाः पवमानाः । त्रिवृदभ्या-वर्त्तश्चतुश्चत्वारिꣳशाः पवमाना ऽएकविꣳशमभ्यावर्त्तम-ष्टाचत्वारिꣳशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्त्तमाग्निष्टोम-सामाद्द्वात्रिꣳशान्युक्थान्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरिति ॥ १० ॥ एतद्विष्णोः क्रान्तम् । तेन हैतेन भरतो दौःषन्तिरीजे तेनेष्ट्वेमां व्यष्टिं व्यानशे येयम्भरतानान्तदेतद्गाथयाभिगीतमष्टासप्ततिम्भरतो दौः-

षन्तिर्य्यमुनामनु ॥ गङ्गायां व्वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतꣳ हयानिति ॥ ११ ॥ अथ द्वितीयया । त्रयस्त्रिꣳशꣳ शतꣳ राजाऽश्वान्बद्ध्वाय मेद्ध्यान् ॥ सौद्युम्निरत्त्यष्ठादन्न्यानमायान्मायवत्तर ऽइति ॥ १२ ॥ अथ तृतीयया । शकुन्तला नाडपित्त्यप्सरा भरतन्दधे ॥ परꣳ सहस्रानिन्द्रायाऽश्वान्मेद्ध्यान्य ऽआहरद्विजित्त्य पृथिवीꣳ सर्व्वामिति ॥ १३ ॥ अथ चतुर्त्थ्या । महदद्य भरतस्य न पूर्व्वे नापरे जनाꣳ ॥ दिवम्मर्त्त्य ऽइव बाहुब्भ्यान्नोदापुꣳ पञ्च मानवा ऽइति ॥१४॥ एकविꣳशस्तोमेन ऽऋषभो याज्ञतुर ऽईजे श्विक्नानाꣳ राजा तदेतद्गाथयाभिगीतं य्याज्ञतुरे य्यजमाने ब्ब्रह्माण ऽऋषभे जनाꣳ ॥ अश्वमेधे धनँल्लब्ध्वा व्विभजन्ते स्म दक्षिणा ऽइति ॥ १५ ॥ त्रयस्त्रिꣳशस्तोमेन । शोणꣳ सात्रासाह ऽईजे पाञ्चालो राजा तदेतद्गाथयाभिगीतꣳ सात्रासाहे[1] य्यजमानेऽश्वमेधेन तौर्व्वशाꣳ ॥ उदीरते त्रयस्त्रिꣳशाꣳ षट् सहस्राणि व्वर्म्मिणामिति ॥ १६ ॥ अथ द्वितीयया । षट् षट् षड्ढा सहस्राणि यज्ञे कोकपितुस्तव ॥ उदीरते त्रयस्त्रिꣳशाꣳ षट् सहस्राणि व्वर्म्मिणामिति ॥ १७॥ अथ तृतीयया । सात्रासाहे[2] य्यजमाने पाञ्चाले राज्ञि सुस्रजि ॥ अमाद्यदिन्द्रꣳ सोमेनातृप्प्यन्ब्राह्मणा धनैरिति ॥ १८ ॥ गोविनतेन शतानीकꣳ । सात्राजित ऽईजे काश्यस्याश्वमादाय ततो हैतदर्व्वाक्काशयोऽग्नीन्नादधत ऽआत्तसोमपीथाꣳ स्म ऽइति व्वदन्तꣳ ॥ १९ ॥ तस्य विधा चतुर्व्विꣳशाꣳ पव-

(१–२) 'सात्रासहे' इति 'ग' 'ज' पुस्तकयोः पाठः ।

मानाः । त्रिवृदभ्यावर्त्तश्चतुश्चत्वारिꣳशाः पवमाना ऽएक-
विꣳशान्याज्यानि तृणवान्युक्थान्येकविꣳशानि पृष्ठानि
षट्त्रिꣳशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्त्तमाग्निष्टोमसा-
मादेकविꣳशान्युक्थान्येकविꣳशः षोडशी पञ्चदशी रात्रि-
स्त्रिवृत्सन्धिः ॥ २० ॥ तदेतद्गाथयाभिगीतम् । शतानीकः
समन्तासु मेध्यꣳ सात्राजितो हयम् ॥ आदत्त यज्ञङ्काशीनाम्भ-
रतः सत्वतामिवेति ॥ २१ ॥ अथ द्वितीयया । श्वेतꣳ सम-
न्तासु वशञ्चरन्तꣳ शतानीको धृतराष्ट्रस्य मेध्यम् ॥ आदाय
सह्वा दशमास्यमश्वꣳ शतानीको गोविनतेन हेज ऽइति
॥ २२ ॥ अथ चतुर्थ्या । महदद्य भरतानान्न पूर्वे नापरे
जनाः ॥ दिवम्मर्त्य ऽइव पक्षाभ्यान्नोदापुः सप्त मानवा
ऽइति ॥ २३ ॥ अथातो दक्षिणानाम् । मध्यम्प्रति राष्ट्रस्य
यदन्यद्भूमेश्च पुरुषेभ्यश्च ब्ब्राह्मणस्य च वित्तात्प्राची
दिग्घोतुर्दक्षिणा ब्ब्रह्मणः प्प्रतीच्यध्वर्योरुदीच्युद्गातु-
स्तदेव होतृका ऽअन्वाभक्ताः ॥ २४ ॥ उदयनीयायाꣳ
सꣳस्थितायाम् । एकविꣳशतिं वशा ऽअनूबन्ध्या ऽआल-
भते मैत्रावरुणीर्वैश्वदेवीर्ब्बार्हस्पत्या ऽएतासान्देवतानामा-
प्त्यै तद्यद्बार्हस्पत्या ऽअन्त्या[1] भवन्ति ब्ब्रह्म वै बृहस्पतिस्तदु
ब्ब्रह्मण्येवान्ततः प्प्रतितिष्ठति ॥ २५ ॥ अथ षडेकविꣳश-
तिर्भवन्ति । एकविꣳशो वा ऽएष य ऽएष तपति द्वादश
मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएक-
विꣳश ऽएतामभिसम्पदम् ॥ २६ ॥ उदवसानीयायाꣳ

( १ ) 'ग' 'ज' पुस्तकयोः "०स्पत्यान्त्या" इति पाठः ।

सꣳस्थितायाम् *। चतस्रश्च जायाः कुमारीम्पञ्चमीञ्च-त्वारि च शतान्न्यनुचरीणां यथासमुदितन्दक्षिणान्ददाति ॥ २७ ॥ अथोत्तरꣳ सँवत्सरमृतुपशुभिर्यजते† । षड्भिरा-ग्नेयैर्वसन्ते षड्भिरैन्द्रैर्ग्रीष्मे षड्भिः पार्जन्न्यैर्वा मारुतैर्वा वर्षासु षड्भिर्मैत्रावरुणैः शरदि षड्भिरैन्द्रावैष्णवैर्हेमन्ते षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे षडृतवः सँवत्सर ऽऋतुष्वेव सँवत्सरे प्रतितिष्ठति षट्त्रिꣳशदेते पशवो भवन्ति षट्त्रिꣳ-शदक्षरा बृहती बृहत्यामधि स्वर्गो लोकः प्रतिष्ठितस्तद्द-न्ततो बृहत्यैव च्छन्दसा स्वर्गे लोके प्रतितिष्ठति ॥२८॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥ १०६ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

—o—

[ पुरुषमेधः ]

पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयꣳ सर्वाणि भूतान्न्यहमेवेदꣳ सर्वꣳ स्यामिति स ऽएतम्पुरुषमेधम्प-ञ्चरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वात्यतिष्ठ-त्सर्वाणि भूतानीदꣳ सर्वमभवदतितिष्ठति सर्वाणि भूता-नीदꣳ सर्वम्भवति य ऽएवं विद्वान्पुरुषमेधेन यजते यो वैतदेवं वेद ॥ १ ॥ तस्य त्रयोविꣳशतिर्दीक्षाः ‡। द्वा-

* 'उदवसानीयान्ते भार्या ददाति यथासंवादꣳ सानुचरीः' (का० श्रौ०सू०२०.८.२४) इति।

† तथा च सूत्रितं कात्यायनमहर्षिणा 'प्रत्यृतु पशूनालभते षट् षड् वसन्तायाग्नेयानैन्द्रा-न्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्राबार्हस्पत्यान्' ( का० श्रौ० सू० २०. ८. ३० ) इति।

‡ 'पुरुषमेधस्त्रयोविꣳशतिदीक्षोऽतिष्ठाकामस्य' ( का० श्रौ० सू० २१. १. १ ) इति।

दशोपसदः पञ्च सुत्याः स ऽएष चत्वारिꣳशद्रात्रः सदी-
क्षोपसत्कश्चत्वारिꣳशदक्षरा विराट् तद्विराजमभिसम्प-
द्यते '[1]ततो विराडजायत विराजो ऽअधि पूरुष' ऽइत्येषा
वै सा विराडेतस्या ऽएवैतद्विराजो यज्ञम्पुरुषञ्जनयति
॥ २ ॥ ता वा ऽएताः । चतस्रो दशतो भवन्ति तद्यदेता-
श्चतस्रो दशतो भवन्त्येषाञ्चैव लोकानामाप्त्यै दिशाञ्चे-
ममेव लोकम्प्रथमया दशताप्नुवन्नन्तरिक्षन्द्वितीयया
दिवन्तृतीयया दिशश्चतुर्थ्या तथैवैतद्यजमान ऽइममेव
लोकम्प्रथमया दशताप्नोत्यन्तरिक्षन्द्वितीयया दिवन्तृती-
यया दिशश्चतुर्थ्यैतावद्वा ऽइदꣳ सर्वं यावदिमे च लोका
दिशश्च सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ३ ॥
एकादशाग्नीषोमीयाः[2] † पशव ऽउपवसथे । तेषाꣳ समा-
नङ्कर्मैकादश यूपा ऽएकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टु-
ब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मा-
नमपहते ॥ ४ ॥ ऐकादशिनाः सुत्यासु पशवो भवन्ति ।
एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण
यजमानः पुरस्तात्पाप्मानमपहते ॥ ५ ॥ यद्वेवैकादशिना
भवन्ति । एकादशिनी वा ऽइदꣳ सर्वम्प्रजापतिर्ह्येकादशिनी
सर्वꣳ हि प्रजापतिः सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्व-
स्यावरुद्ध्यै ॥ ६ ॥ स वा ऽएष पुरुषमेधः पञ्चरात्रो यज्ञ-

---

(१) शु० य० सं० ३१. ५ ।

(२) 'ग' 'ज' पुस्तकयोः "एकादशाग्निषोमीयाः" इति पाठो दृश्यते, स तु प्रामादिक एव, 'ईदग्नेः सोमवरुणयोः' ( पा० ६. ३. २७ ) इति सूत्रेण—ईद्विधानात् ।

† का० श्रौ० सू० २१. १. ५ ।

क्रतुर्भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः सँव-त्सरो यत्किञ्च पञ्चविधमधिदेवतमध्यात्मन्तदेनेन सर्व्व-माप्नोति ॥ ७ ॥ तस्याग्निष्टोमः प्रथममहर्भवति । अथोक्थ्योऽथातिरात्रोऽथोक्थ्योऽथाग्निष्टोमः स वा ऽएष ऽउभयतोज्योतिरुभयतऽउक्थ्यः ॥ ८ ॥ यवमध्यः पञ्चरात्रो भवति । इमे वै लोकाः पुरुषमेध ऽउभयतो-ज्योतिषो वा ऽइमे लोका ऽअग्निनेत ऽआदित्येनामुतस्त-स्मादुभयतोज्योतिरन्नमुक्थ्य ऽआत्मातिरात्रस्तद्यदेता ऽउ-क्थ्यावतिरात्रमभितो भवतस्तस्मादयमात्मान्नेन परि-वृढोऽथ यदेष वर्षिष्ठोऽतिरात्रोऽह्नाᳫं स मध्ये तस्मा-द्यवमध्यो युते ह वै द्विषन्तम्भ्रातृव्यमयमेवास्ति नास्य द्विषन्भ्रातृव्य ऽइत्याहुर्य ऽएवं वेद ॥ ९ ॥ तस्याय-मेव लोकः प्रथममहः । अयमस्य लोको वसन्त ऽऋ-तुर्यदूर्द्ध्वमस्माल्लोकादर्वाचीनमन्तरिक्षात्तद्द्वितीयमहस्तदस्य ग्रीष्म ऽऋतुरन्तरिक्षमेवास्य मध्यममहरन्तरिक्षमस्य वर्षाशरदावृतू यदूर्द्ध्वमन्तरिक्षादर्वाचीनन्दिवस्तच्चतुर्थमह-स्तदस्य हेमन्त ऽऋतुर्द्यौरेवास्य पञ्चममहर्द्यौरस्य शिशिर ऽऋतुरित्यधिदेवतम् ॥ १० ॥ अथाध्यात्मम् । प्रतिष्ठै-वास्य प्रथममहः प्रतिष्ठो ऽअस्य वसन्त ऽऋतुर्यदूर्द्ध्व-म्प्रतिष्ठाया ऽअवाचीनम्मध्यात्तद्द्वितीयमहस्तदस्य ग्रीष्म ऽऋतुर्म्मध्यमेवास्य मध्यममहर्म्मध्यमस्य वर्षाशरदावृतू यदूर्द्ध्वम्मध्यादवाचीनᳫं शीर्ष्णस्तच्चतुर्थमहस्तदस्य हेमन्त ऽऋतुः शिर ऽएवास्य पञ्चममहः शिरोऽस्य शिशिर ऽऋतु-

रेवमिमे च लोकाः सँवत्सरश्चात्मा च पुरुषमेधमभिसम्पद्यन्ते सर्वं वा ऽइमे लोकाः सर्वꣳ सँवत्सरः सर्वमात्मा सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ११ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ ब्राह्मणादीनामष्टाचत्वारिंशत्संख्यकानामग्निष्ठे यूपे नियोजनादि ]

अथ यस्मात्पुरुषमेधो नाम । इमे वै लोकाः पूरयमेव पुरुषो योऽयम्पवते सोऽस्याम्पुरि शेते तस्मात्पुरुषस्तस्य यदेषु लोकेष्वन्नन्तदस्यान्नम्मेधस्तद्यदस्यैतदन्नम्मेधस्तस्मात्पुरुषमेधोऽथो यदस्मिन्मेध्यान्पुरुषानालभते तस्माद्वेव पुरुषमेधः ॥ १ ॥ तान्वै मध्यमेऽहन्नालभते । अन्तरिक्षं वै मध्यममहरन्तरिक्षमु वै सर्वेषाम्भूतानामायतनमथो ऽअन्नं वा ऽएते पशव ऽउदरम्मध्यममहरुदरे तदन्नन्दधाति ॥ २ ॥ तान्वै दश दशालभते । दशाक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै ॥ ३ ॥ एकादश दशत ऽआलभते । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्मानमपहते ॥ ४ ॥ अष्टाचत्वारिꣳशतम्मध्यमे यूप ऽआलभते । अष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्द्धे ॥५॥ एकादशैकादशेतरेषु । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानोऽभितः पाप्मानमपहते ॥ ६ ॥ अष्टा ऽउत्तमानालभते । अष्टाक्षरा गायत्री ब्रह्म गायत्री तद्ब्रह्मैवैतदस्य

सर्वस्योत्तमङ्करोति तस्माद्ब्रह्मास्य सर्वस्योत्तममित्याहुः ॥ ७ ॥ ते वै प्राजापत्या भवन्ति। ब्रह्म वै प्रजापति-र्ब्राह्मो हि प्रजापतिस्तस्मात्प्राजापत्या भवन्ति ॥ ८ ॥ स वै पशूनुपाकरिष्ष्यन् *। एतास्तिस्रः सावित्री-राहुतीर्जुहोति 'देव सवितस्तत्सवितुर्वरेण्यं विश्वानि देव सवित'रिति सवितारम्प्रीणाति सोऽस्मै प्रीत ऽएतान्पु रुषान्प्रसौति तेन प्रसूतानालभते ॥ ९ ॥ ब्रह्मणे ब्राह्म-णमालभते। ब्रह्म वै ब्राह्मणो ब्रह्मैव तद्ब्रह्मणा समर्द्ध-यति क्षत्राय राजन्यं क्षत्रं वै राजन्यः क्षत्रमेव तत्क्षत्रेण समर्द्धयति मरुद्भ्यो वैश्यं विशो वै मरुतो विशमेव तद्विशा समर्द्धयति तपसे शूद्रन्तपो वै शूद्रस्तप ऽएव तत्त-पसा समर्द्धयत्त्येवमेता देवता यथारूपम्पशुभिः समर्द्धयति ता ऽएनꣳ समृद्धाः समर्द्धयन्ति सर्वैः कामैः ॥ १० ॥ आज्येन जुहोति। तेजो वा ऽआज्यन्तेजसैवास्मिँस्त-त्तेजो दधात्याज्येन जुहोत्त्येतद्वै देवानाम्प्रियन्धाम यदाज्य-म्प्रियेणैवैनान्धाम्म्ना समर्द्धयति त ऽएनꣳ समृद्धाः सम-र्द्धयन्ति सर्वैः कामैः ॥ ११ ॥ नियुक्तान्पुरुषान्। ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपा'दित्त्येतेन षोडशर्च्चेन षोडशकलं वा ऽइदꣳ सर्वꣳ सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या ऽइत्थमसी-त्थमसीत्त्युपस्तौत्त्येवैनमेतन्महयत्त्येवाथो यथैष तथैनमेतदाह

* 'पशूनुपाकरिष्यन्नतिरात्रेण देव सवितरिति प्रत्यृचं जुहोति' ( का० श्रौ० सू० २१. १. ६ ) इति।

( १ ) शु० य० सं० ३०। १-३। ( २ ) शु० य० सं० ३१. १।

तत्पुर्य्यग्निकृताः पशवो बभूवुरसंज्ञप्ताः ॥ १२ ॥ अथ हैनं व्वागभ्युवाद । पुरुष मा सन्तिष्ठिपो यदि सꣳस्थापयिष्यसि पुरुष ऽएव पुरुषमत्स्यतीति तान्पुर्य्यग्निकृतानेवोदसृजत्तद्देवत्या ऽआहुतीरजुहोत्ताभिस्ता देवता ऽअप्रीणात्ता ऽएनम्प्रीता ऽअप्रीणन्त्सर्व्वैः कामैः ॥ १३ ॥ आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्मिँस्तत्तेजो दधाति ॥ १४ ॥ ऐकादशिनैः सꣳस्थापयति । एकादशाक्षरा त्रिष्टुब्व्वज्रस्त्रिष्टुब्व्वीर्य्यन्त्रिष्टुब्व्वज्रेणैवैतद्वीर्य्येण यजमानो मद्ध्यतः पाप्मानमपहते ॥ १५ ॥ उदयनीयायाꣳ सꣳस्थितायाम् । एकादश व्वशा ऽअनूबन्ध्या ऽआलभते मैत्रावरुणीर्व्वैश्वदेवीर्ब्बार्हस्पत्या ऽएतासान्देवतानामाप्त्यै तद्यद्बार्हस्पत्या ऽअन्त्या भवन्ति ब्ब्रह्म वै बृहस्पतिस्तदु ब्ब्रह्मण्येवान्ततः प्प्रतितिष्ठति ॥ १६ ॥ अथ यदेकादश भवन्ति । एकादशाक्षरा त्रिष्टुब्व्वज्रस्त्रिष्टुब्व्वीर्य्यन्त्रिष्टुब्व्वज्रेणैवैतद्वीर्य्येण यजमानोऽन्ततः पाप्मानमपहते त्रैधातव्व्युदवसानीयासावेव बन्धुः ॥ १७ ॥ अथातो दक्षिणानाम् । मद्ध्यम्प्रति राष्ट्रस्य यदन्यद्भूमेश्च ब्ब्राह्मणस्य च वित्तात्सपुरुषम्प्राची दिग्घोतुर्द्दक्षिणा ब्ब्रह्मणः प्प्रतीच्यद्ध्वर्य्योरुदीच्युद्गातुस्तदेव होतृका ऽअन्वाभक्ताः ॥१८॥ अथ यदि ब्ब्राह्मणो यजेत । सर्व्ववेदसन्दद्यात्सर्व्वं वै ब्ब्राह्मणः सर्व्वꣳ सर्व्ववेदसꣳ सर्व्वम्पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै

---

(१) 'ग' 'ज' पुस्तकयोः "मध्यतः" इति पाठः ।

॥१९॥ अथात्मन्नग्नी समारोह्य *। उत्तरनारायणेनादित्त्यमुपस्थायानपेक्षमाणोऽरण्ण्यमभिप्प्रेयात्तदेव मनुष्ष्येब्भ्यस्तिरो भवति यद्यु ग्ग्रामे व्विवत्त्सेदरण्ण्योरग्नी समारोह्योत्तरनारायणनैवादित्त्यमुपस्त्थाय १ गृहेषु प्प्रत्त्यवस्येदथ तान्न्यज्ञक्रूनाहरेत यानब्भ्याप्प्नुयात्त्स वा ऽएष न सर्वस्स्मा ऽअनुवक्तव्व्यः सर्वꣳ हि पुरुषमेधो नेत्त्सर्वस्स्मा ऽइव सर्वम्ब्रवाणीति यो न्न्वेव ज्ञातस्तस्स्मै ब्ब्रूयादथ योऽनूचानोऽथ योऽस्य प्प्रियः स्यान्नेत्त्वेव सर्वस्स्मा ऽइव ॥ २० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

—— ० ——

[ सर्वमेधः ]

ब्रह्म वै स्वयम्भु तपोऽतप्प्यत । तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहम्भूतेष्ष्वात्त्मानञ्जुहवानि भूतानि चात्त्मनीति तत्त्सर्वेषु भूतेष्ष्वात्त्मानꣳ हुत्त्वा भूतानि चात्त्मनि सर्वेषाम्भूतानाꣳ श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्त्यम्पर्यैत्तथैवैतद्यजमानः सर्वमेधे सर्वान्म्मेधान्हुत्त्वा २ सर्वेषाम्भूतानाꣳ

* का० श्रौ० सू० २१. १. १७। 'गार्हपत्येऽधरारणिमनुप्रहृत्याहवनीय उत्तरारणिमात्मन्यग्नी समारोप्यारण्यं व्रजेत्' इति शाङ्खायनोक्तिः । तथा च मनुः 'आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्' ( मनु० ६. ३८ ) इति ।

'त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत इत्यनुवा केनानपेक्षमाणोऽण्यं गत्वा न प्रत्यवेयात्' 'ग्रामे वा विवत्सन्नरण्योः' ( का० श्रौ० सू० २१ । १ । १७–१८ ) इति कात्यायनोक्तिः ।

( १ ) "अद्भ्यः सम्भृतः" इत्यादिषण्णां कण्डिकानामुत्तरनारायणमिति संज्ञा ।

( २ ) 'ग' 'ज' पुस्तकयोः 'सर्व्वेषाम्भूतानाम्' इत्यस्य स्थाने 'सर्व्वाणि भूतानि' इति पाठः समुपलभ्यते ।

श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यम्पर्य्येति ॥ १ ॥ स वा ऽएष सर्वमेधो दशरात्रो यज्ञक्रतुर्भवति । दशाक्षरा विराड्विराड् कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै तस्मिन्नग्निम्परार्द्ध्यञ्चिनोति परमो वा ऽएष यज्ञक्रतूनां यत्सर्वमेधः परमेणैवैनम्परमताङ्गमयति ॥ २ ॥ तस्याग्निष्टुदग्निष्टोमः प्रथममहर्भवति । अग्निर्वा ऽअग्निष्टुदग्निष्टोमोऽग्निमुखा ऽउ वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्याग्नेया ग्ग्रहा भवन्त्याग्नेय्यः पुरोरुचः सर्वमाग्नेयमसदिति ॥ ३ ॥ इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति । इन्द्रो वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्यैन्द्रा ग्ग्रहा भवन्त्यैन्द्र्यः पुरोरुचः सर्वमैन्द्रमसदिति ॥ ४ ॥ सूर्यस्तुदुक्थ्यस्तृतीयमहर्भवति । सूर्यो वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्य[1] सौर्या ग्ग्रहा भवन्ति सौर्यः पुरोरुचः सर्वꣳ सौर्यमसदिति ॥ ५ ॥ वैश्वदेवस्तुच्चतुर्थमहर्भवति । विश्वे वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्य[2] वैश्वदेवा ग्ग्रहा भवन्ति वैश्वदेव्यः पुरोरुचः सर्वं वैश्वदेवमसदिति ॥ ६ ॥ आश्वमेधिकम्मध्यमम्पञ्चममहर्भवति । तस्मिन्नश्वम्मेध्यमालभतेऽश्वमेधस्यैवाप्त्यै ॥ ७ ॥ पौरुषमेधिकम्मध्यमꣳ षष्ठमहर्भवति । तस्मिन्मेध्यान्पुरुषानालभते पुरुषमेधस्यैवाप्त्यै ॥ ८ ॥ अप्तोर्यामः सप्तममहर्भवति । सर्वेषां यज्ञक्रतूनामाप्त्यै तस्मिन्त्सर्वान्मेध्यानालभते यच्च प्राणि यच्चाप्राणं वपा वपावताञ्जुहोति

( १–२ ) 'ग' 'ज' पुस्तकयोः 'तस्य' इति पाठो नोपलभ्यते ।

त्वच ऽउत्कृत्तमवपाकानाथ्ठं संव्व्रश्चमोषधिवनस्प्पतीनाम्प्र-किरन्ति शुष्काणाञ्चार्द्राणाञ्चान्नमन्नञ्जुहोत्यन्नस्यान्नस्याप्प्त्यै सर्वञ्जुहोति सर्वस्म्मै जुहोति सर्वस्याप्प्त्यै सर्वस्यावरुद्ध्यै प्प्रातःसवने हुतासु व्वपास्वेवमेव तृतीयसवने हुतेषु हविःषु ॥ ९ ॥ त्रिणवमष्टममहर्ब्भवति । व्वज्ज्रो वै त्रिणवो व्वज्ज्रेण खलु वै क्षत्रथ्ठं स्पृतन्तद्वज्ज्रेणैव क्षत्रथ्ठं स्पृणोति ॥ १० ॥ त्रयस्त्रिꣳशन्नवममहर्ब्भवति । प्प्रतिष्ठा वै त्रय-स्त्रिꣳशः प्प्रतिष्ठित्यै ॥ ११ ॥ व्विश्श्वजित्सर्वपृष्ठोऽति-रात्रो दशममहर्ब्भवति । सर्वं वै व्विश्श्वजित्सर्वपृष्ठोऽति-रात्रः सर्वꣳ सर्वमेधः सर्वस्याप्प्त्यै सर्वस्यावरुद्ध्यै ॥ १२ ॥ अथातो दक्षिणानाम् । मद्ध्यम्प्प्रति राष्ट्रस्य यदन्यद्ब्रा-ह्मणस्य व्वित्तात्सभूमि सपुरुषम्प्राची दिग्घोतुर्द्दक्षिणा ब्ब्रह्मणः प्प्रतीच्च्यद्ध्वर्य्योरुदीच्च्युद्गातुस्तदेव होतृका ऽअन्वाभक्ताः ॥ १३ ॥ तेन हैतेन व्विश्श्वकर्म्मा भौवन ऽईजे । तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदꣳ सर्वमभवदति-तिष्ठति सर्वाणि भूतानीदꣳ सर्वम्भवति य ऽएवं व्विद्वा-न्त्सर्वमेधेन यजते यो वैतदेवं व्वेद ॥ १४ ॥ तꣳ ह कश्श्यपो याजयाञ्चकार । तदपि भूमिः श्लोकञ्जगौ न मा मर्त्यः कश्चन दातुमर्हति व्विश्श्वकर्म्मन्भौवन मन्द ऽआसिथ ॥ उपमङ्क्ष्यति स्या सलिलस्य मद्ध्ये मृषैष ते सङ्गरः कश्श्यपायेति ॥ १५ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

[ ब्राह्मणचतुष्टयेन पितृमेधनिरूपणम् ]

* अथास्म्मै श्म्मशानङ्कुर्वन्ति । गृहान्न्वा प्प्रज्ञानं वा यो वै कश्च म्म्रियते स शवस्तस्म्मा ऽएतदन्नङ्करोति तस्म्माच्छवान्नꣳ शवान्नꣳ ह वै तच्छ्म्मशानमित्त्याचक्षते परोक्षꣳ श्म्मशा ऽउ हैव नाम पितॄणामत्त्तारस्ते हामुष्म्मिँल्लोके ऽकृतश्म्मशानस्य साधुकृत्त्यामुपदम्भयन्ति तेब्भ्य ऽएतदन्नङ्करोति तस्म्माच्छ्म्मशान्नꣳ श्म्मशान्नꣳ ह वै तच्छ्म्मशानमित्त्याचक्षते परोऽक्षम् ॥ १ ॥ तद्वै न क्षिप्प्रङ्कुर्य्यात् । नेन्नवमघङ्करवाणीति चिर ऽएव कुर्य्यादघमेव तत्तिरः करोति यत्र समा नानु चन स्म्मरेयुरश्श्रुतिमेव तदघङ्गमयति यद्यनुस्म्मरेयुः ॥ २ ॥ अयुक्ष्षु सँव्वत्सरेषु कुर्य्यात् । अयुग्घि पितॄणामेकनक्षत्र ऽएकनक्षत्रꣳ हि पितॄणाममावास्यायाममावास्या वा ऽएकनक्षत्रमेको हि यद्वेताꣳ रात्रिꣳ सर्वाणि भूतानि सँव्वसन्ति तेनो तङ्काममाप्प्नोति यः सर्वेषु नक्षत्रेषु ॥ ३ ॥ शरदि कुर्य्यात् । स्वधा वै शरत्स्वधो वै पितॄणामन्नन्तदेनमन्ने स्वधायान्दधाति माघे वा मा नोऽघमभूदिति निदाघे वा नि नोऽघन्धीयाता ऽइति ॥४॥ [अर्धप्रपाठकः ॥५०॥] चतुःस्रक्ति । देवाश्चासुराश्चोभये प्प्राजापत्त्या दिक्ष्वस्प्पर्द्धन्त ते देवा ऽअसुरान्त्सपत्नान्भ्रातृव्व्यान्दिग्भ्योऽनुदन्त तेऽदिक्काः पराभवँस्तस्म्माद्या दैव्व्यः प्प्रजा-

* अत्राध्यायारम्भे 'अथास्मै कल्याणङ्कुर्व्वन्ति' इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोरुपलभ्यते । स तु प्रामादिक एव प्रतीयते, प्राचीनतमहस्तलिखितपुस्तकेष्वदर्शनात् ।

श्चतुःस्रक्तीनि ताः श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यः प्प्राच्च्यास्त्वद्द्ये त्वत्परिमण्डलानि तेऽनुदन्त ह्येनान्दिग्भ्य ऽउभे दिशावन्तरेण विदधाति प्प्राचीञ्च दक्षिणाञ्चैत-स्याथं ह दिशि पितृलोकस्य द्वारन्द्वारैवैनम्पितृलोकम्प्रपाद-यति स्रक्तिभिर्द्दिक्षु प्प्रतितिष्ठतीतरेणात्मनावान्तरदिक्षु तदेनः सर्व्वासु दिक्षु प्प्रतिष्ठापयति ॥ ५ ॥ अथातो भूमिजोषणस्य । उदीचीनप्प्रवणे करोत्युदीची वै मनु-ष्ष्याणान्दिक्तदेनम्मनुष्ष्यलोक ऽआभजत्त्येतद्ध वै पितरो मनुष्ष्यलोक ऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्प्रजा हास्य श्श्रेयसी भवति ॥ ६ ॥ दक्षिणाप्प्रवणे * कुर्य्या-दित्याहुः । दक्षिणाप्प्रवणो वै पितृलोकस्तदेनम्पितृलोक ऽआभजतीति न तथा कुर्य्यादामीवद्ध नाम तच्छ्मशान-करणङ्क्षिप्प्रे हैषामपरोऽनुप्प्रैति ॥ ७ ॥ दक्षिणाप्प्रवणस्य प्प्रत्त्यर्षे कुर्य्यादित्यु हैक ऽआहुः । तत्प्रत्युच्छ्रितमघम्भव-तीति नो ऽएव तथा कुर्य्याद्यद्वा ऽउदीचीनप्प्रवणे करोति तदेव प्प्रत्युच्छ्रितमघम्भवति ॥ ८ ॥ यस्यैव समस्य सतः । दक्षिणतः पुरस्तादाप ऽएत्त्य सथंस्थायाप्प्रग्ग्रत्त्य ऽएता-न्दिशमभिनिष्प्पद्याक्षय्या ऽअपोऽपिपद्येरँस्तत्कुर्य्यादन्नं वा ऽआपोऽन्नाद्यमेवास्म्मा ऽएतत्परस्तात्प्रत्त्यग्गदधात्त्यमृतमु वा ऽआप ऽएषो ह जीवानान्दिगन्तरेण सप्तऽर्षीणाञ्चो-दयनमादित्त्यस्य चास्तमयनममृतमेव तज्जीवेषु दधाति तद्धैतत्प्रतिमीवन्नाम श्म्मशानकरणञ्जीवेब्भ्यो हितं यद्वाव

* 'दक्षिणाप्रवण एके' ( का० श्रौ० सू० २१. ३. १७ )।

जीवेभ्यो हितन्तत्पितृभ्यः ॥ ९ ॥ कम्वति * कुर्य्यात् । कम्मेऽसदित्यथो शम्वति शम्मेऽसदिति नाधिपथङ्कुर्य्या-न्नाकाशे नेदाविरघङ्करवाणीति ॥ १० ॥ गुहा सद्वतापि स्यात् । तद्यद्गुहा भवत्यघमेव तद्गुहा करोत्यथ यद्व-ताप्यसौ वा ऽआदित्यः पाप्मनोऽपहन्ता स ऽएवास्मा-त्पाप्मानमपहन्त्यथो ऽआदित्यज्ज्योतिषमेवैनङ्करोति ॥११॥ न तस्मिन्न्कुर्य्यात् । यस्येत्थादनूकाशः स्याद्याचमानः ह नाम तत्क्षिप्प्रे हैषामपरोऽनुप्प्रैति ॥ १२ ॥ चित्र-म्पश्चात्स्यात् । प्रजा वै चित्रश्चित्रः हास्य प्प्रजा भवति यदि चित्रन्न स्यादापः पश्चाद्वोत्तरतो वा स्युरापो ह्येव चित्रश्चित्रः हैवास्य प्प्रजा भवति ॥ १३ ॥ ऊषरे करोति । रेतो वा ऽऊषाः प्प्रजननन्तदेनम्प्रजनन ऽआभ-जत्येतद्ध वै पितरः प्प्रजनन ऽआभक्ता भवन्ति यदेषा-म्प्रजा भवति प्प्रजा हास्य श्श्रेयसी भवति ॥ १४ ॥ समूले समूलः हि पितॄणां वीरिणमिश्श्र[1] ऽएतद्धास्याः पित्र्यमनतिरिक्तमथो ऽअघमेव तद्बह्णू करोति ॥ १५ ॥ न भूमिपाशमभिविदध्यात् । न शरन्नाश्ममगन्धान्नाद्ध्याण्डान्न पृश्निपर्ण्णीन्नाश्श्वत्थस्यान्तिकङ्कुर्य्यान्न विभीतकस्य न तिल्वकस्य न स्फूर्ज्जकस्य न हरिद्रोर्न्न न्यग्ग्रोधस्य ये चान्न्ये पापनामानो मङ्गलोपेप्प्सया नाम्म्नामेव परिहाराय ॥ १६ ॥ अथात ऽआवृदेव । अग्निविधयाग्निचितः श्मशानङ्करोति

* 'शम्वति कम्वति वा' ( का० श्रौ० सू० २१. ३. २२. ) इति ।

( १ ) 'वीरिणमिश्रमेतद्धास्याः' इति 'ग' पुस्तके । 'वीरिणमिश्रमेतमेतद्धास्याः' इति च 'ज' पुस्तके ।

यद्वै यजमानोऽग्निञ्चिनुतेऽमुष्मै तल्लोकाय यज्ञेनात्मानꣳ संस्कुरुत ऽएतदु ह यज्ञियङ्कर्म्मासꣳस्थितमा श्मशानकरणात्तद्यदग्निविधयाग्निचितꣳ श्मशानङ्करोत्यग्निचित्यामेव तत्सꣳस्थापयति ॥१७॥ तद्वै न महत्कुर्य्यात् । नेन्महदघङ्करवाणीति यावानपक्षपुच्छोऽग्निस्तावत्कुर्य्यादित्यु हैक ऽआहुः समानो ह्यस्यैष ऽआत्मा यथैवाग्नेस्तथेति ॥ १८ ॥ पुरुषमात्रन्त्वेव कुर्य्यात् । तथापरस्मा ऽअवकाशन्न करोति पश्चाद्वरीयः प्प्रजा वै पश्चात्प्रजामेव तद्वरीयसीङ्कुरुत ऽउत्तरतो व्वर्षीयः प्प्रजा वा ऽउत्तराः प्प्रजामेव तद्वर्षीयसीङ्कुरुते तद्विधायापसलविसृष्टाभि स्पन्याभिः परुर्यातनोत्यपसलवि पित्र्यꣳ हि कर्म्म ॥ १९ ॥ अथोद्धन्तवा ऽआह । स यावत्येव निवप्प्स्यन्स्यात्तावदुद्धन्न्यात्पुरुषमात्रन्त्वेवोद्धन्न्यात्तथापरस्मा ऽअवकाशन्न करोत्यथो ऽओषधिलोको वै पितर ऽओषधीनाꣳ ह मूलान्न्युपसर्प्पन्त्यथो नेदस्या ऽअन्तर्हितोऽसदिति ॥ २० ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

अन्तर्द्धायो हैके निवपन्ति । देवाश्चासुराश्चोभये प्प्राजापत्या ऽअस्मिँल्लोकेऽस्पर्द्धन्त ते देवा ऽअसुरान्त्सपत्नान्भ्रातृव्व्यानस्माल्लोकादनुदन्त तस्माद्या दैव्व्यः प्प्रजा ऽअनन्तर्हितानि ताः श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यः प्प्राच्च्यास्त्वद्ये त्वदन्तर्हितानि ते चम्वान्त्वद्यस्मिँस्त्वत् ॥ १ ॥ अथैनत्परिश्रिद्भिः परिश्रयति ।

या ऽएवामूः परिश्रितस्ता ऽएता यजुषा ताः परिश्रयति तूष्णीमिमा दैवश्चैव तत्पित्र्यश्च व्याकरोत्त्यपरिमिताभिरपरिमितो ह्यसौ लोकः ॥ २ ॥ अथैनत्पलाशशाखया व्युदूहति * । यदेवादो व्युदूहनन्तदेत ‘दुपेतो [1]यन्तु पणयोऽसुम्म्ना देवपीयव, ऽइति पणीनेवैतदसुम्म्नान्देवपीयूनसुररक्षसान्यस्म्माल्लोकादुपह ‘[2]न्त्यस्य लोकः सुतावत’ ऽइति सुतवान्हि य ऽईजानो ‘[3]द्युभिरहोभिरक्तुभिर्व्यक्त’मिति तदेनमृतुभिश्चाहोरात्रैश्च सलोकङ्करोति ॥ ३ ॥ ‘[4]यमो ददात्त्ववसानमस्म्मा’ ऽइति । यमो ह वा ऽअस्यामवसानस्येष्टे तमेवास्म्मा ऽअस्यामवसानं याचति तान्दक्षिणोदस्यत्त्युदगितरान्दैवश्चैव तत्पित्र्यश्च व्याकरोति ॥ ४ ॥ अथ दक्षिणतः सीरं युनक्ति । उत्तरत ऽइत्त्यु हैक ऽआहुः स यथा कामयेत तथा कुर्य्याद्युङ्क्तेति सम्प्रेष्ष्याभिमन्त्रयते ‘सविता ते शरीरेभ्यः पृथिव्याँल्लोकमिच्छत्त्वि’ति सवितैवास्यैतच्छरीरेभ्यः पृथिव्याँल्लोकमिच्छति ‘तस्म्मै [6]युज्यन्तामुस्त्रिया’ ऽइत्त्येतस्म्मा ऽउ हि कर्म्मण ऽउस्त्रिया युज्यन्ते ॥ ५ ॥ षड्गवम्भवति । षडृतवः सँवत्सर ऽऋतुष्ष्वेवैनमेतत्सँवत्सरे प्प्रतिष्ठायाम्प्रतिष्ठापयति तदपसलवि पर्य्याहृत्त्योत्तरतः प्प्रतीचीम्प्रथमाᳫं सीताङ्[8]कृषति ‘वायुः पुनात्त्वि’ति ‘सविता

* का० श्रौ० सू० २१. १. ३१ ।

(१) शु० य० सं० ३५. १। (२) शु० य० सं० ३५. १। (३) शु० य० ३५. १। (४) शु० य० सं० ३५. १ । (५) शु० य० सं० ३५. २। (६) शु० य० सं० ३५. २। (७) शु० य० सं० ३५. ३। (८) शु० य० सं० ३५. ३।

पुनात्वि'ति जघनार्द्धेन दक्षिणा'ऽग्नेर्भ्राजसे'ति[1] दक्षिणार्द्धेन प्प्राचीᳬ 'सूर्य्यस्य व्वर्चसे'त्यग्ग्रेणोदीचीम् ॥ ६ ॥ *

चतस्रः सीता यजुषा कृषति †। तद्यच्चतसृषु दिक्ष्वन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः ॥ ७ ॥ अथाश्मानं व्विकृषति। तद्यदेव सँव्वत्सरेऽन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तूष्णीमपरिमिताभिरपरिमितो ह्यसौ लोकः ॥ ८ ॥ अथैनद्विमुञ्चति। कृत्वा तत्कर्म्म यस्मै कर्म्मण ऽएनद्युङ्क्ते 'व्विमुच्च्यन्तामुस्रिया'[3] ऽइत्येतस्मा ऽउ हि कर्म्मण ऽउस्रिया युज्यन्ते तद्दक्षिणोदस्यत्युदगितरद्वैव श्वैव तत्पितृयश्च व्याकरोति॥९॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

अथ सर्व्वौषधं व्वपति। यदेवादः सर्व्वौषधन्तदेतद्वल्लीभिस्तद्वपत्येकयेदन्द्वैव श्वैव तत्पितृयश्च व्याकरो'त्यश्वत्थे[4] वो निषदनम्पर्ण्णे वो व्वसतिष्कृते'ति ज्योग्ग्जीवातुमेवैभ्य ऽएतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्प्रैति ॥ १ ॥ अथैनन्निवपति। इयं वै पृथिवी प्प्रतिष्ठास्यामेवैनमेतत्प्रतिष्ठायाम्प्रतिष्ठापयति पुरादित्यस्योदयात्तिर ऽइव वै पितरस्तिर ऽइव रात्रिस्तिर ऽएव तत्करोति यथा कुर्व्वतोऽभ्यु-

---

(१) शु० य० सं० ३५. ३। (२) शु० य० सं० ३५. ३

* अत्र शतम् ६८००।

† का० श्रौ० सू० २१. ४. १।

(३) शु० य० सं० ३५. ३।(४) शु० य० सं० ३५. ४।

दियात्तदेनमुभयोरहोरात्रयोः प्प्रतिष्ठापयति ॥२॥ 'सविता[1] ते शरीराणि । मातुरुपस्त्थ ऽआवपत्त्वि'ति सवितैवास्यैतच्छ-रीराण्यस्यै पृथिव्व्यै मातुरुपस्त्थ ऽआवपति '[2]तस्यै पृथिवि शम्भवे'ति यथैवास्म्मा ऽइयꣳ शꣳ स्यादेवमेतदाह '[3]प्प्रजापतौ त्त्वा देवतायामुपोदके लोके निदधाम्म्यसा'विति नाम गृह्णात्त्ययं वै लोक ऽउपोदकस्तदेनम्प्रजापतौ देवता-यामुपोदके लोके निदधाति ॥ ३ ॥ अथ कश्चिदाह । एतान्दिशमनवानन्त्स्तृत्वा कुम्भम्प्रक्षीयानपेक्षमाण ऽएहीति तत्र जपति '[4]परम्मृत्त्यो ऽअनु परेहि पन्थां य्यस्ते ऽअन्य ऽइतरो देवयानात् ॥ चक्षुष्म्मते श्शृण्वते ते ब्ब्रवीमि मा नः प्प्रजाꣳ रीरिषो मोत वीरा'निति ज्योग्ग्जीवातुमेवैब्भ्य ऽएतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्प्रैति ॥ ४ ॥ अथैनं य्यथाङ्गङ्कल्प्पयति । '[5]शं व्वातः शꣳ हि ते घृणिः शन्ते भवन्त्विष्टकाः ॥ शन्ते भवन्त्वग्ग्नयः पार्थिवासो मा त्त्वाभि-शूशुचन्' ॥ '[6]कल्प्पन्तान्ते दिशस्तुब्भ्यमापः शिवतमास्तु-ब्भ्यम्भवन्तु सिन्धवः ॥ अन्तरिक्षꣳ शिवन्तुब्भ्यङ्कल्प्पन्तान्ते दिशः सर्व्वा' ऽइत्त्येतदेवास्म्मै सर्व्वङ्कल्प्पयत्त्येतदस्म्मै शिव-ङ्करोति ॥ ५ ॥ अथ त्रयोदश पादमात्र्य ऽइष्टका ऽअल-क्षणाः कृता भवन्ति । या ऽएवामूरग्ग्नाविष्टकास्ता ऽएता यजुषा ता ऽउपदधाति तूष्णीमिमा दैवञ्चैव तत्पित्र्यञ्च व्व्याकरोति ॥ ६ ॥ त्रयोदश भवन्ति । त्रयोदश मासाः

(१) शु० य० सं० ३५. ५ । (२) शु० य० सं० ३५. ५ । (३) शु० य० सं० ३५. ६ । (४) शु० य० सं० ३५. ७ । (५) शु० य० सं० ३५. ८ । (६) शु० य० सं० ५३. ९ ।

सँवत्सर ऽऋतुष्ष्वेवैनमेतत्त्सँवत्सरे प्प्रतिष्ट्ठायाम्प्रतिष्ट्ठापयति ॥ ७ ॥ पादमात्र्यो भवन्ति । प्प्रतिष्ट्ठा वै पादः प्प्रतिष्ट्ठामेवास्म्मै करोत्त्यलक्षणा भवन्ति तिर ऽइव वै पितरस्तिर ऽइव तद्यदलक्षणन्तिर ऽएव तत्तिरः करोति ॥ ८ ॥ तासामेकाम्मद्ध्ये प्प्राचीमुपदधाति । स ऽआत्मा तिस्रः पुरस्तान्म्मूर्द्धसꣳहितास्तच्छिरस्तिस्रो दक्षिणतः स दक्षिणः पक्षस्तिस्र ऽउत्तरतः स ऽउत्तरः पक्षस्तिस्रः पश्चात्तत्पुच्छꣳ सोऽस्यैष पक्षपुच्छवानात्मा यथैवाग्नेस्तथा ॥ ९ ॥ अथ प्प्रदरात्पुरीषमाहृत्त्वा ऽआह । एतद्धास्याः पित्र्यमनतिरिक्तमथो ऽअघमेव तद्बहु करोत्त्यस्म्मिन्नु हैकेऽवान्तरदेशे कर्षूङ्खात्त्वा ततोऽभ्याहारङ्कुर्वन्ति परिकृषन्त्यु हैके दक्षिणतः पश्चादुत्तरतस्ततोऽभ्याहारङ्कुर्वन्ति स यथा कामयेत तथा कुर्य्यात् ॥ १० ॥ तद्वै न महत्कुर्य्यात् । नेन्महदघङ्करवाणीति यावानुद्धाहुः पुरुषस्तावत्क्षत्रियस्य * कुर्य्यान्मुखदघ्नम्ब्राह्मणस्योपस्थदघ्नꣳ स्त्रिया ऽऊरुदघ्नं वैश्यस्याष्ठीवद्दघ्नꣳ शूद्रस्यैवं वीर्य्या ह्येत ऽइति ॥ ११ ॥ अधोजानु त्त्वेव कुर्य्यात् । तथापरस्म्मा ऽअवकाशन्न करोति तस्य क्रियमाणस्य तेजनीमुत्तरतो धारयन्ति प्प्रजा ह सा प्प्रजामेव तदुत्तरतो धारयन्ति तान्न न्न्यस्येद्धृत्त्वा वैनामूढ्वा वा गृहेषूच्छ्रयेत्प्रजामेव तद्गृहेषूच्छ्रयति ॥ १२ ॥ कृत्त्वा यवान्न्वपति । अघम्मे यवयानित्त्यवकाभिः प्प्रच्छादयति कम्मेऽसदिति दर्ब्भैः प्प्रच्छादयत्त्यरूक्षतायै ॥ १३ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

अथैनञ्छङ्कुभिः परिणिहन्ति । पालाशम्पुरस्ताद्ब्रह्म वै पलाशो ब्रह्मपुरोगवमेवैनꣳ स्वर्ग्गँल्लोकङ्गमयति शमीमयमुत्तरतः शम्मेऽसदिति वारणम्पश्चादघम्मे वारयाता ऽइति वृत्रशङ्कुन्दक्षिणतोऽघस्यैवानत्ययाय ॥ १ ॥ अथ दक्षिणतः परिवक्के खनन्ति । ते क्षीरेण चोदकेन च पूरयन्ति ते हैनममुष्मिँल्लोकेऽक्षिते कुल्ये ऽउपधावतः सप्तोत्तरतस्ता ऽउदकेन पूरयन्ति न ह वै सप्त स्रवन्तीरघमत्येतुमर्हत्यघस्यैवानत्ययाय ॥ २ ॥ अश्मनस्त्रीँस्त्रीन्प्रकिरन्ति । ता ऽअभ्युत्तरन्त्य[1]'श्मन्वती रीयते सꣳरभध्वमुत्तिष्ठत प्रतरता सखायः ॥ अत्रा जहीमोऽशिवा ये ऽअसञ्छिवान्वयमुत्तरेमाभि वाजा'निति यथैव यजुस्तथा बन्धुः ॥ ३ ॥ अपामार्गैरपमृजते । अघमेव तदपमृजतेऽ[2]'पाघमप किल्विषमप कृत्यामपो रपः ॥ अपामार्ग त्वमस्मदप दुःष्वप्न्यꣳ सुवे'ति यथैव यजुस्तथा बन्धुः ॥ ४ ॥ यत्रोदकम्भवति तत्स्नान्ति । [3]'सुमित्रिया न ऽआप ऽओषधयः सन्त्वि'त्यञ्जलिनाप ऽउपाचति वज्रो वा ऽआपो वज्रेणैवैतन्मित्रधेयङ्कुरुते 'दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म' ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ५ ॥ स यदि स्थावरा ऽआपो भवन्ति । स्थापयन्त्येषाम्पाप्मानमथ यदि वहन्ति वहन्त्येवैषाम्पाप्मानꣳ स्नात्वाहतानि वा-

* 'उरः क्षत्रियस्योर्ध्वबाहु वा' ( का० श्रौ० सू० २१. ४. १३ ) इति ।

( १ ) शु० य० सं० ३५. १० । ( २ ) शु० य० सं० ३५. ११ । ( ३ ) शु० य० सं० ३५. १२ । ( ४ ) शु० य० सं० ३५. १२ ।

साᳪंसि परिधायानडुहः पुच्छमन्न्वारभ्यायन्त्याग्ग्नेयो वा ऽअनड्वानग्ग्निमुखा ऽएव तत्पितृलोकाज्जीवलोकमभ्या- यन्त्यथो ऽअग्ग्निर्वै पथोऽतिवोढा स ऽएनानतिवहति ॥ ६ ॥ 'उद्वयन्तमसस्परी'ति । एतामृचञ्जपन्तो यन्ति तत्तमसः पितृलोकादादित्यञ्ज्योतिरभ्यायन्ति तेभ्य ऽआगतेभ्य ऽआञ्जनाभ्यञ्जने प्प्रयच्छन्त्येष ह मानुषोऽलङ्कारस्तेनैव तम्मृत्युमन्तर्द्धते ॥ ७ ॥ अथ गृहेष्ववग्ग्निᳪं समाधाय । वारणान्न्परिधीन्न्परिधाय वारणेन स्रुवेणाग्ग्नय ऽआयुष्म्मत ऽआहुतिञ्जुहोत्त्यग्ग्निर्वा ऽआयुष्म्मानायुष ऽईष्टे तमेवैभ्य ऽआयुर्य्याचत्य'ग्ग्न ऽआयूᳪंषि पवस' ऽइति पुरोऽनुवा- क्क्याभाजनम् ॥ ८ ॥ अथ जुहोति । 'आयुष्म्मानग्ग्ने ह- विषा व्वृधानो घृतप्प्रतीको घृतयोनिरेधि ॥ घृतम्पीत्वा मधु चारु गव्व्यम्पितेव पुत्त्रमभिरक्षतादिमान्त्स्वाहे'ति यथैवैनानभिरक्षेद्यथाभिगोपायेदेवमेतदाह ॥ ९ ॥ तस्य पुरा- णोऽनड्वान्दक्षिणा * । पुराणा यवाः पुराण्यासन्दी सोप- बर्हणैषा न्न्वादिष्टा दक्षिणा कामं यथाश्रद्धम्भूयसी- र्द्दद्यादिति न्न्वग्ग्निचितः ॥ १० ॥ अथानग्ग्निचितः । एतदेव भूमिजोषणमेतत्समानङ्कर्म्म यदन्न्यदग्ग्निकर्म्मणः कुर्य्यादा- हिताग्ग्नेः शर्क्करा ऽइत्यु हैक ऽआहुर्य्या ऽएवामूरग्ग्न्याधे- यशर्क्करास्ता ऽएता ऽइति न कुर्य्यादित्येक ऽईश्वरो हैता ऽअनग्ग्निचितᳪं सन्तप्तोरिति स यथा कामयेत तथा

(१) शु॰ य॰ सं॰ ३५. १४। (२) शु॰ य॰ सं॰ ३५. १६। (३) शु॰ य॰ सं॰ ३५. १७।

* तथा च कात्यायनः ''आसन्दी सोपधाना दक्षिणाऽनड्वान्यवाश्च सर्वं पुराणम् ( का॰ श्रौ॰ सू॰ २१. ४. २९ ) इति।

कुर्य्यात् ॥ ११ ॥ मर्य्यादाया ऽएव लोष्टमाहृत्य । अन्तरेण निदधाती'मञ्जीवेभ्यः परिधिन्दधामि मैषान्नु गादपरो ऽअर्त्थमेतम् ॥ शतञ्जीवन्तु शरदः पुरूचीरन्तर्म्मृत्युन्दधताम्पर्व्वतेने'ति जीवेभ्यश्चैवैताम्पितृभ्यश्च मर्य्यादाङ्करोत्यसम्भेदाय तस्मादु हैतज्जीवाश्च पितरश्च न सन्दृश्यन्ते ॥ १२ ॥

## अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥१००॥

## इत्यऽष्टमोऽध्यायः ॥ ८ ॥

अश्वमेधनाम त्रयोदशं काण्डं † समाप्तम् ॥ १३ ॥



(१) शु० य० सं० ३५. १५।

† अस्मिन्काण्डे कण्डिकासंख्या ४३२ ।

# अथोपनिषन्नाम * चतुर्दशं काण्डम्

—॰—

काण्डेऽस्मिन्प्रतिपाद्या विषयाः—घर्मः, प्रवर्ग्यः, महावीरः, प्रवर्ग्योत्सादनम्' प्रवर्ग्यकर्तृनियमः, बृहदारण्यकम्, काम्यहवनादि, गर्भाधानादि, जातकर्म, वंशब्राह्मणमिति ।

[ घर्मोपक्रमः ]

॥ ॐ ॥ देवा ह वै सत्रन्निषेदुः । अग्निरिन्द्रः सोमो मखो विष्णुर्विश्वे देवा ऽअन्यत्रैवाश्विभ्याम् ॥ १ ॥ तेषाङ्कुरुक्षेत्रन्देवयजनमास । तस्मादाहुः कुरुक्षेत्रन्देवानान्देवयजनमिति तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति तदेव मन्यत ऽइदन्देवयजनमिति तद्धि देवानान्देवयजनम् ॥ २ ॥ त ऽआसत । श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति तथो ऽएवेमे सत्रमासते ये[1] सत्रमासते श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति ॥३॥ ते होचुः । यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्यज्ञस्योदृचम्पूर्वोऽवगच्छात्स नः श्रेष्ठोऽसत्तदु नः सर्वेषाꣳ सहेति तथेति ॥ ४ ॥ तद्विष्णुः प्रथमः प्राप । स देवानाꣳ श्रेष्ठोऽभवत्तस्मादाहुर्विष्णुर्देवानाꣳ श्रेष्ठ ऽइति ॥ ५ ॥ स यः स विष्णुर्यज्ञः स । स यः स यज्ञोऽसौ स ऽआदित्यस्तद्धेदं यशो विष्णुर्न्न शशाक सँय्यन्तुन्तदिद-

---

* उपनिषच्छब्देन मुख्यया वृत्या ब्रह्मविद्यैवोच्यते । उप समीपस्थं प्रत्यगात्मैकत्वं नीति निश्चितं सत् तत्पराणं सहेतुं संसारं सादयतीत्युपनिषदिति व्युत्पत्तेः । ग्रन्थस्तु विद्यासमर्थकत्वेनोपचारादुपनिषदित्युच्यते ।

( १ ) "ये सत्रमासते" इति पाठः 'ग' 'ज' पुस्तकयोर्न दृश्यते ।

मप्येतर्हि नैव सर्व्व ऽइव यशः शक्क्नोति सँरुषन्तुम् ॥ ६ ॥
स तिस्रधन्न्वमादायापचक्क्राम । स धनुरात्त्न्र्यां शिर ऽउप-स्तभ्य तस्त्थौ तन्देवा ऽअनभिधृष्ण्णुवन्तः समन्तम्प-रिण्ण्यविशन्त ॥ ७ ॥ ता ह व्वम्म्रय ऽऊचुः । इमा वै व्वम्म्रयो यदुपदीका योऽस्य ज्यामप्प्यद्यात्किमस्म्मै प्प्रयच्छेते-त्यन्नाद्यमस्म्मै प्प्रयच्छेमापि धन्न्वन्नपोऽधिगच्छेत्तथास्म्मै सर्व्वमन्नाद्यम्प्रयच्छेमेति तथेति ॥ ८ ॥ तस्योपपरासृत्त्य । ज्यामपिजक्षुस्तस्याञ्छिन्नायान्धनुरात्न्यौ विष्फुरन्त्यौ व्वि-ष्ण्णोः शिरः प्प्रचिच्छिदतुः ॥ ९ ॥ तद्घृङ्ङिति पपात । तत्पतित्त्वासावादित्त्योऽभवदथेतरः प्प्राङेव प्प्रावृज्यत तद्य-द्घृङ्ङित्त्यपतत्तस्म्माद्घर्म्मोऽथ यत्प्रावृज्यत तस्म्मात्प्र-वर्ग्यः ॥ १० ॥ ते देवा ऽअब्रुवन् । महान्बत नो व्वीरोऽ-पादीति तस्म्मान्महावीरस्तस्य यो रसो व्व्यक्षरत्तम्पा-णिभिः सम्ममृजुस्तस्म्मात्सम्राट् ॥ ११ ॥ तन्देवा ऽअभ्य-मृज्यन्त । यथा व्वित्तिं व्वेत्स्यमाना ऽएवन्तमिन्द्रः प्प्रथमः प्प्राप तमन्वङ्गमनुन्न्यपद्यत तम्पर्य्यगृह्णात्तम्परिगृह्येदं रुयशोऽ-भवद्यदिदमिन्द्रो यशो यशो ह भवति य ऽएवं व्वेद ॥ १२ ॥
स ऽउ ऽएव मखः स व्विष्ण्णुः । तत ऽइन्द्रो मखवानभव-न्मखवान्ह वै तम्मघवानित्याचक्षते परोऽक्षम्परोऽक्षकामा हि देवाः ॥ १३ ॥ ताभ्यो व्वम्म्रीभ्योऽन्नाद्यम्प्रायच्छन् । आपो वै सर्व्वमन्नन्ताभिर्हीदमभिक्क्नूयमिवादन्ति यदिद-ङ्किञ्चादन्ति ॥ १४ ॥ अथेमं व्विष्ण्णुं रुयजन्त्रेधा व्व्यभजन्त ।

(१) ग' 'ज' पुस्तकयोः "किम्वदन्ति" इति ।

वसवः प्प्रातःसवनꣳ रुद्रा माध्यन्दिनꣳ सवनमादित्त्या-
स्तृतीयसवनम् ॥ १५ ॥ अग्निः प्प्रातःसवनम् । इन्द्रो
माध्यन्दिनꣳ सवनं विश्श्वे देवास्तृतीयसवनम् ॥ १६ ॥
गायत्री प्प्रातःसवनम् । त्रिष्टुम्माध्यन्दिनꣳ सवनञ्जगती
तृतीयसवनन्तेनापशीर्ष्णा यज्ञेन देवा ऽअर्चन्तः श्राम्म्य-
न्तश्चेरुः ॥ १७ ॥ तद्ध्यङ् ह वा ऽआथर्वणः । एतꣳ शुक्र-
मेतं ꣳयज्ञं विदाञ्चकार यथा यथैतद्यज्ञस्य शिरः प्प्रति-
धीयते यथैष कृत्स्नो यज्ञो भवति ॥ १८ ॥ स हेन्द्रेणोक्त
ऽआस । एतञ्चेदन्न्यस्म्मा ऽअनुब्ब्रूयास्तत ऽएव ते
शिरश्छिन्द्यामिति ॥ १९ ॥ तदु हाश्श्विनोरनुश्श्रुतमास ।
दध्यङ्ङु ह वा ऽआथर्वण ऽएतꣳ शुक्रमेतं ꣳयज्ञं वेद यथा
यथैतद्यज्ञस्य शिरः प्प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति[1]
॥ २० ॥ तौ हेत्योचतुः । उप त्वायावेति किमनुवक्ष्यमाणा-
वित्येतꣳ शुक्रमेतं ꣳयज्ञं ꣳयथा यथैतद्यज्ञस्य शिरः प्प्रति-
धीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २१ ॥ स होवाच ।
इन्द्रेण वा ऽउक्तोऽस्म्येतञ्चेदन्न्यस्म्मा ऽअनुब्ब्रूयास्तत ऽएव
ते शिरश्छिन्द्यामिति तस्माद्वै बिभेमि यद्वै मे स शिरो
न च्छिन्द्यान्न वामुपनेष्य ऽइति ॥ २२ ॥ तौ होचतुः ।
आवान्त्वा तस्म्मात्त्रास्यावहे[2] ऽइति कथम्मा त्रास्येथे
ऽइति यदा ना ऽउपनेष्यसेऽथ ते शिरश्छित्त्वान्न्यत्राप-
निधास्यावोऽथाश्श्वस्य शिर ऽआहृत्य तत्ते प्प्रतिधास्या-
वस्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते तदिन्द्रः

(१) "भवति" इति 'ग' 'ज' पुस्तकयोः । (२) 'ग' 'ज' पुस्तकयोः "व्वह" इति ।

शिरश्छेत्स्यत्यथ ते स्वꣳ शिर ऽआहृत्य तत्ते प्प्रतिधास्याव ऽइति तथेति ॥२३॥ तौ होपनिन्न्ये । तौ यदोपनिन्न्येऽथास्य शिरश्छित्त्वान्न्यत्रापनिदधतुरथाश्श्वस्य शिर ऽआहृत्य तद्धास्य प्प्रतिदधतुस्तेन हाब्भ्यामनूवाच स यदाब्भ्यामनूवाचा-थास्य तदिन्द्रः शिरश्चिच्छेदाथास्य स्वꣳ शिर ऽआहृत्य तद्धास्य प्प्रतिदधतुः ॥२४॥ तस्मादेतदृषिणाब्भ्यनूक्तम् । दध्यङ् ह यन्मध्वाथर्व्वणो वामश्श्वस्य शीर्ष्णा प्प्र यदी-मुवाचेत्ययतन्तदुवाचेति हैव तदुक्तम् ॥ २५ ॥ तन्न सर्व्वस्मा ऽअनुब्ब्रूयात् । एनस्यꣳ हि तदथो नेन्न्म ऽइन्द्रः शिरश्छि-नददिति यो न्न्वेव ज्ञातस्तस्म्मै ब्ब्रूयादथ योऽनूचानोऽथ योऽस्य प्प्रियः स्यान्न त्वेव सर्व्वस्म्मा ऽइव ॥ २६ ॥ सँव-त्सरवासिनेऽनुब्ब्रूयात् । एष वै सँवत्सरो य ऽएष तपत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मात्सँवत्सरवासिनेऽ-नुब्ब्रूयात् ॥ २७ ॥ तिस्रो रात्रीर्व्रतञ्चरति । त्रयो वा ऽऋ-तवः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मात्तिस्रो रात्रीर्व्रतञ्चरति ॥२८॥ तप्तमाचामति । तपस्व्यनुब्ब्रवा ऽइत्त्यमाꣳसाश्श्य-नुब्ब्रूते तपस्व्यनुब्ब्रवा ऽइति ॥ २९ ॥ अमृन्मयपायी । अस्ति वा ऽअस्याꣳ सꣳसृष्टमिव यदस्यामनृतं वदति तस्मादमृन्मयपायी ॥ ३० ॥ अशूद्रोच्छिष्टी । एष वै घर्म्मो य ऽएष तपति सैषा श्रीः सत्यञ्ज्योतिरनृतꣳ स्त्री शूद्रः श्वा कृष्णः शकुनिस्तानि न प्प्रेक्षेत नेच्छ्रियञ्च पाप्मानञ्च नेज्ज्योतिश्च तमश्च नेत्सत्यानृते सꣳसृजा-

नीति ॥ ३१ ॥ अथैष वाव यशः । य ऽएष तपति तद्य-त्तदादित्यो यशो यज्ञो हैव तद्यशस्तद्यत्तद्यज्ञो यशो यज-मानो हैव तद्यशस्तद्यत्तद्यजमानो यश ऽऋत्विजो हैव तद्यशस्तद्यत्तदृत्विजो यशो दक्षिणा हैव तद्यशस्तस्माद्या-मस्मै दक्षिणामानयेयुर्न्न ताᳫं[1] सद्योऽन्न्यस्मा ऽअति-दिशेन्नेद्यन्मेदं स्वयश आगँस्तत्सद्योऽन्न्यस्मा ऽअतिदिशा-नीति श्वो वैव भूते द्व्यहे वा तदात्मन्न्येवैतद्यशः कृत्वा यदेव तद्भवति तत्स ददाति हिरण्यङ्वां वासोऽश्वं वा ॥ ३२ ॥ अथैतद्व्रं[2] । आयुरेतज्ज्योतिः प्प्रविशति य ऽएत-मनु वा ब्ब्रूते भक्षयति वा तस्य व्रतचर्य्या नातपति प्प्रच्छादयेत नेदेतस्मात्तिरोऽसानीति नातपति निष्ठी-वेन्नेदेतमभिनिष्ठीवानीति नातपति प्प्रस्रावयेत नेदेतमभि-प्प्रस्रावया ऽइति यावद्वा ऽएष ऽआतपति तावानेष नेदेत-मेतैर्हिनसानीत्त्यवज्योत्य रात्रावश्नीयात्तदतस्य[3] रूपङ्क्रियते य ऽएष तपति तदु होवाचासुरिरेकः ह वै देवा व्रतञ्च-रन्ति यत्सत्त्यन्तस्मादु सत्त्यमेव वदेत् ॥ ३३ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

——०——

[ प्रवर्ग्यः * ]

स वै सम्भारान्त्सम्भरति । स यद्वा ऽएनानित्थाच्चे-त्थाच्च सम्भरति तत्सम्भाराणाᳫं सम्भारत्वः स वै यत्र

( १ ) "ता ऽइत्सद्यो०" इति 'ग' 'ज' पुस्तकयोः ।
( २ ) "अथैतद्व्रा" इति 'ग' 'ज' पुस्तकयोः ।
( ३ ) "०तदस्य" इति 'ग' 'ज' पुस्तकयोः पाठः ।
* तप्ते घृते पयःप्रक्षेपादिना प्रणीयते 'घर्मः' खाद्यविशेषः । स एव प्रक्षेपः प्रवृञ्जन-

यत्र यज्ञस्य न्न्यक्तन्ततस्ततᳬ सम्भरति ॥ १ ॥ कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतत्सम्भरति लोमतश्छन्दाᳬंसि वै लोमानि च्छन्दᳬस्वेवैनमेतत्सम्भरत्युत्तरत ऽउदीची हि मनुष्याणान्दिक्प्राचीनग्ग्रीवे तद्धि देवत्रा ॥ २ ॥ अब्भ्याः । वज्जो वा ऽअब्भिर्व्वीर्य्यं वै वज्जो व्वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ४ ॥ अथो वैकङ्कती । प्प्रजापतिर्य्यांम्प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्न्यमृष्ट ततो व्विकङ्कतᳬ समभवद्यज्ञो वा ऽआहुतिर्य्यज्ञो व्विकङ्कतो यज्ञेनैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥ अरत्निमात्री भवति । बाहुर्व्वा ऽअरत्निर्ब्बाहुनो वै व्वीर्य्यङ्क्रियते व्वीर्य्यसम्मितैव तद्भवति व्वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ६ ॥ तामादत्ते । 'देवस्य[2] त्वा सवितुᳬ प्प्रसवेऽश्श्विनोर्ब्बाहुब्भ्याम्पूष्णो हस्ताब्भ्यामाददे नारिरसी'त्त्यसावेव बन्धुᳬ ॥ ७ ॥ ताᳬं सव्व्ये पाणौ कृत्वा । दक्षिणेनाभिमृश्श्य जपति 'युञ्जते[3] मन ऽउत युञ्जते धियो व्विप्प्रा व्विप्प्रस्य बृहतो व्विपश्चितᳬ । वि होत्त्रा दधे वयुनाविदेक ऽइन्न्मही देवस्य सवितुᳬ परिष्टुति'रित्त्यसावेव बन्धुᳬ ॥ ८ ॥ अथ मृत्पिण्डं

मुच्यते । तादृशप्रवृञ्जननिबन्धनैवास्य कर्मणः समाख्या प्रवर्ग्य इति । तत्र घर्मपाकाय मृन्निर्मित उलूखलाकारपात्रविशेषो महावीरः । गौण्या तु वृत्या 'घर्मः, प्रवर्ग्यः, महावीरः' इति त्रीण्येव पदानि समानार्थानीति विवेकः । (तै० साय० भा० ५. ११. १. । शत० ब्रा० १४. १. १–११)

( १ ) 'ग' 'ज' पुस्तकयोः "०जिनᳬ स०" इति पाठः ।

( २ ) शु० य० सं० ३७. १ । ( ३ ) शु० य० सं० ३७. २ ।

परिगृह्णाति *। अब्भ्र्या च दक्षिणतो हस्तेन च हस्ते-
नैवोत्तरतो 'देवी[1] द्यावापृथिवी' ऽइति यज्ञस्य शीर्षच्छि-
न्नस्य रसो व्व्यक्षरत्स ऽइमे द्यावापृथिवी ऽअगच्छद्य-
न्मृदियन्तद्यदापोऽसौ तन्मृदश्चापाश्च महावीराः कृता
भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति तस्मा-
दाह देवी द्यावापृथिवी ऽइति 'मखस्य[2] वामद्य शिरो राद्ध्यास'-
मिति यज्ञो वै मखो यज्ञस्य वामद्य शिरो राद्ध्यासमित्त्ये-
वैतदाह 'देवयजने[3] पृथिव्व्या' ऽइति देवयजने हि पृथिव्व्यै
सम्भरति 'मखाय[4] त्वा मखस्य त्वा शीर्ष्ष्णे' ऽइति यज्ञो वै मखो
यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्ष्णे ऽइत्त्येवैतदाह ॥ ९ ॥ अथ
व्वल्मीकवपाम्। 'देव्व्यो[5] वम्र्य' ऽइत्त्येता वा ऽएतद्-
कुर्वत यथा यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेत-
त्समर्द्धयति कृत्स्नङ्करोति 'भूतस्य[6] प्प्रथमजा' ऽइतीयं
वै पृथिवी भूतस्य प्प्रथमजा तदनयैवैनमेतत्समर्द्धयति
कृत्स्नङ्करोति 'मखस्य[7] वोऽद्य शिरो राद्ध्यासन्देवयजने
पृथिव्व्या मखाय त्वा मखस्य त्वा शीर्ष्ष्णे' ऽइत्त्यसावेव
बन्धुः ॥ १० ॥ अथ व्वराहविहतम्। 'इयत्त्यग्र[8] ऽआसी'-
दितीयती ह वा ऽइयमग्ग्रे पृथिव्व्यास प्प्रादेशमात्त्री
तामेमूष ऽइति व्वराह ऽउज्जघान सोऽस्याः पतिः प्प्रजा-
पतिस्तेनैवैनमेतन्मिथुनेन प्प्रियेण धाम्म्ना समर्द्धयति
कृत्स्नङ्करोति 'मखस्य[9] तेऽद्य शिरो राद्ध्यासन्देवयजने

---

* 'मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी' ( का० श्रौ० सू० २६. १. ४ ) इति।

(१) शु० य० सं० ३७. ३। (२) शु० य० सं० ३७. ३। (३) शु० य० सं० ३७. ३। (४) शु० य० सं० ३७. ३। (५) शु० य० सं० ३७. ४। (६) शु० य० सं० ३७. ४। (७) शु० य० सं० ३७. ४। (८) शु० य० सं० ३७. ५। (९) शु० य० सं० ३७. ५।

पृथिव्व्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥ ११ ॥ अथादारान् । 'इन्द्रस्यौज स्थे'ति यत्र वा ऽएनमिन्द्र ऽओजसा पर्य्यगृह्णात्तदस्य परिगृहीतस्य रसो व्यक्षरत्स पूयन्निवाशेत सोऽब्रवीदादृीर्व्वेव वत म ऽएष रसोऽस्तौषीदिति तस्म्मादादारा ऽअथ यत्पूयन्निवाशेत तस्म्मात्पूतीकास्तस्म्मादग्न्नावाहुतिरिवाभ्याहिता ज्वलन्ति तस्म्मादु सुरभयो यज्ञस्य हि रसात्सम्भूता ऽअथ यदे-नन्तदिन्द्र ऽओजसा पर्य्यगृह्णात्तस्म्मादाहेन्द्रस्यौज स्थेति 'मखस्य वोऽद्य शिरो राद्ध्यासन्देवयजने पृथिव्व्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥१२॥ अथाजा-क्षीरम् । यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्क्रामत्ततोऽजा समभवत्त-यैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥१३॥ तान्न्वा ऽएतान्न्पञ्च सम्भारान्त्सम्भरति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्य-स्तदेतमेवैतत्प्रीणाति तान्त्सम्भृतानभिमृशति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥१४॥ अथोत्तरतः परिश्श्रितम्भवति । तदभिप्प्रयन्तो जपन्ति 'प्प्रैतु ब्ब्रह्मण-स्प्पतिरि'त्त्येष वै ब्ब्रह्मणस्प्पतिर्य्य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह प्प्रैतु ब्ब्रह्मण-स्प्पतिरिति 'प्प्र देव्व्येतु सूनृते'ति देवी ह्येषा सूनृता-

(१) शु० य० सं० ३७. ६। (२) शु० य० सं० ३७. ६। (३) शु० य० सं० ३७. ६।
(४) शु० य० सं० ३७. ६। (५) शु० य० सं० ३७. ७। (६) शु० य० सं० ३७. ७।

'च्छा वीरन्नर्य्यम्पङ्क्ति राधस'मित्युपस्तौत्येवैनमेतन्महयत्येव 'देवा यज्ञन्नयन्तु न' ऽइति सर्वानेवास्मा ऽएतद्देवानभिगोप्तॄन्करोति ॥ १५ ॥ परिश्रितम्भवति । एतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममिह रक्षाॐसि नाष्ट्रा न हन्युरिति तस्मा ऽएताम्पुरम्पर्य्यश्रयँस्तथैवास्मा ऽअयमेताम्पुरम्परिश्रयति ॥ १६ ॥ अथ खरे सादयति । 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरथ प्रयौति मखाय त्वा मखस्य त्वा शीर्ष्णे ऽइत्यसावेव बन्धुरथ मृत्पिण्डमुपादाय महावीरङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः प्रादेशमात्रम्प्रादेशमात्रमिव हि शिरो मध्ये सङ्गृहीतम्मध्ये सङ्गृहीतमिव हि शिरोऽथास्योपरिष्टात्त्र्यङ्गुलम्मुखमुन्नयति नासिकामेवास्मिन्नेतद्दधाति तन्निष्ठितमभिमृशति 'मखस्य शिरोऽसी'ति मखस्य ह्येतत्सौम्यस्य शिर ऽएवमितरौ तूष्णीम्पिन्वने तूष्णीॐ रौहिणकपाले ॥ १७ ॥ प्रजापतिर्व्वा ऽएष यज्ञो भवति । उभयं वा ऽएतत्प्रजापतिर्न्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तम्परिमितꣳ रूपन्तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितꣳ रूपन्तदस्य तेन संस्करोति स ह वा ऽएतꣳ सर्वङ्कृत्स्नम्प्रजापतिꣳ संस्करोति य ऽएवं विद्वानेतदेवङ्करोत्यथोपशयायै पिण्डम्परिशिनष्टि प्रायश्चित्तिभ्यः ॥ १८ ॥ अथ गवेधुकाभिर्हिन्वति ।

(१) शु० य० सं० ३७. ७। (२) शु० य० सं० ३७. ७। (३) शु० य० ३७. ७। (४) शु० य० सं० ३७. ८। (५) शु० य० सं० ३७. ८।

यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एता ओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' इत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीᳬं रौहिणकपाले ॥ १९ ॥ अथैनान्धूपयति। 'अश्वस्य त्वा वृष्णः शक्ना धूपयामी'ति वृषा वा अश्वो वीर्यं वै वृषा वीर्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे' इत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीᳬं रौहिणकपाले ॥२०॥ अथैनाञ्छ्रपयति । श्रृतः हि देवानामिष्टकाभिः श्रपयत्येता वा एतदकुर्वत यथा यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति तद्दु येनैव सुश्रृताः स्युस्तेन श्रपयेदथ पचनमवधाय महावीरमवदधाति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' इत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीᳬं रौहिणकपाले तान्दिवैवोपवपेद्दिवोद्वपेदुहर्हि देवानाम् ॥ २१ ॥ स उद्वपति। 'ऋजवे त्वे'त्यसौ वै लोक ऋजुः सत्यᳬं ह्यृजुः सत्यमेष य एष तपत्येष उ प्रथमः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहर्ज्जवे त्वेति ॥ २२ ॥ 'साधवे त्वे'ति । अयं वै साधुर्योऽयम्पवत एष हीमाँल्लोकान्त्सिद्धोऽनुपवत एष उ द्वितीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह साधवे त्वेति ॥ २३ ॥

(१) शु० य० सं० ३७.८। (२) शु० य० सं० ३७. ९। (३) शु० य० सं० ३७. ९ ।(४) शु० य० सं० ३७.९। (५) शु० य० सं० ३७. १०। (६) शु० य० सं० ३७. १०।

'सुक्षित्यै त्वे'ति । अयं वै लोकः सुक्षितिरस्मिन्न्हि लोके सर्व्वाणि भूतानि क्षियन्त्यथो ऽअग्निर्वै सुक्षितिरग्निर्ह्येवास्मिँल्लोके सर्व्वाणि भूतानि क्षियन्त्येष ऽउ तृतीयः प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वेति तूष्णीम्पिन्न्वने तूष्णीꣳ रौहिणकपाले ॥ २४ ॥ अथैनानाच्छृणत्ति । अजायै पयसा 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्न्वने तूष्णीꣳ रौहिणकपाले ॥ २५ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ २६ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ महावीरसंस्काराः ]

स यदैतदातिथ्येन प्प्रचरति । अथ प्प्रवर्ग्येण चरिष्यन्न्पुरोपसदोऽग्ग्रेण गार्हपत्यम्प्राचः कुशान्त्सꣳस्तीर्य्य द्वन्द्वम्पात्राण्युपसादयत्युपयमनीम्महावीरम्परीशासौ पिन्न्वने रौहिणकपाले रौहिणहवन्न्यौ स्रुचौ यदु चान्न्यद्भवति तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयत्यथ यद्द्वन्द्वन्द्वन्द्वं वै वीर्य्यं यदा वै द्वौ सꣳरभेते ऽअथ तौ वीर्य्यङ्कुरुतो द्वन्द्वं वै मिथुनम्प्रजननम्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयति कृत्स्नङ्करोति ॥ १ ॥ अथाद्ध्वर्य्युः । प्रोक्षणीरादायोपोत्तिष्ठन्नाह

(१) शु० य० सं० ३७. १० । (२) शु० य० सं० ३७. १० ।

ब्ब्रह्मन्प्रचरिष्ष्यामो होतरभिष्टुहीति ब्ब्रह्मा वै यज्ञस्य
दक्षिणत ऽआस्तेऽभिगोप्ता तमेवैतदाहाप्प्रमत्त ऽआस्स्व
यज्ञस्य शिरः प्प्रतिधास्याम ऽइति होतरभिष्टुहीति यज्ञो
वै होता तमेवैतदाह यज्ञस्य शिरः प्प्रतिधेहीति प्प्रतिपद्यते
होता ॥ २ ॥ '[1]ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्वि'ति । असौ वा
ऽआदित्यो ब्ब्रह्माहरहः पुरस्ताज्जायत ऽएष ऽउ प्प्रवर्ग्ग्यस्त-
देतमेवैतत्प्प्रीणाति तस्म्मादाह ब्ब्रह्म जज्ञानम्प्रथमम्पुरस्ता-
दित्यथ प्प्रोक्षत्यसावेव बन्धुः ॥ ३ ॥ स प्प्रोक्षति ।
'[2]यमाय त्त्वे'त्त्येष वै यमो य ऽएष तपत्त्येष हीदꣳ सर्वं
य्यमयत्त्येतेनेदꣳ सर्वं य्यतमेष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्प्री-
णाति तस्म्मादाह यमाय त्त्वेति ॥ ४ ॥ '[3]मखाय त्त्वे'ति ।
एष वै मखो य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्प्री-
णाति तस्म्मादाह मखाय त्त्वेति ॥ ५ ॥ '[4]सूर्य्यस्य त्त्वा
तपस' ऽइति । एष वै सूर्य्यो य ऽएष तपत्त्येष प्प्रवर्ग्ग्यस्त-
देतमेवैतत्प्प्रीणाति तस्म्मादाह सूर्य्यस्य त्त्वा तपस ऽइति
॥ ६ ॥ पूर्व्वया द्वारा स्त्थूणान्निर्हृत्त्य । दक्षिणतो निमि-
न्न्वन्ति यथैनाꣳ होताभिष्टुवन्न्परापश्श्येद्यज्ञो वै होता स
ऽएवास्यामेतद्यज्ञम्प्रतिदधाति तथैषा घर्म्मम्पिन्न्वते ॥ ७ ॥
[अर्धः प्रपाठकः ॥६६॥] अग्ग्रेणाहवनीयꣳ सम्म्राडासन्दीम्परुह्या-
हृत्त्य दक्षिणतः प्प्राचीमासादयत्त्युत्तराꣳ राजासन्द्यै ॥ ८ ॥
औदुम्बरी भवति । ऊग्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन स-
मर्द्धयति कृत्स्नङ्करोति ॥९॥ अꣳसदघ्ना भवति । अꣳसयोर्वा

(१) शु० य० सं० १३. ३ । (२) शु० य० सं० ३७. ११ । (३) शु० य० सं० ३७. ११ । (४) शु० य० सं० ३७. ११ ।

ऽइदꣳ शिरः प्प्रतिष्ठितन्तदꣳसयोरेवैतच्छिरः प्प्रतिष्ठापयति ॥ १० ॥ बाल्वजीभी रज्जुभिर्व्व्युता भवति। यज्ञस्य शीर्षच्छिन्नस्य रसो व्व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ११ ॥ अथ यदुत्तरत ऽआसादयति। यज्ञो वै सोमः शिरः प्प्रवर्ग्य ऽउत्तरं वै शिरस्तस्मादुत्तरत ऽआसादयत्यथो राजा वै सोमः सम्म्राट् प्रवर्ग्य ऽउत्तरं वै राज्यात्साम्म्राज्यन्तस्मादुत्तरत ऽआसादयत्युत्तरो वै प्प्रजा तस्मादुत्तरत ऽआसादयति ॥ १२ ॥ स यत्रैताꣳ होतान्न्वाह। 'अ²ञ्जन्ति यम्प्रथयन्तो न विप्प्रा' ऽइति तदेतम्प्रचरणीयम्महावीरमाज्येन समनक्ति 'दे³वस्त्वा सविता मद्ध्वानक्त्वि'ति सविता वै देवानाम्प्रसविता सर्वं वा ऽइदम्मधु यदिदङ्किञ्च तदेनमनेन सर्वेण समनक्ति तदस्मै सविता प्प्रसविता प्प्रसौति तस्मादाह देवस्त्वा सविता मद्ध्वानक्त्विति ॥ १३॥ * अथोत्तरतः सिकता ऽउपकीर्ण्णा भवन्ति। तद्रजतꣳ हिरण्यमधस्तादुपास्यति 'पृथि⁴व्व्याः सꣳस्पृशस्पाहि'त्येतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममधस्ताद्रक्षाꣳसि नाष्ट्रा न हन्न्युरित्त्यग्नेर्व्वा ऽएतद्रेतो यद्धिरण्यन्नाष्ट्राणाꣳ रक्षसामपहत्त्या ऽअथो पृथिव्व्यु ह वा ऽएतस्माद्बिभयाञ्चकार यद्वै मायन्तप्तः शुशुचानो न

(१) "आसादयत्त्युत्तरो वै प्प्रजा तस्मादुत्तरत" इति पाठः 'ग' 'ज' पुस्तकयोर्न दृश्यते।
(२) ऋ० सं० ४. २. २१। (३) शु० य० सं० ३७. ११।
* शतम् ६६००।
(४) शु० य० सं० ३७ ११।

हिंॐस्यादिति तदेवास्या ऽएतदन्तर्दधाति रजतम्भवति रजतैव हीयम्पृथिवी ॥ १४ ॥ स यत्रैताॐ होतान्न्वाह । 'सीदस्व महाँ२॥ ऽअसी'ति तदुभयत ऽआदीप्ता मौञ्जाः प्प्रलवा भवन्ति तानुपास्य तेषु प्प्रवृणक्ति यज्ञस्य शीर्षच्छिन्नस्य रसो व्व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ १५ ॥ अथ यदुभयत ऽआदीप्ता भवन्ति । सर्वाभ्य ऽएवैतद्दिग्भ्यो रक्षाॐसि नाष्ट्रा ऽअपहन्ति तस्मिमन्प्रवृज्यमाने पत्नी शिरः प्प्रोर्णुते तप्तो वा ऽएष शुशुचानो भवति नेन्न्मेऽयन्तप्तः शुशुचानश्चक्षुः प्प्रमुष्णादिति ॥ १६ ॥ स प्प्रवृणक्ति । 'अर्च्चिरसि शोचिरसि तपोऽसी'त्त्येष वै घर्म्मो य ऽएष तपति सर्वं वा ऽएतदेष तदेतमेवैतत्प्रीणाति तस्म्मादाहार्च्चिरसि शोचिरसि तपोऽसीति ॥ १७ ॥ अथास्यामाशिष ऽआशास्ते । इयं वै यज्ञोऽस्यामेवैतदाशिष ऽआशास्ते ता ऽअस्म्मा ऽइयः सर्वाः समर्द्धयति ॥ १८ ॥ 'अनाधृष्टा पुरस्ता'दिति । अनाधृष्टा ह्येषा पुरस्ताद्रक्षोभिर्न्नाष्ट्राभि'रग्ग्नेराधिपत्त्य' ऽइत्त्यग्निमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाॐ रक्षसामपहत्त्या 'ऽआयुर्म्मे दा' ऽइत्त्यायुरेवात्मन्धत्ते तथो ह सर्वमायुरेति ॥ १९ ॥ 'पुत्रवती दक्षिणत' ऽइति । नात्र तिरोहितमिवास्ती'न्द्रस्याधिपत्त्य' ऽइतीन्द्रमेवास्या ऽअधिपतिङ्करोति

(१) ऋ० सं० १. ३. ९। (२) शु० य० सं० ३७. ११। (३) शु० य० सं० ३७. १२। (४) शु० य० सं० ३७. १२। (५) शु० य० सं० ३७. १२। (६) शु० य० सं० ३७. १२। (७) शु० य० सं० ३७. १२।

नाष्ट्राणाᳬं रक्षसामपहत्यै 'प्प्रजाम्मे दा' ऽइति प्प्रजामेव पशूनात्मन्धत्ते तथो ह पुत्री पशुमान्भवति ॥ २० ॥ 'सुषदा पश्चा'दिति । नात्र तिरोहितमिवास्ति 'देवस्य सवितुराधिपत्त्य' ऽइति देवमेवास्यै सवितारमधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्यै 'चक्षुर्म्मे दा' ऽइति चक्षुरेवात्मन्धत्ते तथो ह चक्षुष्मान्भवति ॥ २१ ॥ 'आश्श्रुतिरुत्तरत' ऽइति । आश्श्रावयन्नुत्तरत ऽइत्त्येवैतदाह 'धातुराधिपत्त्य' ऽइति धातारमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्यै 'रायँस्प्पोषम्मे दा' ऽइति रयिमेव पुष्टिमात्मन्धत्ते तथो ह रयिमान्पुष्टिमान्भवति ॥ २२ ॥ 'विधृतिरुपरिष्टा'दिति । विधारयन्नुपरिष्टादित्त्येवैतदाह 'बृहस्प्पतेराधिपत्त्य' ऽइति बृहस्प्पतिमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्या 'ऽओजो मे दा' ऽइत्योज ऽएवात्मन्धत्ते तथौजस्वी बलवान्भवति ॥ २३ ॥ अथ दक्षिणत ऽउत्तानेन पाणिना निह्नुते । 'विश्श्वाब्भ्यो मा नाष्ट्राब्भ्यस्प्पाही'ति सर्व्वाब्भ्यो मार्त्तिब्भ्यो गोपायेत्त्येवैतदाह यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छत्त्रया वै पितरस्तैरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ २४ ॥ अथेमामभिमृश्श्य जपति । 'मनोरश्श्वासी'त्त्यश्श्वा ह

(१) शु० य० सं० ३७. १२ । (२) शु० य० सं० ३७. १२ । (३) शु० य० सं० ३७. १२ । (४) शु० य० सं० ३७. १२ । (५) शु० य० सं० ३७ १२ । (६) शु० य० सं० ३७. १२ । (७) शु० य० सं० ३७. १२ । (८) शु० य० सं० ३७. १२ । (९) शु० य० सं० ३७. १२ । (१०) शु० य० सं० ३७. १२ । (११) शु० य० सं० ३७. १२ ।

* अत्र "रसो व्यक्षरत्त्स" इत्यधिकः पाठः । 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।

(१२) शु० य० सं० ३७. १२ ।

वा ऽइयम्भूत्वा मनुमुवाह सोऽस्याः पतिः प्प्रजापति-
स्तेनैवैनमेतन्मिथुनेन प्प्रियेण धाम्म्ना समर्द्धयति कृत्स्न-
ङ्करोति ॥ २५ ॥ अथ वैकङ्कतौ शकलौ परिश्श्रयति
प्प्राञ्चौ । '[1]स्वाहा मरुद्भिः परिश्श्रीयस्वे'त्यवरꣳ स्वाहाकारङ्क-
रोति परान्देवतामेष वै स्वाहाकारो य ऽएष तपत्येष
ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्प्रीणाति तस्म्मादुवरꣳ स्वाहाकार-
ङ्करोति परान्देवताम् ॥ २६ ॥ मरुद्भिः परिश्श्रीयस्वेति ।
विशो वै मरुतो विशैवैतत्क्षत्रम्परिबृꣳहति तदिदङ्क्षत्रमु-
भयतो विशा परिबृढन्तूष्ष्णीमुदञ्चौ तूष्ष्णीम्प्राञ्चौ तूष्ष्णी-
मुदञ्चौ तूष्ष्णीम्प्राञ्चौ ॥ २७ ॥ त्रयोदश सम्पादयति ।
त्रयोदश वै मासाः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्येष
ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्प्रीणाति तस्म्मात्त्रयोदश सम्पादयति
॥ २८ ॥ अथ सुवर्ण्णꣳ हिरण्यमुपरिष्टान्निदधाति ।
'[2]दिवꣳ सꣳस्पृशस्पाही'त्येतद्वै देवा ऽअबिभयुर्य्यद्वै न
ऽइममुपरिष्टाद्रक्षाꣳसि नाष्ट्रा न हन्न्युरित्यग्ग्नेर्वा ऽएत-
द्रेतो यद्धिरण्यन्नाष्ट्राणाꣳ रक्षसामपहत्या ऽअथो द्यौर्ह
वा ऽएतस्म्माद्विभयाञ्चकार यद्वै मायन्तप्तः शुशुचानो न
हिꣳस्यादिति तदेवास्या ऽएतदन्तर्द्दधाति हरितम्भवति
हरिणीव हि द्यौः ॥ २९ ॥ अथ धवित्रैराधूनोति । '[3]मधु
मद्धि'ति त्रिः प्प्राणो वै मधु प्प्राणमेवास्म्मिन्नेतद्दधाति त्रीणि
भवन्ति त्रयो वै प्प्राणाः प्प्राण ऽउदानो व्यानस्तानेवा-

(१) शु० य० सं० ३७. १३। (२) शु० य० सं० ३७. १३। (३) शु० य० सं० ३७. १३।

स्मिन्नेतद्दधाति ॥ ३० ॥ अथापसलवि त्रिर्द्धूश्वन्ति । यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्नया वै पितरस्तैरेवै-नमेतत्समीरयति ॥ ३१ ॥ अप वा ऽएतेभ्यः प्प्राणाः क्क्रामन्ति । य यज्ञे धुवनन्तन्वते पुनः प्प्रसलवि त्रिर्द्धूश्वन्ति षट् सम्पद्यन्ते षड्वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्-धाति श्श्रपयन्ति रौहिणौ स यदार्च्चिर्ज्जायतेऽथ हिरण्य-मादत्ते ॥ ३२ ॥ स यत्रैताꣳ होतान्न्वाह । 'अप्नस्वतीम-श्श्विना व्वाचमस्मे' ऽइति तदद्ध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति स यदि रुचितः स्याच्छ्रेयान्यजमानो भविष्य-तीति विद्यादथ यद्यरुचितः पापीयान्भविष्यतीति विद्या-दथ यदि नैव रुचितो नारुचितो नैव श्श्रेयान्न पापी-यान्भविष्यतीति विद्याद्यथा त्वेवै[2] रुचितः स्यात्तथा धवितव्व्यम्[3] ॥३३॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनुवा ब्ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥३४॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

———○———

स यदैतदद्ध्वर्युः । उपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति तदुपोत्थायावकाशैरुपतिष्ठन्ते प्प्राणा वा ऽअवकाशाः प्प्राणानेवास्मिन्नेतद्दधाति षडुपतिष्ठन्ते षड्वा ऽइमे शीर्ष-न्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ १ ॥ 'गर्ब्भो[4] देवाना'मिति।

---

* अत्र ''रसो व्यक्षरत्स'' इत्यधिकः पाठः [　　] इति चिह्नान्तर्गतः 'ग' 'ज' पुस्तकयो-रुपलभ्यते ।

(१) शु० य० सं० ३४. २९ । (२) ''न्वेव'' इति 'ग' 'ज' पुस्तकयोः । (३) ''धवितव्यः'' इति 'ग' 'ज' पुस्तकयोः । (४) शु० य० सं० ३७. १४ ।

एष वै गर्ब्भो देवानां य्य ऽएष तपत्त्येष हीदꣳ सर्व्वङ्गृ[1]ब्भ्णा-
त्त्येतेनेदꣳ सर्व्वङ्गृभीतमेष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति
तस्म्मादाह गर्ब्भो देवानामिति ॥ २ ॥ 'पि[2]ता मतीना'-
मिति । पिता ह्येष मतीना'[3]म्पतिः प्प्रजाना'मिति पतिर्ह्येष
प्प्रजानाम् ॥ ३ ॥ '[4]सन्देवो देवेन सवित्त्रा गते'ति सꣳ हि
देवो देवेन सवित्त्रा गत '[5]सꣳ सूर्य्येण रोचत' ऽइति सꣳ
हि सूर्य्येण रोचते ॥ ४ ॥ '[6]समग्निरग्निना गते'ति । सꣳ
ह्यग्निरग्निना गत '[7]सन्दैवेन सवित्त्रे'ति सꣳ हि दैवेन
सवित्त्रा गत '[8]सꣳ सूर्य्येणारोचिष्टे'ति सꣳ हि सूर्य्येणारो-
चिष्ट ॥ ५ ॥ '[9]स्वाहा समग्निस्तपसा गते'ति सꣳ
ह्यग्निस्तपसा गतावरꣳ स्वाहाकारङ्करोति परान्देवतामसा-
वेव बन्धुः 'सन्दै[10]व्व्येन सवित्त्रे'ति सꣳ हि दैव्व्येन सवि-
त्त्रा गत '[11]सꣳ सूर्य्येणारूरुचते'ति सꣳ हि सूर्य्येणारूरुचत
॥ ६ ॥ ते वा ऽएते त्त्रयोऽवकाशा भवन्ति । त्त्रयो वै
प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तान्[12]नेवास्म्मिन्नेतद्दधाति
॥ ७ ॥ '[13]धर्त्ता दिवो विभाति तपसस्पृथिव्व्या'मिति । धर्त्ता
ह्येष दिवो विभाति तपसस्पृथिव्व्या'[14]न्धर्त्ता देवो देवानाम-
मर्त्त्यस्तपोजा' ऽइति धर्त्ता ह्येष देवो देवानाममर्त्त्यस्तपोजा
'[15]व्वाचमस्म्मे नियच्छ देवायुव'मिति यज्ञो वै व्वाग्यज्ञमस्म्म-

---

( १ ) "गृह्णा०" इति 'ग' 'ज' पुस्तकयोः । (२) शु० य० सं० ३७. १४ । (३) शु० य० सं० ३७. १४ । ( ४ ) शु० य० सं० ३७. १४ । ( ५ ) शु० य० सं० ३७. १४ । ( ६ ) शु० य० सं० ३७. १५ । ( ७ ) शु० य० सं० ३७. १५ । ( ८ ) शु० य० सं० ३७. १५ । ( ९ ) शु० य० सं० ३७. १५ । ( १० ) शु० य० सं० ३७. १५ । ( ११ ) शु० य० सं० ३७. १५ । ( १२ ) "०स्तेनै" इति 'ग' 'ज' पुस्तकयोः । ( १३ ) शु० य० सं० ३७. १६ । ( १४ ) शु० य० सं० ३७. १६ । ( १५ ) शु० य० सं० ३७. १६ ।

ऽभ्यम्प्रयच्छ येन देवान्प्रीणामेत्येवैतदाह ॥ ८ ॥ 'अपश्यङ्गोपामनिपद्यमान'मिति । एष वै गोपा स ऽएष तपत्येष हीदꣳ सर्वङ्गोपायत्यथो न निपद्यते तस्मादाहापश्यङ्गोपामनिपद्यमानमिति ॥ ९ ॥ 'आ च परा च पथिभिश्चरन्त'मिति । आ च ह्येष परा च देवैः पथिभिश्चरति 'स सध्रीचीः स विषूचीर्वसान' ऽइति सध्रीचीश्च ह्येष विषूचीश्च दिशो वस्तेऽथो रश्मी'नावरीवर्त्ति भुवनेष्वन्त'रिति पुनः पुनर्ह्येष ऽएषु लोकेषु वरीवर्त्यमानश्चरति ॥ १० ॥ 'विश्वासाम्भुवाम्पते । विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पत' ऽइत्येतस्य सर्वस्य पत ऽइत्येत'द्देवश्रुत्त्वन्देव घर्म्म देवो देवान्पाही'ति नात्र तिरोहितमिवास्ति ॥ ११ ॥ 'अत्र प्रावीरनु वान्देववीतय' ऽइति । अश्विनावेवैतदाहाश्विनौ वा ऽएतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहात्र प्रावीरनु वान्देववीतय ऽइति ॥ १२ ॥ 'मधु माध्वीभ्याम्मधु माधूचीभ्या'मिति । दध्यङ् ह वा ऽआभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियन्धाम तदेवैनयोरेतेनोपगच्छति तस्मादाह मधु माध्वीभ्याम्मधु माधूचीभ्यामिति ॥ १३ ॥ 'हृदे त्वा मनसे त्वा दिवे त्वा सूर्य्याय त्वा । ऊर्ध्वो ऽअध्वरन्दिवि देवेषु धेही'ति नात्र तिरोहितमि-

(१) शु० य० सं० ३७. १७। (२) शु० य० सं० ३७. १७। (३) शु० य सं० ३७. १७। (४) शु० य० सं० ३७. १७। (५) शु० य० सं० ३७. १८। (६) शु० य० सं० ३७. १८। (७) शु० य० सं० ३७, १८। (८) शु० य० सं० ३७. १८। (९) शु० य० सं० ३७. १९।

वास्ति ॥ १४ ॥ 'पिता नोऽसि पिता नो बोधी'ति । एष वै पिता य ऽएष तपत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैत-त्प्रीणाति तस्म्मादाह पिता नोऽसि पिता नो बोधीति 'नमस्ते ऽअस्तु मा मा हिंᳲसी'रित्याशिषमेवैतदाशास्ते ॥ १५ ॥ अथ पत्न्यै शिरोऽपावृत्य । महावीरमीक्षमाणां वाचयति 'त्वष्टृमन्तस्त्वा सपेमे'ति व्वृषा वै प्प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननङ्क्रियते ॥ १६ ॥ अथै-तद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ १७ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

—०—

[ रौहिणहोमः, महावीरेषु अजापयस आसेकश्च ]

अथातो रौहिणौ जुहोति । 'अहः केतुना जुषताᳲ सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा प्प्रातः 'रात्रिः केतुना जुषताᳲ सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा सायम् ॥ १ ॥ तद्यद्रौहिणौ जुहोति । अग्निश्च ह वा ऽआदित्यश्च रौहिणावेताब्भ्याᳲ हि देवताब्भ्यां य्यज-मानाः स्वर्ग्गँल्लोकᳲ रोहन्ति ॥ २ ॥ अथो ऽअहोरात्रे वै रौहिणौ । आदित्यः प्प्रवर्ग्योऽमुन्तदादित्यमहोरात्राब्भ्या-

( १ ) शु० य० सं० ३७. २० । ( २ ) शु० य० सं० ३७. २० । ( ३ ) "०प०" इति 'ग' 'ज' पुस्तकयोः । ( ४ ) शु० य० सं० ३७. २० । ( ५ ) शु० य० सं० ३७ २१ । ( ६ ) शु० य० सं० ३७. २१ ।

म्परिगृह्णाति तस्मादेषोऽहोरात्राभ्याम्परिगृहीतः ॥ ३ ॥ अथो ऽइमौ वै लोकौ रौहिणौ आदित्यः प्प्रवर्ग्योऽमुन्तदादित्यमाभ्याँल्लोकाभ्याम्परिगृह्णाति तस्मादेष ऽआभ्याँल्लोकाभ्याम्परिगृहीतः ॥ ४ ॥ अथो चक्षुषी वै रौहिणौ। शिरः प्प्रवर्ग्यः शीर्षस्तच्चक्षुर्दधाति ॥५॥ अथ रज्जुमादत्ते। 'देवस्य[1] त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्यामाददेऽदित्यै[2] रास्नासी'त्यसावेव बन्धुः ॥६॥ अथ गामाह्वयति। जघनेन गार्हपत्यं स्थ'न्निडे[3] ऽएह्यदित ऽएहि सरस्वत्येही'तीडा हि गौरदितिर्हि गौः सरस्वती हि गौरथोच्चैराह्वयति नाम्ना'सावेह्यसावेही'ति त्रिः ॥ ७ ॥ तामागतामभिदधाति। 'अदित्यै[5] रास्नासीन्द्राण्या ऽउष्णीष' ऽइतीन्द्राणी ह वा ऽइन्द्रस्य प्प्रिया पत्नी तस्या ऽउष्णीषो विश्वरूपतमः सोऽसीति तदाह तमेवैनमेतत्करोति ॥ ८ ॥ अथ वत्समुपार्जति। 'पूषासी'त्ययं वै पूषा योऽयन्पवत ऽएष हीदः सर्व्वम्पुष्यत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पूषासीति ॥ ९ ॥ अथोन्नयति। 'घर्म्माय दीष्वे'त्येष वा ऽअत्र घर्म्मो रसो भवति यमेषा पिन्वते तस्यै दयस्वेत्येवैतदाह ॥ १० ॥ अथ पिन्वने पिन्वयति। 'अश्विभ्याम्पिन्वस्वे'त्यश्विनावेवैतदाहाश्विनौ वा ऽएतद्यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहा-

(१) शु० य० सं० ३८. १। (२) 'ग' 'ज' पुस्तकयोः "ऽदित्यै" इति पाठो न दृश्यते। (३) शु० य० सं० ३८. २। (४) "तै" इति 'ग' 'ज' पुस्तकयोः। (५) शु० य० सं० ३८. २। (६) शु० य० ३८. ३। (७) शु० य० सं० ३८. ३। (८) शु० य० सं० ३८. ३। (९) शु० य० सं० ३८. ४।

श्विभ्यामिपन्वस्वेति ॥ ११ ॥ 'सरस्वत्यै पिन्वस्वे'ति । वाग्वै सरस्वती वाचा वा ऽएतदश्विनौ यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाह सरस्वत्यै पिन्वस्वेति ॥ १२ ॥ 'इन्द्राय पिन्वस्वे'ति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतदश्विनौ यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहेन्द्राय पिन्वस्वेति ॥ १३ ॥ अथ विप्रुषोऽभिमन्त्रयते । 'स्वाहेन्द्रवत्स्वाहेन्द्रव'दितीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणाति तस्मादाह स्वाहेन्द्रवत्स्वाहेन्द्रवदिति त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञोऽवरर्ठ० स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥ अथास्यै स्तनमभिपद्यते । 'यस्ते स्तनः शशयो यो मयोभू'रिति यस्ते स्तनो निहितो गुहायामित्येवैतदाह 'यो रत्नधा वसुविद्यः सुदत्र' ऽइति यो धनानान्दाता वसुविरपणाख्य ऽइत्येवैतदाह 'येन विश्वा पुष्यसि वार्य्याणी'ति येन सर्वान्देवान्त्सर्वाणि भूतानि बिभर्षीत्येवैतदाह 'सरस्वति तमिह धातवेऽक'रिति वाग्वै सरस्वती सैषा घर्मदुघा यज्ञो वै वाग्यज्ञमस्मभ्यम्प्रयच्छ येन देवान्प्रीणामेत्येवैतदाहाथ गार्हपत्यस्यार्द्धमे'त्युर्वन्तरिक्षमन्वेमी'त्यसावेव बन्धुः ॥ १५ ॥ अथ शफावादत्ते । 'गायत्रञ्छन्दोऽसि त्रैष्टुभञ्छन्दोऽसी'ति गायत्रेण चैवैना-

(१) शु० य० सं० ३८. ४ । (२) शु० य० सं० ३८. ४ । (३) शु० य० सं० ३८. ४ । (४) शु० य० सं० ३८. ५ । (५) शु० य० सं० ३८. ५ । (६) शु० य० सं० ३८. ५ । (७) शु० य० सं० ३८. ५ । (८) शु० य० सं० ३८. ५ । (९) शु० य० सं० ३८. ६ ।

वेतत्त्रैष्टुभेन च च्छन्दसादत्ते 'द्यावापृथिवीभ्यान्त्वा परि- गृह्णामी'तीमे वै द्यावापृथिवी परीशासावादित्यः प्प्रवर्ग्योऽ- मुन्तदादित्यमाभ्यान्द्यावापृथिवीभ्याम्परिगृह्णात्यथ मौञ्जेन व्वेदेनोपमाष्टर्यसावेव बन्धुः ॥ १६ ॥ अथोपयमन्न्योपगृह्णाति । 'अन्तरिक्षेणोपयच्छामी'त्त्यन्तरिक्षं व्वा ऽउपयमन्न्य- न्तरिक्षेण हीदꣳ सर्व्वमुपयतमथो ऽउदरं व्वा ऽउपयमन्न्युद- रेण हीदꣳ सर्व्वमन्नाद्यमुपयतन्तस्मादाहान्तरिक्षेणोपयच्छा- मीति ॥ १७ ॥ अथाजाक्षीरमानयति । तप्तो वा ऽएष शुशुचानो भवति तमेवैतच्छमयति तस्मिञ्छान्ते गोक्षी- रमानयति ॥ १८ ॥ 'इन्द्राश्विने'ति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणात्यश्विनेत्त्य- श्विनावेवैतदाहाश्विनौ वा ऽएतद्यज्ञस्य शिरः प्प्रत्त्यधत्ता- न्तावेवैतत्प्रीणाति तस्मादाहेन्द्राश्विनेति ॥ १९ ॥ 'मधुनः सारघस्ये'ति । एतद्वै मधु सारघ'ङ्घर्म्मम्पाते'ति रसम्पातेत्त्ये- वैतदाह 'व्वसवं' ऽइत्त्येते वै व्वसव ऽएते हीदꣳ सर्व्वं व्वास- यन्ते 'यजंत व्वा'डिति तद्यथा व्वषट्कृतꣳ हुतमेवमस्यैतद्भ- वति ॥ २० ॥ 'स्वाहा सूर्य्यस्य रश्मये व्वृष्टिव्वनय' ऽइति। सूर्य्यस्य ह वा ऽएको रश्मिर्व्वृष्टिव्वनिर्न्नाम येनेमाः सर्व्वाः प्प्रजा बिभर्त्ति तमेवैतत्प्रीणाति तस्मादाह स्वाहा सूर्य्यस्य रश्मये व्वृष्टिव्वनय ऽइत्त्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥२१॥ अथैतद्वै । आयुरेतज्ज्योतिः

(१) शु० य० सं० ३८. ६ । (२) शु० य० सं० ३८. ६ । (३) शु० य० सं० ३८. ६ । (४) शु० य० सं० ३८. ६ । (५) शु० य० सं० ३८. ६ । (६) शु० य० सं० ३८. ६ । (७) शु० य० सं० ३८. ६ । (८) शु० य० सं० ३८. ६ ।

प्प्रविशति य ऽएतमनु वा ब्ब्रूते भक्षयति वा तस्य व्व्रत-चर्य्या या सृष्टौ ॥ २२ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ १३२ ॥

—०—

[ प्रवर्ग्यानुष्ठानम् ]

स यत्रैताꣳ होतान्न्वाह । 'प्प्रैतु[1] ब्ब्रह्मणस्प्पतिः प्प्र देव्व्येतु सूनृते'ति तदद्ध्रुर्य्युः प्प्राङुदायन्न्वातनामानि जुहोत्त्येतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममन्तरा रक्षाꣳसि नाष्ट्रा न हन्न्युरिति तमेतत्पुरैवाहवनीयात्स्वाहाकारेणा-जुहवुस्तꣳ हुतमेव सन्तमग्ग्नावजुहवुस्तथो ऽएवैनमेष ऽएत-त्पुरैवाहवनीयात्स्वाहाकारेण जुहोति तꣳ हुतमेव सन्त-मग्ग्नौ जुहोति ॥ १ ॥ 'समुद्राय[2] त्वा व्वाताय स्वाहे'ति । अयं व्वै समुद्रो योऽयम्पवत ऽएतस्म्माद्वै समुद्रात्सर्व्वे देवाः सर्व्वाणि भूतानि समुद्रवन्ति तस्म्मा ऽएवैनञ्जुहोति तस्म्मा दाह समुद्राय त्वा व्वाताय स्वाहा ॥ २ ॥ 'सरिराय[3] त्वा व्वाताय स्वाहे'ति । अयं व्वै सरिरो योऽयम्पवत ऽएत-स्म्माद्वै सरिरात्सर्व्वे देवाः सर्व्वाणि भूतानि सहेरते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह सरिराय त्वा व्वाताय स्वाहा ॥ ३ ॥ 'अनाधृष्ष्याय[4] त्वा व्वाताय स्वाहा प्प्रतिधृष्ष्याय त्वा

(१) शु० य० सं० ३७. ७। (२) शु० य० सं० ३८. ७। (३) शु० य० सं० ३८. ७। (४) शु० य० सं० ३८. ७।

व्वाताय स्वाहे'ति । अयं व्वा ऽअनाधृष्ष्योऽप्प्रतिधृष्ष्यो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहानाधृष्ष्याय त्वा व्वाताय स्वाहा प्प्रतिधृष्ष्याय त्वा व्वाताय स्वाहेति ॥ ४ ॥ '[1]अवस्यवे त्वा व्वाताय स्वाहाशिमिदाय त्वा व्वाताय स्वाहे'ति । अयं व्वा ऽअवस्युरशिमिदो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहावस्यवे त्वा व्वाताय स्वाहा-शिमिदाय त्वा व्वाताय स्वाहेति ॥ ५ ॥ '[2]इन्द्राय त्वा व्वसुमते रुद्रवते स्वाहे'ति । अयं वा ऽइन्द्रो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहेन्द्राय त्वेति व्वसु-मते रुद्रवत ऽइति तदिन्द्रमेवानु व्वसूँश्च रुद्राँश्चाभजत्यथो प्प्रातःसवनस्य चैवैतन्माद्ध्यन्दिनस्य च सवनस्य रूप-ङ्क्रियते ॥ ६ ॥ '[3]इन्द्राय त्वादित्यवते स्वाहे'ति । अयं वा ऽइन्द्रो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मा-दाहेन्द्राय त्वेत्यादित्यवत ऽइति तदिन्द्रमेवान्वादित्याना-भजत्यथो तृतीयसवनस्यैवैतद्रूपङ्क्रियते ॥ ७ ॥ '[4]इन्द्राय त्वाभिमातिघ्घ्ने स्वाहे'ति । अयं वा ऽइन्द्रो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहेन्द्राय त्वेत्यभिमातिघ्घ्न ऽइति सपत्नो वा ऽअभिमातिरिन्द्राय त्वा सपत्नघ्घ्न ऽइत्त्येवैतदाह सोऽस्योद्धारो यथा श्श्रेष्ठस्योद्धार ऽएवमस्यैष ऽऋते देवेब्भ्यः ॥ ८ ॥ '[5]सवित्रे त्व ऽऋभुमते व्विभुमते व्वाजवते स्वाहे'ति । अयं वै सविता योऽयम्पवते तस्म्मा

(१) शु० य० सं० ३८. ७। (२) शु० य० सं० ३८. ८। (३) शु० य० सं० ३८. ८। (४) शु० य० सं० ३८. ८। (५) शु० य० सं० ३८. ८।

ऽएवैनञ्जुहोति तस्मादाह सवित्रे त्वेत्यृभुमते विभुमते वाजवत ऽइति तदस्मिन्विश्वान्देवानन्वाभजति ॥ ९ ॥ 'बृहस्पतये[1] त्वा विश्वदेव्यावते स्वाहे'ति । अयं वै बृहस्पतिर्योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाह बृहस्पतये त्वेति विश्वदेव्यावत ऽइति तदस्मिन्विश्वान्त्सर्वान्देवानन्वाभजति ॥ १० ॥ 'यमाय[2] त्वाङ्गिरस्वते पितृमते स्वाहे'ति । अयं वै यमो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाह यमाय त्वेत्यङ्गिरस्वते पितृमत ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्त्रया वै पितरस्तानेवैतदन्वाभजति ॥ ११ ॥ द्वादशैतानि नामानि भवन्ति । द्वादश वै मासाः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्माद्द्वादश भवन्ति ॥ १२ ॥ अथोपयमन्या महावीर ऽआनयति । 'स्वाहा[3] घर्माये'त्येष वै घर्मो य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह स्वाहा घर्मायेत्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १३ ॥ आनीते जपति । 'स्वाहा[4] घर्मः पित्र' ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्त्रया वै पितरस्तानेवैतत्प्रीणात्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥ नानुवाक्या-

---

(१) शु० य० सं० ३८. ८ । (२) शु० य० सं० ३८. ९ ।

* अत्र "रसो व्यक्षरत्स" इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।

(३) शु० य० सं० ३८. ९ । (४) शु० य० सं० ३८. ६ ।

मन्न्वाह । सकृद्दु ह्येव पराञ्चः पितरस्तस्म्मान्नानुवाक्क्या-मन्न्वाहातिक्क्रम्म्याऽश्श्राव्व्याह घर्म्मस्य यजेति व्वषट्कृते जुहोति ॥ १५ ॥ 'व्विश्श्वा[1] ऽआशा दक्षिणस'दिति । सर्वा ऽआशा दक्षिणसदित्त्येवैतदाह 'व्विश्श्वान्[2]देवानयाडिहे'ति सर्वान्देवानयाक्षीदिहेत्त्येवैतदाह 'स्वाहा[3]कृतस्य घर्म्मस्य मधोः पिबतमश्श्विने'त्त्यश्श्विनावेवैतदाहाश्श्विनौ ह्येतद्य-ज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणात्त्यवरꣳ स्वाहाकार-ङ्करोति परान्देवतामसावेव बन्धुः ॥ १६ ॥ अथ हुत्त्वो-र्द्ध्वमुत्कम्पयति । 'दिवि[4] धा ऽइमं य्यज्ञमिमं य्यज्ञन्दिवि धा' ऽइत्त्यसौ वा ऽआदित्त्यो घर्म्मो यज्ञो दिवि वा ऽएष हितो दिवि प्प्रतिष्ठितस्तमेवैतत्प्रीणाति तस्म्मादाह दिवि धा ऽइमं य्यज्ञमिमं य्यज्ञन्दिवि धा ऽइत्त्यनुवषट्कृते जुहोति ॥ १७ ॥ 'स्वाहा[5]ग्नये यज्ञियाये'ति । तत्स्विष्टकृद्भाजन-मग्निर्हि स्विष्टकृ'च्छं[6] य्यजुर्ब्भ्य' ऽइति यजुर्भिर्ह्येषोऽ-स्मिँल्लोके प्प्रतिष्ठितस्तान्न्येवैतत्प्रीणात्त्यवरꣳ स्वाहा-कारङ्करोति परान्देवतामसावेव बन्धुः ॥ १८ ॥ अथ ब्ब्रह्मा-नुमन्त्रयते । ब्ब्रह्मा वा ऽऋत्त्विजाम्भिषक्तमस्तद्य ऽएवऽ-र्त्विजाम्भिषक्तमस्तेनैवैतद्[7]यज्ञम्भिषज्यति ॥ १९ ॥ 'अ[8]-श्श्विना घर्म्मम्पात'मिति । अश्श्विनावेवैतदाहाश्श्विनौ ह्येतद्यज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणाति ॥ २० ॥

(१) शु० य० सं० ३८. १० । (२) शु० य० सं० ३८. १० । (३) शु० य० सं० ३८. १० । (४) शु० य० सं० ३८. ११ । (५) शु० य० सं० ३८. ११ । (६) शु० य० सं० ३८. ११ । (७) "स्तेनैवैनमेत०" इति 'ग' 'ज' पुस्तकयोः पाठः । (८) शु० य० सं० ३८. १२ ।

'हार्द्वान्नमहर्द्दिवाभिरूतिभि'रिति । अनिरुक्तमनिरुक्तो वै प्प्रजापतिः प्प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्यति ॥ २१ ॥ 'तन्त्रायिण' ऽइति । एष वै तन्त्रायी य ऽएष तपत्येष हीमाँल्लोकाँस्तन्त्रमिवानुसञ्चरत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह तन्त्रायिण ऽइति ॥ २२ ॥ 'नमो द्यावापृथिवीब्भ्या'मिति । तदाब्भ्यान्द्यावापृथिवीब्भ्यान्निह्नुते ययोरिदꣳ सर्वमधि ॥ २३ ॥ अथ यजमानः । यज्ञो वै यजमानो यज्ञेनैवैतद्यज्ञम्भिषज्यति ॥२४॥ 'अपातामश्श्विना घर्म्म'मिति । अश्श्विनावेवैतदाहाश्श्विनौ ह्येतद्यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति ॥ २५ ॥ 'अनु द्यावापृथिवी ऽअमꣳसाता'मिति । तदिमे द्यावापृथिवी ऽआह ययोरिदꣳ सर्वमधी'हैव रातयः सन्त्विती-हैव नो धनानि सन्त्वित्त्येवैतदाह ॥ २६ ॥ अथ पिन्न्वमानमनुमन्त्रयते *। 'इषे पिन्न्वस्वे'ति व्वृष्ट्यै तदाह यदाहेषे पिन्न्वस्वेत्त्यू'र्ज्जे पिन्न्वस्वे'ति यो व्वृष्टादूर्ग्रसो जायते तस्म्मै तदाह 'ब्ब्रह्मणे पिन्वस्वे'ति तद्ब्रह्मण ऽआह 'क्षत्राय पिन्वस्वे'ति तत्क्षत्रायाह 'द्यावापृथिवीब्भ्याम्पिन्वस्वे'ति तदाब्भ्यान्द्यावापृथिवीब्भ्यामाह ययोरिदꣳ सर्वमधि ॥ २७ ॥ स यदूर्द्ध्वः पिन्वते । तद्यजमानाय पिन्वते

---

(१) शु० य० सं० ३८. १२। (२) शु० य० सं० ३८. १२। (३) शु० य० सं० ३८. १२। (४) शु० य० सं० ३८. १३। (५) शु० य० सं० ३८. १३। (६) शु० य० सं० ३८. १३।

* का० श्रौ० सू० २६. ६. ८।

(७) शु० य० सं० ३८. १४। (८) शु० य० सं० ३८. १४। (९) शु० य० सं० ३८. १४। (१०) शु० य० सं० ३८. १४। (११) शु० य० सं० ३८. १४।

यत्प्राङ् तद्देवेभ्यो यद्दक्षिणा तत्पितृभ्यो यत्प्रत्यङ् तत्पशुभ्यो यदुदङ् तत्प्रजाया ऽअनपराद्धन्त्वेव[1] यजमानस्योर्द्ध्वो ह्येव पिन्विन्त्वाथ[2] यान्दिशम्पिन्वते ताम्पिन्वते यदा शाम्यन्ति विप्रुषः ॥ २८ ॥ अथ प्राङिवोदङुत्क्रामति*। 'धर्म्मासि[3] सुधर्म्मे'त्येष वै धर्म्मो य ऽएष तपत्येष हीदꣳ सर्वन्धारयत्येतेनेदꣳ सर्वन्धृतमेष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह धर्म्मासि सुधर्म्मेति ॥ २९ ॥ अथ खरे सादयति । 'अमेन्न्यस्मे[4] नृम्णानि धारये'त्यक्रुद्ध्यन्नो धनानि धारयेत्येवैतदाह 'ब्रह्म[5] धारय क्षत्रन्धारय विशन्धारये'त्येतत्सर्वन्धारयेत्येवैतदाह ॥३०॥ अथ शाकलैर्जुहोति । प्राणा वै शाकलाः प्राणानेवास्मिन्नेतद्दधाति ॥ ३१ ॥ 'स्वाहा[6] पूष्णे शरस' इति । अयं वै पूषा योऽयम्पवत ऽएष हीदꣳ सर्वम्पुष्यत्येष ऽउ प्राणः प्राणमेवास्मिन्नेतद्दधाति तस्मादाह स्वाहा पूष्णे शरस ऽइत्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुर्हुत्वा मद्ध्यमे परिधा ऽउपश्रयति ॥ ३२ ॥ 'स्वाहा[7] ग्रावभ्य' ऽइति । प्राणा वै ग्रावाणः प्राणानेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्रयति ॥ ३३ ॥ 'स्वाहा[8] प्रतिरवेभ्य' ऽइति । प्राणा वै प्रतिरवाः प्राणान्हीदꣳ सर्वम्प्रतिरत-

---

(१) "न्वेव" इति 'ग' 'ज' पुस्तकयोः । (२) "पिन्वत्याथ" इति 'ग' 'ज' पुस्तकयोः ।
* 'धर्म्मासीत्युत्क्रामत्युत्तरपूर्वार्द्धम्' का० श्रौ० सू० २६. ६. ९ ) इति ।
( ३ ) शु० य० सं० ३८. १४ । ( ४ ) शु० य० सं० ३८. १४ । ( ५ ) शु० य० सं० ३८. १४ । ( ६ ) शु० य० सं० ३८. १५ ।
(७) शु० य० सं० ३८. १५ । ( ८ ) शु० य० सं० ३८. १५ ।

न्प्राणानेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्श्रयति ॥ ३४ ॥ '¹स्वाहा पितृब्भ्य ऽऊर्द्ध्वबर्हिब्भ्यो घर्म्मपावब्भ्य' ऽइति । अहुत्वैवोदङ्ङ्वीक्षमाणो दक्षिणार्द्धे बर्हिष ऽउपगूहति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्नया वै पितरस्तानेवैतत्प्रीणात्यथ यन्न प्प्रेक्षते सकृदु ह्येव पराञ्चः पितरः ॥ ३५ ॥ '²स्वाहा द्यावापृथिवीब्भ्या'मिति । प्प्राणोदानौ वै द्यावापृथिवी प्प्राणोदानावेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्श्रयति ॥ ३६ ॥ '³स्वाहा विश्श्वेब्भ्यो देवेब्भ्य ऽइति । प्प्राणा वै विश्श्वे देवाः प्प्राणानेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्श्रयति ॥ ३७ ॥ '⁴स्वाहा रुद्राय रुद्रहूतय' ऽइति । अहुत्वैव दक्षिणेक्षमाणः प्प्रतिप्प्रस्थात्रे प्प्रयच्छति तᳪं स ऽउत्तरतः शालाया ऽउदङ्ङ्निरस्यत्त्येषा ह्येतस्य देवस्य दिक्स्वायामेवैनमेतद्दिशि प्प्रीणात्यथ यन्न प्प्रेक्षते नेद्दमा रुद्रो हिनसदिति ॥ ३८ ॥ सप्तैता ऽआहुतयो भवन्ति । सप्त वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ ३९ ॥ अथ महावीरादुपयमन्न्यामप्रत्यानयति । '⁵स्वाहा सञ्ज्योतिषा ज्योति'रिति ज्योतिर्वा ऽइतरस्मिन्न्पयो भवति ज्योतिरितरस्यान्ते ह्येतदुभे ज्योतिषी सङ्गच्छेते ऽअवरᳪं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः

* अत्र "रसो व्यक्षरत्त्स" इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।

(१) शु० य० सं० ३८. १५ । (२) शु० य० सं० ३८. १५ । (३) शु० य० सं० ३८. १५ । (४) शु० य० सं० ३८. १६ । (५) शु० य० सं० ३८. १६ ।

॥ ४० ॥ * अथ रौहिणौ जुहोति । 'अहः केतुना जुषताᳬं सुज्ज्योतिर्ज्ज्योतिषा स्वाहे'त्यसावेव बन्धू 'रात्रिः केतुना जुषताᳬं सुज्ज्योतिर्ज्ज्योतिषा स्वाहे'त्यसावेव बन्धुः ॥ ४१ ॥ अथ यजमानाय घर्म्मोच्छिष्टम्प्रयच्छति । स ऽउपहवमिष्ट्वा भक्षयति 'मधु हुतमिन्द्रतमे ऽअग्ग्नावि'ति मधु हुतमिन्द्रियवत्तमेऽग्ग्नावित्येवैतदाहा'श्याम ते देव घर्म्म नमस्ते ऽअस्तु मा मा हिᳬंसी'रित्याशिषमेवैतदाशास्ते ॥ ४२ ॥ अथ दक्षिणतः सिकता ऽउपकीर्ण्णा भवन्ति । तन्न्मार्ज्जयन्ते य ऽएव मार्ज्जालीये बन्धुः सोऽत्रानुप्प्रहरति शाकलानथोपसदा चरन्त्येतदु यज्ञस्य शिरः संस्कृतं य्यथा यथैनन्तदश्श्विनौ प्प्रत्यधत्ताम् ॥ ४३ ॥ तन्न प्प्रथमयज्ञे प्प्रवृञ्ज्यात् । एनस्यः हि तदुथो नेन्न्म ऽइन्द्रः शिरश्छिनदिति द्वितीये वैव तृतीये वापशीर्ष्ण्णा ह्येवाग्ग्रे यज्ञेन देवा ऽअर्च्चन्तः श्राम्म्यन्तश्चेरुस्तस्म्माद्वितीये वैव तृतीये वाथो तप्तो वा ऽएष शुशुचानो भवति ॥ ४४ ॥ तं य्यज्ञप्रथमयज्ञे प्प्रवृञ्ज्यात् । एषोऽस्य तप्तः शुशुचानः प्प्रजाश्च पशूँश्च प्प्रदहेदुथो ऽआयुः प्प्रमायुको यजमानः स्यात्तस्म्माद्वितीये वैव तृतीये वा ॥ ४५ ॥ तन्न सर्वस्म्मा ऽइव प्प्रवृञ्ज्यात् । सर्वं वै प्प्रवर्ग्यो नेत्सर्वस्म्मा ऽइव सर्वङ्करवाणीति यो न्न्वेव ज्ञातस्तस्म्मै प्प्रवृञ्ज्याद्यो वास्यप्प्रियः स्याद्यो वानूचानोऽनूक्तेनैनम्प्राप्प्नुयात् ॥ ४६ ॥

* अत्र शतम् ७०००।

(१) शु० य० सं० ३८. १६। (२) शु० य० सं० ३८. १६। (३) शु० य० सं० ३८. १६। (४) शु० य० सं० ३८. १६।

सहस्रे प्प्रवृञ्ज्यात् । सर्वं वै सहस्रꣳ सर्वमेष सर्व-
वेदसे प्प्रवृञ्ज्यात्सर्वं वै सर्ववेदसꣳ सर्वमेष विश्व-
जिति सर्वपृष्ठे प्प्रवृञ्ज्यात्सर्वं वै विश्वजित्सर्वपृष्ठꣳ
सर्वमेष वाजपेये राजसूये प्प्रवृञ्ज्यात्सर्वꣳ हि तत्सत्रे
प्प्रवृञ्ज्यात्सर्वं वै सत्रꣳ सर्वमेष ऽएतान्न्यस्य प्प्रवर्ज्जना-
न्न्यतो नान्न्यत्र ॥ ४७ ॥ तदाहुः । यदुपशिरा ऽअप्प्रव-
र्ग्योऽथ केनास्याग्निहोत्रꣳ शीर्षण्वद्भवतीत्याहवनीयेनेति
ब्ब्रूयात्कथन्दर्शपूर्ण्णमासाविरयाज्येन च पुरोडाशेन चेति
ब्ब्रूयात्कथञ्चातुर्म्मास्यानीति पयस्ययेति ब्ब्रूयात्कथम्पशु-
बन्ध ऽइति पशुना च पुरोडाशेन चेति ब्ब्रूयात्कथꣳ
सौम्म्योऽध्वर ऽइति हविर्द्धानेनेति ब्ब्रूयात् ॥ ४८ ॥ अथो
ऽआहुः । यज्ञस्य शीर्षच्छिन्नस्य शिर ऽएतद्देवाः प्प्रत्य-
दधुर्य्यदातिथ्यन्न ह वा ऽअस्यापशीर्ष्ण्णा केन चन यज्ञेनेष्ट-
म्भवति य ऽएवमेतद्वेद ॥ ४९ ॥ तदाहुः । यत्प्रणीताः
प्प्रणयन्ति यज्ञेऽथ कस्म्मादत्र न प्प्रणयतीति शिरो वा
ऽएतद्यज्ञस्य यत्प्रणीताः शिरः प्प्रवर्ग्यो नेच्छिरसा शिरो-
ऽभ्यारोहयाणीति ॥ ५० ॥ तदाहुः । यत्प्रयाजानुयाजा
ऽअन्न्यत्र भवन्त्यथ कस्म्मादत्र न भवन्तीति प्प्राणा वै
प्प्रयाजानुयाजाः प्प्राणा ऽअवकाशाः प्प्राणाः शाकला
नेत्प्राणैः प्प्राणानभ्यारोहयाणीति ॥ ५१ ॥ तदाहुः ।
यदाज्ज्यभागावन्न्यत्र जुह्वत्यथ कस्म्मादत्र न जुहोतीति
चक्षुषी वा ऽएते यज्ञस्य यदाज्ज्यभागौ चक्षुषी रौहिणौ
नेच्चक्षुषा चक्षुरभ्यारोहयाणीति ॥ ५२ ॥ तदाहुः । यद्वा-

नस्प्पत्त्यैर्द्देवेब्भ्यो जुहृत्यथ कुस्म्मादेतम्मृन्न्मयेनैव जुहोतीति यज्ञस्य शीर्षच्छिन्नस्य रसो ऽव्यक्षरत्स ऽइमे द्यावापृथिवी ऽअगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवेनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ५३ ॥ स यद्वानस्पत्यः स्यात् । प्रदह्येत यद्धिरण्मयः स्यात्प्रलीयेत यल्लोहमयः स्यात्प्रसिच्च्येत यदयस्मयः स्यात्प्रदहेत्परीशासात्तथैष ऽएवैतस्म्मा ऽअतिष्ठत तस्मादेतम्मृन्न्मयेनैव जुहोति ॥ ५४ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ५५ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

—०—

[ प्रवर्ग्योत्सादनम् ]

स वै तृतीयेऽहन् । षष्ठे वा द्वादशे वा प्प्रवर्ग्योपसदौ समस्य प्प्रवर्ग्यमुत्सादयत्युत्सन्नमिव हीदः शिरस्तद्यदेतमभितो भवति तत्सर्वः समादायाग्ग्रेण शालामन्तर्वेद्युपसमायन्ति ॥ १० ॥ अथाग्नीद्ध्रः । आहवनीये* त्रीञ्छालाकानुपकल्प्पयते तेषामेकमुज्ज्वलय्य मुखदघ्ने धारयमाणो जुहोति यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्सेमाँ-

* तथा च कात्यायनः—'आहवनीये त्रीञ्छालाकान्प्रदीप्य प्रदीप्याग्नीध्रो धारयति शतरुद्रियवत्प्रतिलोमं प्रमाणेषु' ( का० श्रौ० सू० २६. ७. ३ ) इति ।

ल्लोकानाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ २ ॥ अथ यन्मुखदघ्ने । उपरीव वै तद्यन्मुखदघ्न-मुपरीव तद्यदसौ लोकस्तद्यामुँल्लोकꣳ शुगाविशत्तयैवैनमे-तच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥ 'या ते घर्म्म दिव्या शु'गिति । यैव दिव्या शु'ग्या गायत्र्याꣳ हवि-र्द्धान' इति यैव गायत्र्याꣳ हविर्द्धाने 'सा त ऽआप्प्या-यताន्निष्ट्यायतान्तस्यै ते स्वाहे'ति नात्र तिरोहितमिवास्ति ॥ ४ ॥ अथ द्वितीयमुज्ज्वलस्य । नाभिदघ्ने धारयमाणो जुहोति मद्ध्यमिव वै तद्यन्नाभिदघ्नम्मद्ध्यमिवान्तरिक्षलोक-स्तद्यान्तरिक्षलोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥ 'या ते घर्म्मान्तरिक्षे शु'गिति । यैवा-न्तरिक्षे शु'ग्या त्रिष्टुब्भ्याग्नीध्र' ऽइति यैव त्रिष्टुब्भ्याग्नीध्रे 'सा त ऽआप्प्यायतान्निष्ट्यायतान्तस्यै ते स्वाहे'ति नात्र तिरो-हितमिवास्ति ॥६॥ [अर्धः प्रपाठकः ॥ ६१ ॥] अथ तृतीयम-ब्भ्याधाय । तस्मिमन्नासीनो जुहोत्यध ऽइव वै तद्यदासीनोऽध ऽइव तद्यदयँल्लोकस्तद्येमँल्लोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ७ ॥ 'या ते घर्म्म पृथिव्व्याꣳ शु'गिति । यैव पृथिव्व्याꣳ शु'ग्या जगत्त्याꣳ सदस्ये'ति यैव जगत्त्याꣳ सदस्या 'सा त ऽआप्प्यायतान्निष्ट्यायता-न्तस्यै ते स्वाहे'ति नात्र तिरोहितमिवास्ति ॥ ८ ॥ अथो-

(१) शु० य० सं० ३८. १८। (२) शु० य० सं० ३८. १८। (३) शु० य० सं० ३८. १८। (४) शु० य० सं० ३८. १८। (५) शु० य० सं० ३८. १८। (६) शु० य० सं० ३८. १८। (७) शु० य० सं० ३८. १८। (८) शु० य० सं० ३८. १८। (९) शु० य० सं० ३८. १८।

पनिष्क्रामति । 'क्षत्रस्य त्वा परस्पाये'[1]त्येतद्वै दैवं क्षत्रं य्य ऽएष तपत्यस्य त्वा मानुषस्य क्षत्रस्य परस्पत्त्वाये[2]त्त्येवैतदाह 'ब्रह्मणस्तन्वम्पाही'[3]ति ब्रह्मण ऽआत्मानङ्गोपायेत्त्येवैतदाह 'विशस्त्वा धर्म्मणा वय'[4]मिति यज्ञो वै विड्यज्ञस्य त्वारिष्ट्या ऽइत्त्येवैतदाह 'नुक्रामाम सुविताय नव्व्यस' [5] ऽइति यज्ञस्य-त्वारिष्ट्या ऽअह्वलाया ऽइत्त्येवैतदाह ॥ ९ ॥ अथाह साम गायेति । साम ब्रूहीति वा गायेति त्वेव ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिमान्बहिर्द्धा यज्ञाच्छरीरान्नाष्ट्रा रक्षाᳪंसि हिनसन्निति साम हि नाष्ट्राणाᳪं रक्षसामप-हन्ता ॥ १० ॥ आग्नेय्य्याङ्गायति । अग्निर्हि रक्षसामपह-न्तातिच्छन्दसि गायत्त्येषा वै सर्वाणि छन्दाᳪंसि यदु-तिच्छन्दास्तस्म्मादुतिच्छन्दसि गायति ॥ ११ ॥ स गायति । अग्निष्ट्वपति प्प्रतिदहत्त्यहावोऽहाव ऽइति तन्नाष्ट्रा ऽएवै[6]-तद्रक्षाᳪंस्यतोऽपहन्ति ॥ १२ ॥ त ऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्ग्रेणाग्ग्नीध्रमेषा हि यज्ञस्य द्वाः स यस्यान्ततो दिश्श्यापो भवन्ति तद्यन्ति ॥ १३ ॥ तं वै परिष्ष्यन्द ऽउत्सादयेत् । तप्तो वा ऽएष शुशुचानो भवति तं य्यदस्यामुत्सादुयेदिमामस्य शुगृच्छेद्यदुप्प्सूत्सा-दुयेदपोऽस्य शुगृच्छेदुथ यत्परिष्ष्यन्द ऽउत्सादुयति तथो ह नैवापो हिनस्ति नेमां य्यदुहाप्प्सु न प्प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वा ऽआप-

(१) शु० य० सं० ३८. १९ । (२) "परस्पाये०" इति 'ग' 'ज' पुस्तकयोः । (३) शु० य० सं० ३८. १९ । (४) शु० य० सं० ३८. १९ । (५) शु० य० सं० ३८. १९ । (६) "वै तद्र०" इति 'ग' 'ज' पुस्तकयोः ।

[ तत्त्वज्ञाने आगमोपपत्त्योरावश्यकत्वप्रतिपादनम् ]

( तत्र च ब्रह्मविद्यास्तुत्यर्थाऽऽख्यायिका )

जनको ह वैदेहः । बहुदक्षिणेन * यज्ञेनेजे तत्र ह कुरुपञ्चालानाम्ब्राह्मणा ऽअभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषाम्ब्राह्मणानामनूचानतम ऽइति ॥ १ ॥ स ह गवाᳬं सहस्रमवरुरोध । दश दश पादा ऽएकैकस्याः शृङ्गयोराबद्धा बभूवुस्तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स ऽएता गा ऽउदजतामिति ते ह ब्राह्मणा न दधृषुः ॥ २ ॥ अथ ह याज्ञवल्क्यः । स्वमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सामश्रवा३ ऽइति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथन्नु नो ब्रह्मिष्ठो ब्रुवीतेति ॥ ३ ॥ अथ ह जनकस्य वैदेहस्य होताऽश्वलो बभूव । स हैनम्प्रपच्छ त्वन्नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ ऽइति स होवाच नमो वयम्ब्रह्मिष्ठाय कुर्म्मो गोकामा ऽएव वयᳬं स्म ऽइति तᳬं ह तत ऽएव प्रष्टुन्दध्रे होताऽश्वलः ॥ ४ ॥ याज्ञवल्क्येति होवाच । यदिदᳬं सर्वम्मृत्युनाप्तᳬं सर्वम्मृत्युनाभिपन्नङ्केन यजमानो मृत्योराप्तिमतिमुच्यत ऽइति होत्रर्त्विजाग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक्सोऽयमग्निः स होता सा मुक्तिः सातिमुक्तिः ॥५॥ याज्ञवल्क्येति होवाच । यदिदᳬं सर्वमहोरात्राभ्यामाप्तᳬं सर्वमहोरात्राभ्यामभिपन्नङ्केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत

* शाखान्तरप्रसिद्धेन, बहुदक्षिणाविशिष्टेनाश्वमेधेन वा ।

ऽद्ध्वर्युणर्त्त्विजा चक्षुषादित्येन चक्षुर्वै यज्ञस्याद्ध्वर्यु-स्तद्यदिदञ्चक्षुः सोऽसावादित्यः सोऽद्ध्वर्युः सा मुक्तिः सातिमुक्तिः ॥ ६ ॥ याज्ञवल्क्येति होवाच । यदिदꣳ सर्व्वम्पूर्व्वपक्षापरपक्षाभ्यामाप्तꣳ सर्व्वम्पूर्व्वपक्षापरपक्षाभ्या-मभिपन्नङ्केन यजमानः पूर्व्वपक्षापरपक्षयोराप्तिमतिमुच्यत ऽइति ब्रह्मणर्त्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदम्मनः सोऽसौ चन्द्रः स ब्रह्मा सा मुक्तिः साति-मुक्तिः ॥७॥ याज्ञवल्क्येति होवाच। यदिदमन्तरिक्षमनारम्ब-णमिवाथ केनाक्रमेण यजमानः स्वर्ग्गँल्लोकमाक्रमत ऽइत्यु-द्गात्रर्त्त्विजा वायुना प्प्राणेन प्प्राणो वै यज्ञस्योद्गाता तद्योऽयम्प्राणः स वायुः स ऽउद्गाता सा मुक्तिः साति-मुक्तिरित्यतिमोक्षा ऽअथ सम्पदः ॥ ८ ॥ याज्ञवल्क्येति होवाच । कतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्र ऽइति पुरोऽनुवाक्क्या च याज्ज्या च शस्यैव तृतीया किन्ताभिर्ज्जयतीति पृथिवीलोक-मेव पुरोऽनुवाक्क्यया जयत्यन्तरिक्षलोकं याज्ज्यया द्यौ-र्ल्लोकꣳ शस्यया ॥९॥ याज्ञवल्क्येति होवाच । कत्ययमद्याद्ध्व-र्युरस्मिन्यज्ञ ऽआहुतीर्होष्यतीति तिस्र ऽइति कत-मास्तास्तिस्र ऽइति या हुता ऽउज्ज्वलन्ति या हुता ऽअ-तिनेदन्ति या हुता ऽअधिशेरते किन्ताभिर्ज्जयतीति या हुता ऽउज्ज्वलन्ति देवलोकमेव ताभिर्ज्जयति दीप्प्यत ऽइव हि देवलोको या हुता ऽअतिनेदन्ति मानुष्यलोकमेव ताभि-

(१) "मनुष्यलोक०" इति 'ग' 'ज' पुस्तकयोः। काण्वशाखायामपि "मनुष्यलो०" इत्येव पाठ उपलभ्यते ॥

र्जयत्यतीव हि मानुष्यलोको या हुता ऽअधिशेरते पितृलोकमेव ताभिर्ज्जयत्यध ऽइव हि पितृलोकः ॥ १० ॥ याज्ञवल्क्येति होवाच । कतिभिरयमद्य ब्रह्मा यज्ञन्दक्षिणतो देवताभिर्गोपायिष्यतीत्येकयेति कतमा सैकेति मन ऽएवेत्यनन्तं वै मनोऽनन्ता विश्वे देवा ऽअनन्तमेव स तेन लोकञ्जयति ॥ ११ ॥ याज्ञवल्क्येति होवाच । कत्ययमद्योद्गातास्मिन्यज्ञे स्तोत्रिया स्तोष्यतीति तिस्र ऽइति कतमास्तास्तिस्र ऽइति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीयाधिदेवतमथाध्यात्मङ्कतमास्ता या ऽअध्यात्ममिति प्राण ऽएव पुरोनुवाक्यापानो याज्या व्यानः शस्या किन्ताभिर्ज्जयतीति यत्किञ्चेदम्प्राणभृदिति ततो ह होताऽश्वल ऽउपरराम ॥ १२ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ ग्रहातिग्रहविषये आर्तभागयाज्ञवल्क्यसंवादः ]

अथ हैनञ्जारत्कारव ऽआर्त्तभागः पप्रच्छ । याज्ञवल्क्येति होवाच कति ग्ग्रहाः कत्यतिग्ग्रहा ऽइत्यष्टौ ग्ग्रहा ऽअष्टावतिग्ग्रहा ये तेऽष्टौ ग्ग्रहा ऽअष्टावतिग्ग्रहाः कतमे त ऽइति ॥ १ ॥ प्राणो वै ग्ग्रहः । सोऽपानेनातिग्ग्रहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्रति ॥ २ ॥ जिह्वा वै ग्ग्रहः । स रसेनातिग्ग्रहेण गृहीतो जिह्वया हि रसान्विजानाति

(१) "मनुष्यलोक०" इति 'ग' 'ज' पुस्तकयोः । काण्वशाखायामपि "मनुष्यलोक०" इत्येव ॥

॥ ३ ॥ वाग्वै ग्रहः । स नाम्नातिग्रहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ४ ॥ चक्षुर्वै ग्रहः । स रूपेणातिग्रहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥ श्रोत्रं वै ग्रहः । स शब्देनातिग्रहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति ॥६॥ मनो वै ग्रहः । स कामेनातिग्रहेण गृहीतो मनसा हि कामान्कामयते ॥७॥ हस्तौ वै ग्रहः । स कर्म्मणातिग्रहेण गृहीतो हस्ताभ्याᳬं हि कर्म्म करोति ॥ ८ ॥ त्वग्वै ग्रहः । स स्पर्शेनातिग्रहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत ऽइत्यष्टौ ग्रहा ऽअष्टावतिग्रहाः ॥ ९ ॥ याज्ञवल्क्येति होवाच । यदिदᳬं सर्वम्मृत्योरन्नङ्कास्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्म्मृत्युञ्जयति ॥ १० ॥ याज्ञवल्क्येति होवाच । यत्रायम्पुरुषो म्रियते किमेनन्न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वे देवा ऽअनन्तमेव स तेन लोकञ्जयति ॥ ११ ॥ याज्ञवल्क्येति होवाच । यत्रायम्पुरुषो म्रियत ऽउदस्मात्प्राणाः क्रामन्त्याहो३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स ऽउच्छ्वयत्याद्ध्मायत्याद्ध्मातो मृतः शेते ॥ १२ ॥ याज्ञवल्क्येति होवाच । यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातम्प्राणश्चक्षुरादित्यम्मनश्चन्द्रन्दिशः श्रोत्रम्पृथिवीᳬं शरीरमाकाशमात्मौषधीर्ल्लोमानि वनस्पतीन्केशा ऽअप्सु लोहितञ्च रेतश्च निधीयते क्वायन्तदा पुरुषो भवतीत्याहर सौम्य हस्तम् ॥ १३ ॥ आर्त्तभागेति होवाच । आवमेवैतद्वेदिष्यावो न

नावेतत्त्सजन ऽइति तौ होत्क्रम्म्य मन्त्रयाञ्चक्क्रतुस्तौ ह यदूचतुः कर्म्म हैव तदूचतुरथ ह यत्त्प्रशशꣳसतुः कर्म्म हैव तत्त्प्रशशꣳसतुः पुण्ण्यो वै पुण्ण्येन कर्म्मणा भवति पापः पापेनेति ततो ह जारत्त्कारव ऽआर्त्तभाग ऽउपरराम ॥ १४ ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥

कण्डिकासंख्या ॥ १०४ ॥

[ कर्मफलानां संसारत्वप्रदर्शनायैव भुज्युयाज्ञवल्क्यसंवादः ]

अथ हैनम्भुज्ज्युर्ल्लाह्यायनिः पप्प्रच्छ । याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्य्यव्रजाम ते पतञ्चलस्य काप्प्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्व्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्त्सुधन्न्वाङ्गिरस ऽइति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्क पारिक्षिता ऽअभवन्न्क पारिक्षिता ऽअभवन्निति तत्त्वा पृच्छामि याज्ञवल्क्य क्क पारिक्षिता ऽअभवन्निति ॥ १ ॥ स होवाच । उवाच वै स तदगच्छन्न्वै ते तत्र यत्राश्वमेधयाजिनो गच्छन्तीति क्क न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिꣳशतं वै देवरथाह्न्यान्न्ययँल्लोकस्तꣳ समन्तँल्लोकन्द्विस्तावत्त्पृथिवी पर्य्येति ताम्पृथिवीन्द्विस्तावत्त्समुद्रः पर्य्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्त्रन्तावानन्तरेणाकाशस्तानिन्द्रः सुपर्ण्णो भूत्त्वा वायवे प्प्रायच्छत्तान्वा-

(१) "त" इति 'ग' 'ज' पुस्तकयोः ।

युरात्मनि धित्वा तत्रागमयद्यत्र पारिक्षिता ऽअभवन्नित्ये-वमिव वै स व्वायुमेव प्प्रशशꣳस तस्माद्वायुरेव व्व्यष्टि-र्व्वायुꣳ समष्टिरप पुनर्म्मृत्युञ्जयति सर्व्वमायुरेति य ऽएवं व्वेद ततो ह भुज्ज्युर्ल्लाह्यायनिरुपरराम ॥ २ ॥

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—०—

[ ससंन्यासात्मज्ञानविषये कहोडयाज्ञवल्क्यसंवादः ]

अथ हैनङ्कहोडꣳ कौषीतकेयꣳ पप्प्रच्छ । याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य ऽआत्मा सर्व्वान्तरस्तम्मे व्व्याचक्ष्वेत्येष त ऽआत्मा सर्व्वान्तरꣳ कतमो याज्ञवल्क्य सर्व्वान्तरो योऽशनायापिपासे शोकम्मोहञ्जराम्मृत्युमत्त्येत्येतं व्वै तमात्मानं विदित्वा ब्ब्राह्मणाꣳ पुत्त्रैषणायाश्च वित्तैषणाया-श्च लोकैषणायाश्च व्व्युत्थायाथ भिक्षाचर्य्यञ्चरन्ति या ह्येव पुत्त्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते ऽएषणे ऽएव भवतस्तस्मात्पण्डितꣳ पाण्डित्त्यन्निर्व्विद्य बाल्येन तिष्ठासेद्बाल्यञ्च पाण्डित्त्यञ्च निर्व्विद्याथ मुनि-रमौनञ्च मौनञ्च निर्व्विद्याथ ब्ब्राह्मणꣳ स ब्ब्राह्मणꣳ केन स्याद्येन स्यात्तेनेदृश ऽएव भवति य ऽएवं व्वेद ततो ह कहोडꣳ कौषीतकेय ऽउपरराम ॥ १ ॥

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

—०—

[ आत्मविषये उषस्तयाज्ञवल्क्यसंवादः ]

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ । याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य ऽआत्मा सर्वान्तरस्तम्मे व्याचक्ष्वेत्येष त ऽआत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त ऽआत्मा सर्वान्तरो योऽपानेनापानिति स त ऽआत्मा सर्वान्तरो यो व्यानेन व्यनिति स त ऽआत्मा सर्वान्तरो य ऽउदानेनोदनिति स त ऽआत्मा सर्वान्तरो यः समानेन समा(१)निति स त ऽआत्मा सर्वान्तरः स होवाचोषस्तश्चाक्रायणो यथा वै ब्रूयादसौ गौरसावश्व ऽइत्येवमेवैतद्व्यपदिष्टम्भवति यदेव साक्षादपरोक्षाद्ब्रह्म य ऽआत्मा सर्वान्तरस्तम्मे व्याचक्ष्वेत्येष त ऽआत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो न दृष्टेर्द्रष्टारम्पश्येर्न्न श्रुतेः श्रोतारः शृणुया न मतेर्म्मन्तारम्मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया ऽएष त ऽआत्मा सर्वान्तरोऽतोऽन्यदार्त्तन्ततो होषस्तश्चा-क्रायण ऽउपरराम ॥ १ ॥

षष्ठाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

—०—

[ सर्वान्तरस्यात्मनः स्वरूपाधिगमाय गार्गीयाज्ञवल्क्यसंवादः ]

अथ हैनङ्गार्गी वाचक्नवी पप्रच्छ । याज्ञवल्क्येति होवाच यदिदः सर्वमप्स्वोतश्च प्रोतश्च कस्मिन्न्वाप ऽओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु वायुरो-तश्च प्रोतश्चेत्याकाश ऽएव गार्गीति कस्मिन्न्वाकाश

(१) ''समनिति'' इति 'ग' 'ज' पुस्तकयोः ।

ऽओतश्च प्प्रोतश्च्चेत्यन्तरिक्षलोकेषु गार्ग्गीति कस्म्मिन्नव-न्तरिक्षलोका ऽओताश्च्च प्प्रोताश्च्चेति द्यौर्ल्लोकेषु गार्ग्गीति कस्म्मिन्नु द्यौर्ल्लोका ऽओताश्च्च प्प्रोताश्च्चेत्यादित्यलोकेषु गार्ग्गीति कस्म्मिन्न्वादित्यलोका ऽओताश्च्च प्प्रोताश्च्चेति चन्द्रलोकेषु गार्ग्गीति कस्म्मिन्नु चन्द्रलोका ऽओताश्च्च प्प्रोताश्च्चेति नक्षत्रलोकेषु गार्ग्गीति कस्म्मिन्नु नक्षत्र-लोका ऽओताश्च्च प्प्रोताश्च्चेति देवलोकेषु गार्ग्गीति क-स्म्मिन्नु देवलोका ऽओताश्च्च प्प्रोताश्च्चेति गन्धर्व्वलोकेषु गार्ग्गीति कस्म्मिन्नु गन्धर्व्वलोका ऽओताश्च्च प्प्रोताश्च्चेति प्प्रजापतिलोकेषु गार्ग्गीति कस्म्मिन्नु प्प्रजापतिलोका ऽओ-ताश्च्च प्प्रोताश्च्चेति ब्ब्रह्मलोकेषु गार्ग्गीति कस्म्मिन्नु ब्ब्रह्मलोका ऽओताश्च्च प्प्रोताश्च्चेति स होवाच गार्ग्गि मातिप्प्राक्षीर्म्मा ते मूर्द्धा व्व्यपप्प्तदनतिप्प्रश्न्या वै देवता ऽअतिपृच्छसि गार्ग्गि मातिप्प्राक्षीरिति ततो ह गार्ग्गी व्वाचक्क्नव्व्युपरराम ॥ १ ॥

षष्ठाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

———•———

[ ब्रह्मलोकानामन्तरतमं सूत्रं दर्शयितुमुद्दालकयाज्ञवल्क्यसंवादः ]

अथ हैनमुद्दालक ऽआरुणिः पप्प्रच्छ । याज्ञवल्क्येति होवाच मद्रेष्ष्ववसाम पतञ्चलस्य काप्प्यस्य गृहेषु यज्ञ-मधीयानास्तस्यासीद्भार्य्या गन्धर्व्वगृहीता तमपृच्छाम कोऽ-

---

( १ ) 'ग' 'ज' पुस्तकयोः "द्यौर्ल्लोके" इति पाठो दृश्यते ।

( २ ) "द्यौर्ल्लोक" इति 'ग' 'ज' पुस्तकयोः । तथैव तद्विशेषणीभूतौ ओतप्रोतशब्दावप्येक-वचनान्तावेवोक्तपुस्तकयोरुपलभ्येते ।

सीति सोऽब्रवीत्कबन्ध ऽआथर्वण ऽइति ॥ १ ॥ सोऽब्रवीत् । पतञ्चलङ्काप्प्यं य्याज्ञिकाँश्च व्वेत्थ नु त्वङ्काप्प्य तत्सूत्रं य्येनायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सन्दृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्प्यो नाहन्तद्भगवन्वेदेति ॥ २ ॥ सोऽब्रवीत् । पतञ्चलङ्काप्प्यं य्याज्ञिकाँश्च व्वेत्थ नु त्वङ्काप्प्य तमन्तर्य्यामिणं य्य ऽइमञ्च लोकम्परञ्च लोकः सर्व्वाणि च भूतान्यन्तरो यमयतीति सोऽब्रवीत्पतञ्चलः काप्प्यो नाहन्तम्भगवन्वेदेति ॥ ३ ॥ सोऽब्रवीत् । पतञ्चलङ्काप्प्यं य्याज्ञिकाँश्च यो वै तत्काप्प्य सूत्रं व्विद्यात्तञ्चान्तर्य्यामिणः स ब्रह्मवित्स लोकवित्स देववित्स व्वेदवित्स यज्ञवित्स भूतवित्स ऽआत्मवित्स सर्व्वविदिति तेभ्योऽब्रवीत्तदहं व्वेद तच्चेत्त्वं य्याज्ञवल्क्य सूत्रमविद्वाँस्तञ्चान्तर्य्यामिणम्ब्रह्मगवीरुदजसे मूर्द्धा ते व्विपतिष्यतीति ॥ ४ ॥ व्वेद व्वा ऽअहङ्गौतम । तत्सूत्रन्तञ्चान्तर्य्यामिणमिति यो व्वा ऽइदङ्कश्चिद्ब्रूयाद्वेद वेदेति यथा व्वेत्थ तथा ब्रूहीति ॥ ५ ॥ व्वायुर्व्वै गौतम तत्सूत्रम् । व्वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सन्दृब्धानि भवन्ति तस्माद्वै गौतम पुरुषम्प्रेतमाहुर्व्यस्रंसिषतास्याङ्गानीति व्वायुना हि गौतम सूत्रेण सन्दृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्य्यामिणम्ब्रूहीति ॥ ६ ॥ यः पृथिव्व्यान्तिष्ठन् । पृथिव्व्या ऽअन्तरो यम्पृथिवी न व्वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त ऽआत्मान्तर्य्याम्य-

मृतः ॥ ७ ॥ योऽप्सु तिष्ठन् । अद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ ८ ॥ * योऽग्नौ तिष्ठन् । अग्नेरन्तरो यमग्निर्न्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ ९ ॥ य ऽआकाशे तिष्ठन् । आकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य ऽआकाशमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १० ॥ यो वायौ तिष्ठन् । वायोरन्तरो यं वायुर्न्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ ११ ॥ य ऽआदित्ये तिष्ठन् । आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य ऽआदित्यमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १२ ॥ यश्चन्द्रतारके तिष्ठन् । चन्द्रतारकादन्तरो यञ्चन्द्रतारकन्न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १३ ॥ यो दिक्षु तिष्ठन् । दिग्भ्योऽन्तरो यन्दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १४ ॥ यो विद्युति तिष्ठन् । विद्युतोऽन्तरो यं विद्युन्न वेद यस्य विद्युच्छरीरं यो विद्युतमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १५ ॥ य स्तनयित्नौ तिष्ठन् । स्तनयित्नोरन्तरो यꣳ स्तनयित्नुर्न्न वेद यस्य स्तनयित्नुः शरीरं य स्तनयित्नुमन्तरो

* शतम् ७३०० ।

यमयति स त ऽआत्मान्तर्य्याम्म्यमृत ऽइत्यधिदेवतमथा-
धिलोकम् ॥ १६ ॥ यः सर्व्वेषु लोकेषु तिष्ठन् । सर्व्वेब्भ्यो
लोकेब्भ्योऽन्तरो यꣳ सर्व्वे लोका न विदुर्य्यस्य सर्व्वे लोकाः
शरीरं य्यः सर्व्वाँल्लोकानन्तरो यमयति स त ऽआत्मान्त-
र्य्याम्म्यमृत ऽइत्यु ऽएवाधिलोकमथाधिवेदम् ॥ १७ ॥
यः सर्व्वेषु व्वेदेषु तिष्ठन् । सर्व्वेब्भ्यो व्वेदेब्भ्योऽन्तरो यꣳ
सर्व्वे व्वेदा न विदुर्य्यस्य सर्व्वे व्वेदाः शरीरं य्यः सर्व्वान्व्वे-
दानन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृत ऽइत्यु
ऽएवाधिवेदमथाधियज्ञम् ॥ १८ ॥ यः सर्व्वेषु यज्ञेषु तिष्ठन् ।
सर्व्वेब्भ्यो यज्ञेब्भ्योऽन्तरो यꣳ सर्व्वे यज्ञा न विदुर्य्यस्य
सर्व्वे यज्ञाः शरीरं य्यः सर्व्वान्न्यज्ञानन्तरो यमयति स त
ऽआत्मान्तर्य्याम्म्यमृत इत्यु ऽएवाधियज्ञमथाधिभूतम्
॥ १९ ॥ यः सर्व्वेषु भूतेषु तिष्ठन् । सर्व्वेब्भ्यो भूतेब्भ्योऽ-
न्तरो यꣳ सर्व्वाणि भूतानि न विदुर्य्यस्य सर्व्वाणि भूतानि
शरीरं य्यः सर्व्वाणि भूतान्न्यन्तरो यमयति स त ऽआत्मा-
न्तर्य्याम्म्यमृत ऽइत्यु ऽएवाधिभूतमथाद्ध्यात्मम् ॥ २० ॥
यः प्प्राणे तिष्ठन् । प्राणादन्तरो यम्प्राणो न वेद यस्य
प्प्राणः शरीरं य्यः प्प्राणमन्तरो यमयति स त ऽआत्मान्त-
र्य्याम्म्यमृतः ॥२१॥ यो व्वाचि तिष्ठन् । व्वाचोऽन्तरो यं व्वाङ्न
वेद यस्य व्वाक् शरीरं य्यो व्वाचमन्तरो यमयति स
त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २२ ॥ यश्चक्षुषि तिष्ठन् ।
चक्षुषोऽन्तरोयञ्चक्षुर्न्न वेद यस्य चक्षुः शरीरं य्य-
श्चक्षुरन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥२३॥

यः श्रोत्रे तिष्ठन् । श्रोत्रादन्तरो यꣳ श्रोत्रन्न वेद यस्य श्रोत्रꣳ शरीरं ऽयः श्रोत्रमन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २४ ॥ यो मनसि तिष्ठन् । मनसोऽन्तरो यम्मनो न वेद यस्य मनः शरीरं ऽयो मनोऽन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २५ ॥ यस्त्वचि तिष्ठन् । त्वचोऽन्तरो यन्त्वङ्न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २६ ॥ यस्तेजसि तिष्ठन् । तेजसोऽन्तरो यन्तेजो न वेद यस्य तेजः शरीरं ऽयस्तेजोऽन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २७ ॥ यस्तमसि तिष्ठन् । तमसोऽन्तरो यन्तमो न वेद यस्य तमः शरीरं ऽयस्तमोऽन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २८ ॥ यो रेतसि तिष्ठन् । रेतसोऽन्तरो यꣳ रेतो न वेद यस्य रेतः शरीरं ऽयो रेतोऽन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २९ ॥ य ऽआत्मनि तिष्ठन् । आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं ऽय ऽआत्मानमन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ ३० ॥ अदृष्टो द्रष्टा । अश्रुतः श्रोतामतो मन्ताविज्ञातो विज्ञाता नान्योऽस्ति द्रष्टा नान्योऽस्ति श्रोता नान्योऽस्ति मन्ता नान्योऽस्ति विज्ञातैष त ऽआत्मान्तर्य्याम्म्यमृतोऽतोऽन्यदार्त्तन्ततो होद्दालक ऽआरुणिरुपरराम ॥ ३१ ॥

षष्ठाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

———•———

[ अशनायादिविनिर्मुक्तं निरुपाधिकं सर्वान्तरं ब्रह्म वर्णयितुं गार्गीयाज्ञवल्क्यसंवादः ]

अथ ह व्वाचक्क्नव्युवाच । ब्ब्राह्मणा भगवन्तो हन्ताहमिमं य्याज्ञवल्क्यन्द्वौ प्प्रश्नौ प्प्रक्ष्यामि तौ चेन्मे व्विवक्ष्यति न वै जातु युष्म्माकमिमङ्कश्चिद्ब्रह्मोद्यञ्जेतेति तौ चेन्मे न व्विवक्ष्यति मूर्द्धास्य व्विपतिष्ष्यतीति पृच्छ गार्ग्गीति ॥ १ ॥ सा होवाच । अहं व्वै त्वा याज्ञवल्क्य यथा काश्श्यो वा व्वैदेहो वोग्ग्रपुत्त्र ऽउज्ज्यन्धनुरधिज्ज्यङ्कृत्वा द्वौ व्वाणवन्तौ सपत्नातिव्व्याधिनौ[1] हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहन्त्वा द्वाभ्याम्प्रश्नाभ्यामुपोदस्थान्तौ मे ब्ब्रूहीति पृच्छ गार्ग्गीति ॥ २ ॥ सा होवाच । यदूर्द्ध्वं य्याज्ञवल्क्य दिवो यदवाक्क्पृथिव्व्या यदन्तरा द्यावापृथिवी ऽइमे यद्भूतञ्च भवच्च भविष्ष्यच्चेत्याचक्षते कस्म्मिँस्तदोतञ्च प्प्रोतञ्चेति ॥ ३ ॥ स होवाच । यदूर्द्ध्वङ्गार्ग्गि दिवो यदवाक्क्पृथिव्व्या यदन्तरा द्यावापृथिवी ऽइमे यद्भूतञ्च भवच्च भविष्ष्यच्चेत्याचक्षत ऽआकाशे तदोतञ्च प्प्रोतञ्चेति ॥ ४ ॥ सा होवाच । नमस्ते याज्ञवल्क्य यो म ऽएतं व्व्यवोचोऽपरस्म्मै धारयस्वेति पृच्छ गार्ग्गीति ॥ ५ ॥ सा होवाच । यदूर्द्ध्वं य्याज्ञवल्क्य दिवो यदवाक्क्पृथिव्व्या यदन्तरा द्यावापृथिवी ऽइमे यद्भूतञ्च भवच्च भविष्ष्यच्चेत्याचक्षते कस्म्मिन्नेव तदोतञ्च प्प्रोतञ्चेति ॥ ६ ॥ स होवाच । यदूर्द्ध्वङ्गार्ग्गि दिवो यदवाक्क्पृथिव्व्या यदन्तरा द्यावापृथिवी ऽइमे

(१) "सपत्नाधिव्याधिनौ" इति 'ग' 'ज' पुस्तकयोः ।

यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षत ऽआकाश ऽएव तदो-
तञ्च प्प्रोतञ्चेति कस्मिन्न्वाकाश ऽओतश्च प्प्रोतश्चेति
॥ ७ ॥ स होवाच । एतद्वै तदक्षरङ्गार्ग्गि ब्ब्राह्मणा ऽअभि-
वदन्त्यस्थूलमनणवह्रस्वमदीर्ग्घमलोहितमस्नेहमच्छायमत-
मोऽवाय्वनाकाशमसङ्गमस्प्पर्शमगन्धमरसमचक्षुष्कमश्रोत्र-
मवागमनोऽतेजस्कमप्प्राणममुखमनामागोत्रमजरमसरमभ-
यममृतमरजोऽशब्दमविवृतमसँवृतमपूर्व्वमनपरमनन्तरमबा-
ह्यन्न तदश्नोति कश्चन न तदश्नोति कश्चन ॥ ८ ॥
एतस्य वा ऽअक्षरस्य । प्प्रशासने गार्ग्गि द्यावा-
पृथिवी व्विधृते तिष्ठत ऽएतस्य वा ऽअक्षरस्य प्प्रशा-
सने गार्ग्गि सूर्य्याचन्द्रमसौ व्विधृतौ तिष्ठत ऽएतस्य वा
ऽअक्षरस्य प्प्रशासने गार्ग्ग्यहोरात्राण्यर्द्धमासा मासा
ऽऋतवः सँवत्सरा व्विधृतास्तिष्ठन्त्येतस्य वा ऽअक्षरस्य
प्प्रशासने गार्ग्गि प्प्राच्च्योऽन्न्या नद्यः स्यन्दन्ते श्वेतेब्भ्यः
पर्व्वतेब्भ्यः प्प्रतीच्च्योऽन्न्या यां य्यां च दिशमेतस्य वा
ऽअक्षरस्य प्प्रशासने गार्ग्गि ददतम्मनुष्ष्याः प्प्रशँसन्ति
यजमानन्देवा दर्व्वीम्पितरोऽन्न्वायत्ताः ॥ ९ ॥ यो वा
ऽएतदक्षरमविदित्त्वा गार्ग्गि । अस्मिँल्लोके जुहोति ददाति
तपस्यत्यपि बहूनि व्वर्षसहस्राण्यन्तवानेवास्य स लोको
भवति यो वा ऽएतदक्षरमविदित्त्वा गार्ग्ग्यस्म्माल्लोकात्प्रैति
स कृपणोऽथ य ऽएतदक्षरङ्गार्ग्गि विदित्त्वास्म्माल्लोकात्प्रैति
स ब्ब्राह्मणः ॥ १० ॥ तद्वा ऽएतदक्षरङ्गार्ग्गि । अदृष्टन्द्र-
ष्ट्रश्रुतं श्रोत्रमतम्मन्तृविज्ञातं व्विज्ञातृ नान्यदस्ति

द्रष्टृ नान्न्यदस्ति श्रोतृ नान्न्यदस्ति मन्तृ नान्न्यदस्ति विज्ञात्रेतद्वै तदक्षरङ्गार्गि यस्मिन्नाकाश ऽओतश्च्च प्प्रोतश्च्चेति ॥ ११ ॥ सा होवाच । ब्ब्राह्मणा भगवन्तस्तदेव बहु मन्न्यद्ध्वं यदस्मान्नमस्कारेण मुच्च्याद्ध्वै न वै जातु युष्म्माकमिमङ्कश्चिद्ब्रह्मोद्यञ्जेतेति ततो ह व्वाचक्क्नव्व्युपरराम ॥ १२ ॥

## षष्ठाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

[ ब्रह्मणो नियन्तव्यदेवताभेदसंकोचविकासद्वारेणाधिगन्तव्यं साक्षादपरोक्षत्वं वर्णयितुं शाकल्ययाज्ञवल्क्यसंवादः ]

अथ हैनं व्विदग्धः शाकल्ल्यः पप्प्रच्छ । कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्प्रतिपेदे यावन्तो व्वैश्श्वदेवस्य निविद्युच्च्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्त्योमिति होवाच ॥ १ ॥ कत्त्येव देवा याज्ञवल्क्येति । त्रयस्त्रिꣳशदित्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति षडित्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति त्त्रय ऽइत्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति द्वावित्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येत्यद्ध्यर्द्ध ऽइत्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येत्त्येक ऽइत्त्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ २ ॥ स होवाच । महिमान ऽएवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा ऽइति कतमे ते त्रयस्त्रिꣳशदित्त्यष्टौ व्वसव ऽएकादश

रुद्रा द्वादशादित्यास्त ऽएकत्रिꣳशदिन्द्रश्चैव प्प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ ३ ॥ कतमे व्वसव ऽइति । अग्निश्च पृथिवी च व्वायुश्चान्तरिक्षश्चादित्यश्च्च द्यौश्च्च चन्द्रमाश्च्च नक्षत्राणि चैते व्वसव ऽएतेषु हीदꣳ सर्वं व्वसु हितमेते हीदꣳ सर्वं व्वासयन्ते तद्यदिदꣳ सर्वं व्वासयन्ते तस्स्माद्वसव ऽइति ॥४॥ कतमे रुद्रा ऽइति । दशेमे पुरुषे प्प्राणा ऽआत्मैकाद-शस्ते यदास्स्मान्न्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्य-द्रोदयन्ति तस्स्माद्रुद्रा ऽइति ॥ ५ ॥ कतम ऽआदित्या ऽइति । द्वादश मासाः सँव्वत्सरस्यैत ऽआदित्या ऽएते हीदꣳ सर्वमाददाना यन्ति तद्यदिदꣳ सर्वमाददाना यन्ति तस्स्मा-दादित्या ऽइति ॥ ६ ॥ [ अर्धः प्रपाठकः ॥ ५४ ॥ ] कतम ऽइन्द्रः कतमः प्प्रजापतिरिति । स्तनयित्त्नुरेवेन्द्रो यज्ञः प्प्रजापतिरिति कतम स्तनयित्त्नुरित्त्यशनिरिति कतमो यज्ञ ऽइति पशव ऽइति ॥ ७ ॥ कतमे षडिति । अग्निश्च पृथिवी च व्वायुश्च्चान्तरिक्षश्चादित्त्यश्च्च द्यौश्च्चैते षडि-त्त्येते ह्येवेदꣳ सर्वꣳ षडिति ॥ ८ ॥ कतमे ते त्रयो देवा ऽइति । इम ऽएव त्रयो लोका ऽएषु हीमे सर्वे देवा ऽइति कतमौ तौ द्वौ देवावित्त्यन्नञ्चैव प्प्राणश्च्चेति कतमोऽद्ध्यर्द्ध ऽइति योऽयम्पवत ऽइति ॥ ९ ॥ तदाहुः । यदयमेक ऽएव पवतेऽथ कथमद्ध्यर्द्ध ऽइति यदस्स्मिन्निदꣳ सर्वमद्ध्यार्ध्नो-त्तेनाद्ध्यर्द्ध ऽइति कतम ऽएको देव ऽइति स ब्ब्रह्म त्त्यदि-त्त्याचक्षते ॥ १० ॥ पृथिव्व्येव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं व्विद्यात्सर्वस्यात्मनः परायणꣳ

स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ शारीरः पुरुषः स एष वदैव शाकल्ल्य तस्य का देवतेति स्त्रिय इति होवाच ॥ ११ ॥ रूपाण्येव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवासावादित्ये पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति चक्षुरिति होवाच ॥ १२ ॥ आकाश ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवायं वायौ पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति प्प्राण ऽइति होवाच ॥ १३ ॥ काम ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवासौ चन्द्रे पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति मन ऽइति होवाच ॥ १४ ॥ तेज ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवायमग्नौ पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति वागिति होवाच ॥ १५ ॥

तम ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य ऽएवायञ्छायामयः पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति मृत्युरिति होवाच ॥ १६ ॥ आप ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य ऽएवायमप्सु पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति वरुण ऽइति होवाच ॥ १७ ॥ रेत ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य ऽएवायम्पुत्रमयः पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति प्प्रजापतिरिति होवाच ॥ १८ ॥ शाकल्ल्येति होवाच याज्ञवल्क्यः । त्वाꣳ स्विदिमे ब्राह्मणा ऽअङ्गारावक्षयणमक्रताꣳ ऽइति ॥ १९ ॥ याज्ञवल्क्येति होवाच शाकल्ल्यः । यदिदङ्कुरुपञ्चालानाम्ब्राह्मणानत्यवादीः किम्ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्प्रतिष्ठा ऽइति यद्दिशो वेत्थ सदेवाः सप्प्रतिष्ठाः ॥ २० ॥ किन्देवतोऽस्याम्प्राच्यान्दिश्यसीति । आदित्यदेवत ऽइति स ऽआदित्यः कस्मिन्प्रतिष्ठित ऽइति चक्षुषीति कस्मिन्नु चक्षुः प्प्रतिष्ठितम्भवतीति रूपेष्विति

चक्षुषा हि रूपाणि पश्श्यति कस्मिन्नु रूपाणि प्प्रति-
ष्ठितानि भवन्तीति हृदय ऽइति हृदयेन हि रूपाणि
जानाति हृदये ह्येव रूपाणि प्प्रतिष्ठितानि भवन्तीत्येवमे-
वैतद्याज्ञवल्क्य ॥ २१ ॥ किन्देवतोऽस्यान्दक्षिणायान्दिश्श्य-
सीति । यमदेवत ऽइति स यमः कस्मिन्न्प्रतिष्ठित ऽइति
दक्षिणायामिति कस्मिन्नु दक्षिणा प्प्रतिष्ठिता भवतीति
श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणान्ददाति श्रद्धा-
याꣳ ह्येव दक्षिणा प्प्रतिष्ठिता भवतीति कस्मिन्नु श्रद्धा
प्प्रतिष्ठिता भवतीति हृदय ऽइति हृदयेन हि श्रद्धत्ते हृदये
ह्येव श्रद्धा प्प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य
॥ २२ ॥ किन्देवतोऽस्याम्प्रतीच्च्यान्दिश्श्यसीति । वरुण-
देवत ऽइति स वरुणः कस्मिन्न्प्रतिष्ठित ऽइत्यप्स्विति
कस्मिन्न्वापः प्प्रतिष्ठिता भवन्तीति रेतसीति कस्मिन्नु
रेतः प्प्रतिष्ठितम्भवतीति हृदय ऽइति तस्मादपि प्प्रतिरूप-
ञ्जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्म्मित ऽइति हृदये
ह्येव रेतः प्प्रतिष्ठितम्भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥
किन्देवतोऽस्यामुदीच्च्यान्दिश्श्यसीति । सोमदेवत ऽइति
स सोमः कस्मिन्न्प्रतिष्ठित ऽइति दीक्षायामिति कस्मिन्नु
दीक्षा प्प्रतिष्ठिता भवतीति सत्त्य ऽइति तस्मादपि
दीक्षितमाहुः सत्त्यं वदेति सत्त्ये ह्येव दीक्षा प्प्रतिष्ठिता
भवतीति कस्मिन्नु सत्त्यम्प्रतिष्ठितम्भवतीति हृदय ऽइति
हृदयेन हि सत्त्यञ्जानाति हृदये ह्येव सत्त्यम्प्रतिष्ठितम्भव-
तीत्येवमेवैतद्याज्ञवल्क्य ॥ २४ ॥ किन्देवतोऽस्यान्ध्रुवाया-

न्दिश्यसीति । अग्निदेवत इति सोऽग्निः कस्मिन्न्प्रति-ष्ठित ऽइति वाचीति कस्मिन्नु वाक्प्रतिष्ठिता भवतीति मनसीति कस्मिन्नु मनः प्प्रतिष्ठितम्भवतीति हृदय ऽइति कस्मिन्नु हृदयम्प्रतिष्ठितम्भवतीति ॥ २५ ॥ अह-ल्लिकेति होवाच याज्ञवल्क्यः । यत्रैतदन्न्यत्रास्मन्न्मन्न्यासै यत्रैतदन्न्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्व्वयाꣳसि वैनद्विमत्थ्नी-रन्निति ॥ २६ ॥ कस्मिन्नु त्वञ्चात्मा च प्प्रतिष्ठितौ स्थ ऽइति । प्प्राण ऽइति कस्मिन्नु प्प्राणः प्प्रतिष्ठित ऽइत्य-पान ऽइति कस्मिन्न्वपानः प्प्रतिष्ठित ऽइति व्व्यान ऽइति कस्मिन्नु व्व्यानः प्प्रतिष्ठित ऽइत्युदान ऽइति कस्मिन्नूदानः प्प्रतिष्ठित ऽइति समान ऽइति ॥ २७ ॥ स ऽएष नेति नेत्यात्मा । अगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गोऽसितो न सज्यते न व्व्यथत ऽइत्येता-न्न्यष्टावायतनान्न्यष्टौ लोका ऽअष्टौ पुरुषाः स यस्ता-न्पुरुषान्न्व्युदुह्य प्प्रत्युह्यात्यक्रामीत्तन्त्वौपनिषदम्पुरुषम्पृ-च्छामि तञ्चेन्मे न विवक्ष्यसि मूर्द्धा ते व्विपतिष्यतीति तꣳ ह शाकल्ल्यो न मेने तस्य ह मूर्द्धा व्विपपात तस्य हाप्प्यन्न्यन्न्मन्न्यमानाः परिमोषिणोऽस्थीन्न्यपजह्रुः ॥२८॥ अथ ह याज्ञवल्क्य ऽउवाच । ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्व्वे वा मा पृच्छत[1] यो वः काम-यते तं वः पृच्छानि सर्व्वान्न्वा वः पृच्छानीति ते ह ब्ब्राह्मणा न दधृषुः ॥ २९ ॥ तान्न्हैतैः श्लोकैः पप्प्रच्छ ।

(१) "पृच्छथ" इति 'क' पुस्तके ।

यथा व्वृक्षो व्वनस्पतिस्तथैव पुरुषोऽमृषा ॥ तस्य पर्णानि लोमानि त्वगस्योत्पाटिका बहिः ॥ ३० ॥ त्वच ऽएवास्य रुधिरम्प्रस्यन्दि त्वच ऽउत्पटः ॥ तस्मात्तदातुन्नात्प्रैति रसो व्वृक्षादिवाहतात् ॥ ३१ ॥ माᳬसान्न्यस्य शकराणि किनाटᳬ स्नाव तत्स्थिरम् ॥ अस्त्थीन्न्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥ ३२ ॥ यद्वृक्षो व्वृक्कणो रोहति मूलान्नवतरः पुनः ॥ मर्त्त्यः स्विन्मृत्युना व्वृक्कणः कस्मान्मूलात्प्ररोहति ॥ ३३ ॥ रेतस ऽइति मा व्वोचत जीवतस्तत्प्रजायते ॥ जात ऽएव न जायते को न्वेनञ्जनयेत्पुनः ॥ धानारुह ऽउ वै व्वृक्षोऽन्न्यतः प्प्रेत्य सम्भवः ॥ यत्समूलमुद्वृहेयुर्व्वृक्षन्न पुनराभवेत् ॥ मर्त्त्यः स्विन्मृत्युना व्वृक्कणः कस्मान्मूलात्प्ररोहति । विज्ञानमानन्दम्ब्रह्म रातेर्दातुः परायणम् ॥ तिष्ठमानस्य तद्विद ऽइति ॥३४॥

षष्ठाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

———०———

[ उपदिष्टस्यैव ब्रह्मणोऽधिगमने उपायान्तरस्य प्रदर्शनं ब्राह्मणद्वयेन ]

जनको ह व्वैदेह ऽआसाञ्चक्रे । अथ ह याज्ञवल्क्य ऽआवव्राज स होवाच जनको व्वैदेहो याज्ञवल्क्य किमर्त्थमचारीः पशूनिच्छन्नण्वन्तानित्युभयमेव सम्म्राडिति होवाच यत्ते कश्चिदब्रवीत्तच्छृणवामेति ॥ १ ॥ अब्रवीन्म ऽउदङ्कः शौल्ल्वायनः ॥ प्प्राणो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तच्छौल्ल्वायनोऽ-

ब्ब्रवीत्त्प्राणो वै ब्ब्रह्मेत्त्यप्प्राणतो हि किꣳ स्यादित्त्यब्ब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्ब्रवीदित्त्येकपाद्वा ऽएतत्त्सम्म्राडिति ॥२॥ स वै नो ब्ब्रूहि याज्ञवल्क्य । प्प्राण[१] ऽएवायतनमाकाशः प्प्रतिष्ठा प्प्रियमित्त्येनदुपासीत का प्प्रियता याज्ञवल्क्य प्प्राण ऽएव सम्म्राडिति होवाच प्प्राणस्य वै सम्म्राट्कामायायाज्ज्यं य्याजयत्त्यप्प्रतिगृह्यस्य प्प्रतिगृह्णात्त्यपि तत्र व[२]धशङ्का भवति यान्दिशमेति प्प्राणस्यैव सम्म्राट्कामाय प्प्राणो वै सम्म्राट् परमम्ब्रह्म नैनम्प्राणो जहाति सर्व्वाण्ण्येनम्भूतान्न्यभिक्षरन्ति ॥ ३ ॥ देवो भूत्त्वा देवानप्प्येति । य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको व्वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य हरेतेति क ऽएव ते किमब्ब्रवीदिति ॥ ४ ॥ अब्ब्रवीन्न्मे जित्त्वा शैलिनः । व्वाग्ग्वै ब्ब्रह्मेति यथा मातृमान्न्पितृमानाचार्य्यवान्न्ब्रूयात्तथा तच्छैलिनोऽब्ब्रवीद्वाग्ग्वै ब्ब्रह्मेत्त्यवदतो हि किꣳ स्यादित्त्य[३]ब्ब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्ब्रवीदित्त्येकपाद्वा ऽएतत्त्सम्म्राडिति ॥ ५ ॥ स वै नो ब्ब्रूहि याज्ञवल्क्य । व्वागेवायतनमाकाशः प्प्रतिष्ठा प्प्रज्ञेत्त्येनदुपासीत का प्प्रज्ञता याज्ञवल्क्य व्वागेव सम्म्राडिति होवाच व्वाचा वै सम्म्राड्बन्धुः प्प्रज्ञायत ऽऋग्ग्वेदो यजुर्व्वेदः सामवेदोऽ-

(१) "स ऽएवायत०" इति 'ग' 'ज' पुस्तकयोः ।
(२) "वधाशङ्का" इत्युक्तपुस्तकयोः ।
(३) "स्यादब्ब्रवीत्तु" इति 'ग' 'ज' पुस्तकयोः ।

थर्वाङ्गिरस ऽइतिहासः पुराणं विद्या ऽउपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि वाचैव सम्राट् प्रजायन्ते वाग्वै सम्राट् परमम्ब्रह्म नैनं वाग्जहाति सर्वाण्येनम्भूतान्यभिक्षरन्ति ॥६॥ देवो भूत्वा देवानप्येति। य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति क ऽएव ते किमब्रवीदिति ॥ ७ ॥ अब्रवीन्मे वर्क्कुर्वार्ष्णः। चक्षुर्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्रवीदित्येकपाद्वा ऽएतत्सम्राडिति ॥ ८ ॥ स वै नो ब्रूहि याज्ञवल्क्य। चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स ऽआहाद्राक्षमिति तत्सत्यम्भवति चक्षुर्वै सम्राट् परमम्ब्रह्म नैनञ्चक्षुर्जहाति सर्वाण्येनम्भूतान्यभिक्षरन्ति ॥ ९ ॥ देवो भूत्वा देवानप्येति। य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति क ऽएव ते किमब्रवीदिति ॥ १० ॥ अब्रवीन्मे गर्दभीविपीतो भारद्वाजः। श्रोत्रं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यशृण्वतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनम्प्रति-

ष्ठान्न मेऽब्रवीदित्येकपाद्वा ऽएतत्सम्म्राडिति ॥ ११ ॥ स वै नो ब्रूहि याज्ञवल्क्य । श्रोत्रमेवायतनमाकाशः प्प्रतिष्ठानन्त ऽइत्त्येनदुपासीत कानन्तता याज्ञवल्क्य दिश ऽएव सम्म्राडिति होवाच तस्म्माद्वै सम्म्राड्याङ्काञ्च दिशङ्गच्छति नैवास्या ऽअन्तङ्गच्छत्त्यनन्ता हि दिशः श्रोत्रꣳ हि दिशः श्रोत्रं वै सम्म्राट् परमम्ब्रह्म नैनꣳश्रोत्रञ्जहाति सर्वाण्ण्येनम्भूतान्न्यभिक्षरन्ति ॥ १२ ॥ देवो भूत्त्वा देवानप्प्येति । य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य हरेतेति क ऽएव ते किमब्रवीदिति ॥ १३ ॥ अब्रवीन्मे सत्त्यकामो जावालः । मनो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तत्सत्त्यकामोऽब्रवीन्मनो वै ब्रह्मेत्त्यमनसो हि किꣳ स्यादित्त्यब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्रवीदित्त्येकपाद्वा ऽएतत्सम्म्राडिति ॥ १४ ॥ स वै नो ब्रूहि याज्ञवल्क्य । मन ऽएवायतनमाकाशः प्प्रतिष्ठानन्द ऽइत्त्येनदुपासीत कानन्दता याज्ञवल्क्य मन ऽएव सम्म्राडिति होवाच मनसा वै सम्म्राट् स्त्रियमभिहर्य्यति तस्याम्प्रतिरूपः पुत्रो जायते स ऽआनन्दो मनो वै सम्म्राट् परमम्ब्रह्म नैनम्मनो जहाति सर्वाण्ण्येनम्भूतान्न्यभिक्षरन्ति ॥ १५ ॥ देवो भूत्त्वा देवानप्प्येति । य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य

हरेतेति क ऽएव ते किमब्रवीदिति ॥ १६ ॥ अब्रवीन्मे विदग्धः शाकल्ल्यः हृदयं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तच्छाकल्ल्योऽब्रवीद्धृदयं वै ब्रह्मेत्यहृदयस्य हि किंꣳ स्यादित्यब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्रवीदित्येकपाद्वा ऽएतत्सम्म्राडिति ॥ १७ ॥ स वै नो ब्रूहि याज्ञवल्क्य । हृदयमेवायतनमाकाशः प्प्रतिष्ठा स्थितिरित्त्येनदुपासीत का स्थितिता याज्ञवल्क्य हृदयमेव सम्म्राडिति होवाच हृदयं वै सम्म्राट् सर्वेषाम्भूतानाम्प्रतिष्ठा हृदयेन हि सर्वाणि भूतानि प्प्रतितिष्ठन्ति हृदयं वै सम्म्राट् परमम्ब्रह्म नैनꣳ हृदयञ्जहाति सर्वाण्ण्येनम्भूतान्न्यभिक्षरन्ति ॥ १८ ॥ देवो भूत्वा देवानप्प्येति । य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य हरेतेति ॥ १९ ॥

षष्ठाध्याये दशमं ब्राह्मणम् ॥ १० ॥

---

अथ ह जनको वैदेहः कूर्च्चादुपावसर्प्पन्नुवाच । नमस्ते याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्म्राण्णमहान्तमद्धानमेष्ष्यन्रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्मास्येवं व्वृन्दारक ऽआढ्यः सन्नधीतवेद ऽउक्तोपनिषत्क ऽइतो विमुच्च्यमानः क्क गमिष्ष्यसीति नाहन्तद्भगवन्वेद यत्र गमिष्ष्यामीत्यथ

वै तेऽहन्तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवा-
निति ॥ १ ॥ स होवाच । इन्धो वै नामैष योऽयन्दक्षिणेऽ-
क्षन्पुरुषस्तं वा ऽएतमिन्धꣳ सन्तमिन्द्र ऽइत्याचक्षते
परोऽक्षेणेव परोऽक्षप्प्रिया ऽइव हि देवाः प्रत्यक्षद्विषः
॥ २ ॥ अथैतद्वामेऽक्षिणि पुरुषरूपम् । एषास्य पत्नी
विराट् तयोरेष सꣳस्तावो य ऽएषोऽन्तर्हृदय ऽआकाशोऽ-
थैनयोरेतदन्नं य ऽएषोऽन्तर्हृदये लोहितपिण्डोऽथैनयो-
रेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः
सती सञ्चरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति ॥ ३ ॥
ता वा ऽअस्यैताः । हिता नाम नाड्यो यथा केशः
सहस्रधा भिन्न ऽएताभिर्वा ऽएतमास्रवदास्रवति तस्मा-
देष प्प्रविविक्ताहारतर ऽइव भवत्यस्माच्छारीरादात्मनः
॥ ४ ॥ तस्य वा ऽएतस्य पुरुषस्य । प्राची दिक्प्राञ्चः
प्राणा दक्षिणा दिग्दक्षिणाः प्राणाः प्रतीची दिक्प्रत्यञ्चः
प्राणा ऽउदीची दिगुदञ्चः प्राणा ऽऊर्ध्वा दिगूर्ध्वाः प्राणा
ऽअवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः ॥५॥
स ऽएष नेति नेत्यात्मा । अगृह्यो न हि गृह्यतेऽशीर्य्यो
न हि शीर्य्यतेऽसङ्गोऽसितो न सज्ज्यते न व्यथतेऽभयं
वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः स होवाच
जनको वैदेहो नमस्ते याज्ञवल्क्याभयन्त्वागच्छताद्यो नो
भगवन्नभयं वेदयस ऽइमे विदेहा ऽअयमहमस्मीति ॥ ६ ॥

षष्ठाध्याय एकादशं ब्राह्मणम् ॥ ११ ॥

माध्यन्दिनीये शतपथब्राह्मणे पञ्चमः प्रपाठकः ॥५॥ कण्डिकासंख्या ॥१०७॥

इति षष्ठोऽध्यायः ॥ ६ ॥

[ प्रस्तुतस्य ब्रह्मणो व्यतिरिक्तत्वशुद्धत्वाद्वैतत्वादिकप्रदर्शनम् ]

जनकꣳ ह वैदेहं य्याज्ञवल्क्यो जगाम । समेनेन व्वदिष्ष्य ऽइत्त्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदतुस्तस्म्मै ह याज्ञवल्क्यो व्वरन्ददौ स ह कामप्प्रश्नमेव व्वव्रे तꣳ हास्म्मै ददौ तꣳ ह सम्म्राडेव पूर्व्वः पप्प्रच्छ ॥ १ ॥ याज्ञवल्क्य किञ्ज्योतिरयम्पुरुष ऽइति । आदित्त्यज्ज्योतिः सम्म्राडिति होवाचादित्त्येनैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते व्विपर्य्येतीत्त्येवमेवैतद्याज्ञवल्क्य ॥ २ ॥ अस्तमित ऽआदित्त्ये याज्ञवल्क्य । किञ्ज्योतिरेवायम्पुरुष ऽइति चन्द्रज्ज्योतिः सम्म्राडिति होवाच चन्द्रेणैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते व्विपर्य्येतीत्त्येवमेवैतद्याज्ञवल्क्य ॥ ३ ॥ अस्तमित ऽआदित्त्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते किञ्ज्योतिरेवायम्पुरुष ऽइत्त्यग्निज्ज्योतिः सम्म्राडिति होवाचाग्निनैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते व्विपर्य्येतीत्त्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥ अस्तमित ऽआदित्त्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते शान्तेऽग्नौ किञ्ज्योतिरेवायम्पुरुष ऽइति व्वाग्ज्ज्योतिः सम्म्राडिति होवाच व्वाचैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते व्विपर्य्येतीति तस्म्माद्वै सम्म्राडपि यत्र स्वः पाणिर्न्न विनिर्ज्ञायतेऽथ यत्र व्वागुच्चरत्त्युपैव तत्र न्येतीत्त्येवमेवैतद्याज्ञवल्क्य ॥ ५ ॥ अस्तमित ऽआदित्त्ये याज्ञवल्क्य । चन्द्र-

( १ ) "न्येती॰" इति 'ग' 'ज' पुस्तकयोः ।

मस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किञ्ज्योतिरेवाय-
म्पुरुष ऽइत्यात्मज्ज्योतिः सम्म्राडिति होवाचात्मनैवाय-
ञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते विपर्य्येतीति ॥ ६ ॥*
कतम ऽआत्मेति । योऽयं विज्ञानमयः पुरुषः प्प्राणेषु
हृद्यन्तर्ज्ज्योतिः स समानः सन्नुभौ लोकौ सञ्चरति
ध्यायतीव लेलायतीव सधीः स्वप्प्नो भूत्वेमँल्लोकमतिक्क्रामति
॥ ७ ॥ स वा ऽअयम्पुरुषो जायमानः । शरीरमभिस-
म्पद्यमानः पाप्पमभिः सꣳसृज्यते स ऽउत्क्क्रामन्म्रियमाणः
माणः पाप्मनो विजहाति मृत्यो रूपाणि ॥ ८ ॥ तस्य
वा ऽएतस्य पुरुषस्य । द्वे ऽएव स्थाने भवत ऽइदञ्च
परलोकस्स्थानञ्च सन्ध्यन्तृतीयꣳ स्वप्प्नस्स्थानन्तस्म्मि-
न्त्सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदञ्च परलोक-
स्स्थानञ्च ॥ ९ ॥ अथ यथाक्क्रमोऽयम्परलोकस्स्थाने भवति ।
तमाक्क्रममाक्क्रम्म्योभयान्पाप्प्मन ऽआनन्दाँश्च पश्यति
स यत्रायम्प्रस्वपिति[1]त्यस्य लोकस्य सर्व्वावतो मात्रामपादाय
स्वयं विहत्य स्वयन्निर्म्माय स्वेन भासा स्वेन ज्योतिषा
प्प्रस्वपित्यत्रायम्पुरुषः स्वयञ्ज्योतिर्भ्भवति ॥ १० ॥ न
तत्र रथा न रथयोगा न पन्थानो भवन्ति । अथ रथान्र-
थयोगान्पथः सृजते न तत्रानन्दा मुदः प्प्रमुदो भवन्त्यथा-
नन्दान्मुदः प्प्रमुदः सृजते न तत्र वेशान्ताः स्रवन्त्यः[2]
पुष्क्करिण्योः भवन्त्यथ वेशान्ताः स्रवन्तीः पुष्क्करिणीः

* शतम् ७४०० ।

( १ ) "प्रस्वपित्यस्य" इति 'ग' 'ज' पुस्तकयोः ।

( २ ) "स्रवन्त्यः" इत्युक्तपुस्तकयोः ।

सृजते स हि कर्त्ता ॥ ११ ॥ तदुप्येते श्लोकाः । स्वप्नेन शारीरमभिप्प्रहत्यासुप्तः सुप्तानभिचाकशीति ॥ शुक्क्रमादाय पुनरैति स्थानꣳ हिरण्मयः पौरुष ऽएकहꣳसः ॥ १२ ॥ प्राणेन रक्षन्नपरङ्कुलायम्बहिष्क्कुलायादमृतश्चरित्त्वा ॥ स ऽईयते ऽअमृतो यत्रकामꣳ हिरण्मयः पौरुष ऽएकहꣳसः ॥ १३ ॥ स्वप्नान्त ऽउच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ॥ उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्श्यन् ॥ १४ ॥ आराममस्य पश्श्यन्ति । न तङ्कश्चन पश्श्यतीति तन्नायतम्बोधयेदित्त्याहुर्द्दुर्भिषज्यꣳ हास्म्मै भवति यमेष न प्प्रतिपद्यते ॥ १५ ॥ अथो खल्ल्वाहुः । जागरितदेश ऽएवास्यैष यानि ह्येव जाग्ग्रत्पश्श्यति तानि सुप्त ऽइत्त्यत्रायम्पुरुषः स्वयञ्ज्योतिर्भ्भवतीत्त्येवमेवैतद्याज्ञवल्क्य सोऽहम्भगवते सहस्रन्ददाम्म्यत ऽऊर्द्ध्वं विमोक्षायैव ब्ब्रूहीति ॥ १६ ॥ स वा ऽएष ऽएतस्म्मिन्त्स्वप्प्नान्ते । रत्त्वा चरित्त्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्न्यायम्प्रतियोन्न्याद्रवति बुद्धान्तायैव स यदुत्र किञ्चित्पश्श्यत्त्यनन्न्वागतस्तेन भवत्त्यसङ्गो ह्ययम्पुरुष ऽइत्त्येवमेवैतद्याज्ञवल्क्य सोऽहम्भगवते सहस्रन्ददाम्म्यत ऽऊर्द्ध्वं विमोक्षायैव ब्ब्रूहीति ॥ १७ ॥ तद्यथा महामत्स्यः । उभे कूले ऽअनुसञ्चरति पूर्व्वञ्चापरञ्चैवमेवायम्पुरुष ऽएता ऽउभावन्तावनुसञ्चरति स्वप्नान्तञ्च बुद्धान्तञ्च ॥ १८ ॥ तद्यथास्म्मिन्नाकाशे श्येनो वा सुपर्ण्णो वा विपरिपत्त्य श्रान्तः सꣳहृत्त्य पक्षौ सल्लयायैव ध्रियत ऽएवमेवायम्पुरुष

ऽएतस्म्मा ऽअन्ताय धावति यत्र सुप्तो न कञ्चन कामङ्कामयते न कञ्चन स्वप्नम्पश्यति ॥१९॥ ता वा ऽअस्यैताः। हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताणिम्म्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा ऽअथ यत्रैनङ्घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्त्तमिव पतति यदेव जाग्रद्भयम्पश्यति तदत्राविद्यया भयम्मन्यतेऽथ यत्र राजेव देव ऽइवाहमेवेदꣳ सर्व्वमस्म्मीति मन्यते सोऽस्य परमो लोकोऽथ यत्र सुप्तो न कञ्चन कामङ्कामयते न कञ्चन स्वप्नम्पश्यति ॥ २० ॥ तद्वा ऽअस्यैतत्। आत्मकाममाप्तकाममकामꣳ रूपन्तद्यथा प्प्रियया स्त्रिया सम्परिष्ष्वक्तो न बाह्यङ्किञ्चन व्वेद नान्तरमेवमेवायꣳ शारीर ऽआत्मा प्प्राज्ञेनात्मना सम्परिष्ष्वक्तो न बाह्यङ्किञ्चन व्वेद नान्तरम् ॥ २१ ॥ तद्वा ऽअस्यैतत्। अतिच्छन्दोऽपहतपाप्मा-भयꣳ रूपमशोकान्तरमत्र पितापिता भवति मातामाता लोका ऽअलोका देवा ऽअदेवा व्वेदा ऽअवेदा यज्ञा ऽअयज्ञा ऽअत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा पौल्कसोऽपौल्कसश्चाण्डालोऽचाण्डालः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्न्वागतम्पुण्ण्येनानन्न्वागतम्पापेन[1] तीर्णो हि तदा सर्व्वाञ्छोकान्न्हृदयस्य भवति ॥ २२ ॥ यद्वै तन्न पश्यति। पश्यन्न्वै तद्द्रष्टव्यन्न पश्यति न हि द्रष्टुर्दृष्टेर्व्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वि-

(१) "ऽनन्वागतः पुण्येनानन्वागतः पापेन" इति 'ग' 'ज' पुस्तकयोः पाठः।

तीयमस्ति ततोऽन्न्यद्विभक्तं यत्पश्येत् ॥ २३ ॥ यद्वै तन्न जिघ्रति । जिघ्रन्न्वै तद्घ्रातव्यन्न जिघ्रति न हि घ्रातुर्घ्राणाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥ यद्वै तन्न रसयति । विजानन्न्वै तद्रसन्न रसयति न हि रसयितू रसाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यद्रसयेत् ॥ २५ ॥ यद्वै तन्न वदति । वदन्न्वै तद्वक्तव्यन्न वदति न हि वक्तुर्वचो विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यद्वदेत् ॥ २६ ॥ यद्वै तन्न शृणोति । शृण्वन्न्वै तच्छ्रोतव्यन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥ यद्वै तन्न मनुते । मन्न्वानो वै तन्मन्तव्यन्न मनुते न हि मन्तुर्म्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यन्मन्न्वीत ॥ २८ ॥ यद्वै तन्न स्पृशति । पृस्शन्न्वै तत्स्प्रष्टव्यन्न स्पृशति न हि स्प्रष्टु स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥ यद्वै तन्न विजानाति । विजानन्न्वै तद्विज्ञेयन्न विजानाति न हि विज्ञातुर्विज्ञानाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यद्विजानीयात् ॥ ३० ॥ सलिल ऽएको द्रष्टाद्वैतो भवति । एष ब्रह्मलोकः सम्राडिति हैनमुवा-

चैषास्य परमा सम्पदेषोऽस्य परमो लोक ऽएषोऽस्य परम ऽआनन्द ऽएतस्यैवानन्दस्यान्न्यानि भूतानि मात्रामुपजीवन्ति ॥ ३१ ॥ स यो मनुष्याणाᳯं राद्धः समृद्धो भवति । अन्न्येषामधिपतिः सर्व्वैर्म्मानुष्यकैः कामैः सम्पन्नतमः स मनुष्याणाम्परम ऽआनन्दः ॥ ३२ ॥ अथ ये शतम्मनुष्याणामानन्दाः । स ऽएकः पितॄणाञ्जितलोकानामानन्दः ॥ ३३ ॥ अथ ये शतम्पितॄणाञ्जितलोकानामानन्दाः । स ऽएकः कर्म्मदेवानामानन्दो ये कर्म्मणा देवत्वमभिसम्पद्यन्ते ॥ ३४ ॥ अथ ये शतङ्कर्म्मदेवानामानन्दाः । स ऽएक ऽआजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३५ ॥ अथ ये शतमाजानदेवानामानन्दाः । स ऽएको देवलोक ऽआनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३६ ॥ अथ ये शतन्देवलोक ऽआनन्दाः । स ऽएको गन्धर्व्वलोक ऽआनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३७ ॥ अथ ये शतङ्गन्धर्व्वलोक ऽआनन्दाः । स ऽएकः प्प्रजापतिलोक ऽआनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३८ ॥ अथ ये शतम्प्रजापतिलोक ऽआनन्दाः । स ऽएको ब्ब्रह्मलोक ऽआनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहत ऽएष ब्ब्रह्मलोकः सम्म्राडिति हैनमनुशशासैतदमृतꣳ सोऽहम्भगवते सहस्रन्ददाम्म्यत ऽऊर्द्ध्वं विमोक्षायैव ब्ब्रूहीति ॥ ३९ ॥ स वा ऽएष ऽएतस्मिन्न्त्सम्प्रसादे । रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्प्रतिन्न्यायम्प्रतियोन्न्याद्रवति बुद्धान्तायैव

स यदुत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययम्पुरुष ऽइत्येवमेवैतद्याज्ञवल्क्य सोऽहम्भगवते सहस्रन्ददाम्म्युत ऽऊर्द्ध्वं विमोक्षायैव ब्रूहीति ॥ ४० ॥ अत्र ह याज्ञवल्क्यो बिभयाञ्चकार । मेधावी राजा सर्व्वेभ्यो मान्तेभ्य ऽउदरौत्सीदिति स यत्राणिमानन्न्येति जरया वोपतपता वाणिमानन्निगच्छति यथाम्म्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यैतैवमेवायछ शारीर ऽआत्मैभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्प्रतिन्न्यायम्प्रतियोन्न्याद्रवति प्प्राणायैव ॥ ४१ ॥ तद्यथा नः सुसमाहितम् । उत्सर्ज्जद्यायादेवमेवायछ शारीर ऽआत्मा प्प्राज्ञेनात्मनान्न्वारूढ ऽउत्सर्ज्जद्याति ॥ ४२ ॥ तद्यथा राजानमायन्तम् । उग्ग्राः प्प्रत्येनसः सूतग्ग्रामण्ण्योऽन्नैः पानैरावसथैः प्प्रतिकल्प्पन्तेऽयमायात्ययमागच्छतीत्त्येवछ हैवंविदछ सर्व्वाणि भूतानि प्प्रतिकल्प्पन्त ऽइदम्ब्रह्मायातीदमागच्छतीति ॥ ४३ ॥ तद्यथा राजानम्प्रयियासन्तम् । उग्ग्राः प्प्रत्येनसः सूतग्ग्रामण्ण्य ऽउपसमायन्त्येवछ हैवंविदछ सर्व्वे प्प्राणा ऽउपसमायन्ति यत्रैतदूर्द्ध्वोच्छ्वासी भवति ॥ ४४ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

———०———

[ उक्तस्यात्मनोऽङ्गेभ्यः संप्रमोक्षणस्य विस्तरेणोपपादनम् ]

स यत्रायछ शारीर ऽआत्माबल्ल्यन्नीत्य । सम्मोहमिव न्न्येत्त्यथैनमेते प्प्राणा ऽअभिसमायन्ति स ऽएता-

स्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ॥ १ ॥ स यत्रैष चाक्षुषः । पुरुषः पराङ् पर्य्यावर्त्ततेऽथारूपज्ञो भवत्येकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयतीत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत ऽइत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुः ॥ २ ॥ तस्य हैतस्य । हृदयस्याग्रम्प्रद्योतते तेन प्प्रद्योतेनैष ऽआत्मा निष्क्रामति चक्षुष्टो वा मूर्द्ध्नो वान्न्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तम्प्राणोऽनूत्क्रामति प्प्राणमनूत्क्रामन्तꣳ सर्व्वे प्प्राणा ऽअनूत्क्रामन्ति संज्ञानमेवान्ववक्रामति स ऽएष ज्ञः सविज्ञानो भवति तं विद्याकर्म्मणी समन्वारभेते पूर्व्वप्प्रज्ञा च ॥ ३ ॥ तद्यथा तृणजलायुका । तृणस्यान्तङ्गत्वात्मानमुपसꣳहरत्येवमेवायम्पुरुष ऽइदꣳ शरीरन्निहत्याविद्याङ्गमयित्वात्मानमुपसꣳहरति ॥४॥ तद्यथा पेशस्कारी । पेशसो मात्रामपादायान्न्यन्नवतरङ्कल्ल्याणतरꣳ रूपन्तनुत ऽएवमेवायम्पुरुष ऽइदꣳ शरीरन्निहत्याविद्याङ्गमयित्वान्यन्नवतरङ्कल्ल्याणतरꣳ[1] रूपन्तनुते पित्र्यं वा गान्धर्व्वं वा ब्ब्राह्मं वा प्प्राजापत्यं वा दैवं वा मानुषं वान्न्येभ्यो वा भूतेभ्यः ॥५॥ स वा ऽअयमात्मा । ब्ब्रह्म विज्ञानमयो मनोमयो वाङ्मयः प्प्राणमयश्चक्षुर्म्मयः श्रोत्रमय ऽआकाशमयो वायुमयस्तेजोमय ऽआपोमयः पृथिवीमयः क्क्रोधमयोऽक्क्रोधमयो हर्षमयोऽहर्षमयो धर्म्ममयोऽधर्म्ममयः सर्व्वमयस्तद्यदेदम्मयोऽ-

(१) "०० नवतरꣳ रूपन्तनुते" इति 'ग' 'ज' पुस्तकयोः ।

दोमय ऽइति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्ब्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्म्मणा भवति पापः पापेनेति ॥ ६ ॥ अथो खल्वाहुः । काममय ऽएवायम्पुरुष ऽइति स यथाकामो भवति तत्क्रतुर्ब्भवति यत्क्रतुर्ब्भवति तत्कर्म्म कुरुते यत्कर्म्म कुरुते तदभिसम्पद्यत ऽइति ॥ ७ ॥ तदेष श्लोको भवति । तदेव सक्तः सह कर्म्मणैति लिङ्गम्मनो यत्र निषक्तमस्य ॥ प्राप्यान्तङ्कर्म्मणस्तस्य यत्किञ्चेह करोत्ययम् ॥ तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्म्मण ऽइति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम ऽआत्मकाम ऽआप्तकामो भवति न तस्मात्प्राणा ऽउत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येति ॥ ८ ॥ तदेष श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः[1] ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत ऽइति ॥ ९ ॥ तद्यथाहिनिर्ल्वयनी । वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदः शरीरः शेतेऽथायमनस्थिः प्राज्ञ ऽआत्मा ब्रह्मैव लोक ऽएव सम्राडिति होवाच याज्ञवल्क्यः सोऽहम्भगवते सहस्रन्ददामीति होवाच जनको वैदेहः ॥ १० ॥ तदप्येते श्लोकाः । अणुः पन्था वितरः पुराणो माꣳ स्पृष्टोऽनुवित्तो मयैव । तेन धीरा ऽअपियन्ति ब्रह्मविद ऽउत्क्रम्य स्वर्गँल्लोकमितो विमुक्ताः ॥ ११ ॥ तस्मिञ्छुक्लमुत

(१) "स्थिताः" इति 'ग' 'ज' पुस्तकयोः ।

नीलमाहुः पिङ्गलꣳ हरितँल्लोहितञ्च ॥ एष पन्था ब्ब्रह्मणा हानुवित्तस्तेनैति ब्ब्रह्मवित्तैजसः पुण्यकृच्च ॥ १२ ॥ अन्धन्तमः प्प्रविशन्ति येऽसम्भूतिमुपासते ॥ ततो भूय ऽइव ते तमो य ऽउ सम्भूत्याꣳ रताः ॥ १३ ॥ असुर्या नाम ते लोकाः । अन्धेन तमसावृताः ॥ ताँस्ते प्प्रेत्यापिगच्छन्त्यविद्वाꣳसोऽबुधा जनाः ॥ १४ ॥ तदेव सन्तः । तदु तद्भवामो न चेदवेदी महती व्विनष्टिः ॥ ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ति ॥१५॥ आत्मानञ्चेद्विजानीयात् । अयमस्मीति पूरुषः ॥ किमिच्छङ्कस्य कामाय शरीरमनु सञ्चरेत् ॥ १६ ॥ यस्यानुवित्तः प्प्रतिबुद्ध ऽआत्मा । अस्म्मिन्त्सन्देहे गहने प्प्रविष्टः ॥ स व्विश्श्वकृत्स हि सर्वस्य कर्त्ता तस्य लोकः स ऽउ लोक ऽएव ॥ १७ ॥ यदैतमनुपश्श्यति । आत्मानन्देवमञ्जसा ॥ ईशानम्भूतभव्व्यस्य न तदा व्विचिकित्सति ॥ १८ ॥ यस्म्मिन्न्पञ्च पञ्चजनाः । आकाशश्च प्प्रतिष्ठितः ॥ तमेव मन्न्य ऽआत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥१९॥ यस्म्मादर्वाक्सँवत्सरः । अहोभिः परिवर्त्तते ॥ तद्देवा ज्ज्योतिषाञ्ज्योतिरायुर्होपासतेऽमृतम् ॥२०॥ प्राणस्य प्प्राणम् । उत चक्षुषश्चक्षुरुत श्श्रोत्रस्य श्श्रोत्रमन्नस्यान्नम्मनसो ये मनो विदुः ॥ ते निचिक्क्युर्ब्ब्रह्म पुराणमग्ग्रयम्मनसैवाप्तव्व्यन्नेह नानास्ति किञ्चन ॥ २१ ॥ [ अर्धः प्रपाठकः ॥६४॥ ] मृत्योः स मृत्युमाप्प्नोति य ऽइह नानेव पश्श्यति ॥ मनसैवानुद्रष्टव्-

(१) 'ग' 'ज' पुस्तकयोः "पुरुषः" इति पाठो दृश्यते । स तु प्रामादिक एव प्रतीयते 'पूरुषोऽवसाने' ( शु० य० प्रा० शा० ३. १२० ) इति दीर्घनिपातनात् ।

ऽव्यमेतदप्प्रमयन्ध्रुवम् ॥२२॥ व्विरजः पर ऽआकाशात् । अज ऽआत्मा महान्ध्रुवः ॥ तमेव धीरो विज्ञाय प्प्रज्ञाङ्कुर्वीत ब्ब्राह्मणः ॥ नानुध्यायाद्बहूञ्छब्दान्व्वाचो विग्ग्लापनꣳ हि तदिति ॥२३॥ स वा ऽअयमात्मा । सर्व्वस्य व्वशी सर्व्वस्येशानः सर्व्वस्याधिपतिः सर्व्वमिदम्प्रशास्ति यदिदङ्किञ्च स न साधुना कर्म्मणा भूयान्नो ऽएवासाधुना कनीयानेष भूताधिपतिरेष लोकेश्श्वर ऽएष लोकपालः स सेतुर्व्विधरण ऽएषाँल्लोकानामसम्भेदाय ॥ २४ ॥ तमेतं व्वेदानुवचनेन विविदिषन्ति । ब्ब्रह्मचर्य्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्ब्भवत्येतमेव प्प्रव्व्राजिनो लोकमीप्प्सन्तः प्प्रव्व्रजन्ति ॥ २५ ॥ एतद्ध स्म वै तत्पूर्व्वे ब्ब्राह्मणा ऽअनूचाना विद्वाꣳसः प्प्रजान्न कामयन्ते किम्प्रजया करिष्ष्यामो येषान्नोऽयमात्मायँल्लोक ऽइति ते ह स्म पुत्त्रैषणायाश्च्च वित्तैषणायाश्च्च लोकैषणायाश्च्च व्व्युत्थायाथ भिक्षाचर्य्यञ्चरन्ति या ह्येव पुत्त्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते ऽएषणे ऽएव भवतः ॥ २६ ॥ स ऽएष नेति नेत्यात्मा । अगृह्यो नहि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गोऽसितो न सज्यते न व्व्यथत ऽइत्यतः पापमकरवमित्यतः कल्ल्याणमकरवमित्युभे ऽउभे ह्येष ऽएते तरत्यमृतः साद्ध्वसाधुनी नैनङ्कृताकृते तपतो नास्य केन चन कर्म्मणा लोको मीयते ॥ २७ ॥ तदेतदृचाब्भ्युक्तम् । एष नित्त्यो महिमा ब्ब्राह्मणस्य न कर्म्मणा

( २ ) "महा ध्रुवः" इति 'ग' 'ज' पुस्तकयोः ।

वर्द्धते नो कनीयान् ॥ तस्यैव स्यात्पदवित्तं विदित्वा न कर्म्मणा लिप्यते पापकेनेति तस्मादेवंविच्छान्तो दान्त ऽउपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्न्येवात्मानम्पश्श्ये- त्सर्वमेनम्पश्यति सर्वोऽस्यात्मा भवति सर्वस्यात्मा भवति सर्वम्पाप्मानन्तरति नैनम्पाप्मा तरति सर्वम्पाप्मानन्त- पति नैनम्पाप्मा तपति विपापो विजरो विजिघत्सोऽपि- पासो ब्ब्राह्मणो भवति य ऽएवं व्वेद ॥ २८ ॥ स वा ऽएष महानज ऽआत्मा। अन्नादो वसुदानः स यो हैवमेतम्म- हान्तमजमात्मानमन्नादं वसुदानं व्वेद विन्दुते व्वसु ॥ २९ ॥ स वा ऽएष महानज ऽआत्मा। अजरोऽमरोऽभयोऽ- मृतो ब्ब्रह्माभयं व्वै जनक प्प्राप्तोऽसीति होवाच याज्ञ- वल्क्यः सोऽहम्भगवते विदेहान्ददामि माञ्चापि सह दास्यायेति ॥ ३० ॥ स वा ऽएष महानज ऽआत्मा। अज- रोऽमरोऽभयोऽमृतो ब्ब्रह्माभयं व्वै ब्ब्रह्माभयꣳ हि वै ब्ब्रह्म भवति य ऽएवं व्वेद ॥ ३१ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

[ आत्मज्ञाने आगमेनाधिगतस्यामृतत्वसाधनत्वस्य तर्केणापि प्रतिपादनम्, याज्ञवल्क्यकाण्डस्याचार्यपरम्परोपदेशश्च ]

अथ ह याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुः। मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्ब्रह्मवादिनी बभूव स्त्रीप्प्रज्ञैव कात्यायनी सोऽन्न्यद्वृत्तमुपाकरिष्ष्यमाणः ॥ १ ॥ याज्ञवल्क्यो मैत्रेयीति होवाच। प्प्रव्रजिष्ष्यन्न्वा ऽअरेऽ-

हमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तङ्करवाणीति ॥ २ ॥ सा होवाच मैत्रेयी । यन्नु म इयम्भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यान्न्वहन्तेनामृताहो३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवताञ्जीवितन्तथैव ते जीवितꣳ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥ ३ ॥ सा होवाच मैत्रेयी । येनाहन्नामृता स्याङ्किमहन्तेन कुर्य्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ४ ॥ स होवाच याज्ञवल्क्यः । प्रिया खलु नो भवती सती प्रियमवृतद्धन्त खलु भवति तेऽहन्तद्वक्ष्यामि व्याख्यास्यामि ते वाचन्तु मे व्याचक्षाणस्य निदिध्यासस्वेति ब्रवीतु भगवानिति ॥ ५ ॥ स होवाच याज्ञवल्क्यः । न वा ऽअरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा ऽअरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वा ऽअरे पुत्राणाङ्कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा ऽअरे वित्तस्य कामाय वित्तम्प्रियम्भवत्यात्मनस्तु कामाय वित्तम्प्रियम्भवति न वा ऽअरे ब्रह्मणः कामाय ब्रह्म प्रियम्भवत्यात्मनस्तु कामाय ब्रह्म प्रियम्भवति न वा ऽअरे क्षत्रस्य कामाय क्षत्रम्प्रियम्भवत्यात्मनस्तु कामाय क्षत्रम्प्रियम्भवति न वा ऽअरे लोकानाङ्कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा ऽअरे देवानाङ्कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वा ऽअरे

व्वेदानाङ्कामाय व्वेदाः प्प्रिया भवन्त्यात्मनस्तु कामाय व्वेदाः प्प्रिया भवन्ति न वा ऽअरे यज्ञानाङ्कामाय यज्ञाः प्प्रिया भवन्त्यात्मनस्तु कामाय यज्ञाः प्प्रिया भवन्ति न वा ऽअरे भूतानाङ्कामाय भूतानि प्प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्प्रियाणि भवन्ति न वा ऽअरे सर्व्वस्य कामाय सर्व्वम्प्रियम्भवत्यात्मनस्तु कामाय सर्व्वम्प्रियम्भवत्यात्मा व्वरे[1] द्रष्टव्व्यः श्श्रोतव्व्यो मन्तव्व्यो निदिद्ध्यासितव्व्यो मैत्रेय्यात्मनि व्वा ऽअरे दृष्टे श्श्रुते मते व्विज्ञात ऽइदꣳ सर्व्वं विदितम् ॥ ६ ॥

ब्रह्म तम्परादात् । योऽन्न्यत्रात्मनो ब्ब्रह्म व्वेद क्षत्रन्तम्परादाद्योऽन्न्यत्रात्मनः क्षत्रं व्वेद लोकास्तम्परादुर्य्योऽन्न्यत्रात्मनो लोकान्व्वेद देवास्तम्परादुर्य्योऽन्न्यत्रात्मनो देवान्व्वेद व्वेदास्तम्परादुर्य्योऽन्न्यत्रात्मनो व्वेदान्व्वेद यज्ञास्तम्परादुर्य्योऽन्न्यत्रात्मनो यज्ञान्व्वेद भूतानि तम्परादुर्य्योऽन्न्यत्रात्मनो भूतानि व्वेद सर्व्वन्तम्परादाद्योऽन्न्यत्रात्मनः सर्व्वं व्वेदेदम्ब्रह्मेदं क्षत्रमिमे लोका ऽइमे देवा ऽइमे व्वेदा ऽइमे यज्ञा ऽइमानि भूतानीदꣳ सर्व्वं य्यदयमात्मा ॥ ७ ॥

स यथा दुन्दुभेर्हन्न्यमानस्य न बाह्याञ्छब्दाञ्छक्क्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्ग्रहणेन दुन्दुब्भ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥ स यथा व्वीणायै व्वाद्यमानायै । न बाह्याञ्छब्दाञ्छक्क्नुयाद्ग्रहणाय व्वीणायै तु ग्ग्रहणेन व्वीणावादस्य वा शब्दो गृहीतः ॥९॥ स यथा शङ्खस्य ध्मायमानस्य । न

(१) "न्वरे" इति 'ग' 'ज' पुस्तकयोः ।

